Madhvācārya has refuted the wrong expositions of previous commentators of the ब्रह्मसूत्रs and god Vāyu belongs to Lord Viṣṇu as he is born from the breath of the Lord. (iii) Lord Viṣṇu grants perfect bliss, in liberation, to Śrī Madhvācārya and others who have refuted all the wrong commentators. (*Read* also : अत एव यन्माता यस्य प्रमाता अयमानन्दतीर्थः यः परमात्मा निर्माता यस्येति वा, यः माता जननी यस्येति वा, एतादृशः चतुर्मुखः सन् पतिं परमात्मानं अयत् इत्यपि व्याख्येयम्। वायुजन्मनि मोक्षाभावेऽपि चतुर्मुखः सन् परमात्मनाभिकमलाद् यदा उत्पद्यते तदैव तस्य परमात्मा जननीरूपश्च भवति। स्वशरीरादपत्योत्पादकत्वेन तस्य मातृत्वात्। तदनन्तरं तस्य मोक्ष इति भावः। (ना)] c) या. reads उज्झितपरमानं दंपत्याद्याद्याश्रमैः together and explains that this removes a probable doubt : "The mind of each and every soul is contaminated by internal enemies like *kāma* or passion. As a result, how can there arise right knowledge conducive to ध्यान or meditation ?" The reply is : "The internal enemies (पर) will be driven away (उज्झित) by the grace of Lord Viṣṇu pleased by the performance of वर्णाश्रमोचितकर्मs and hence right knowledge (मान) leading to ध्यान is possible to them by His grace". [ननु कामादिवैरिकलुषिते मनसि श्रवणादिना ज्ञानमेव न संभवति। अतः कथं ध्यायेदिति ध्यानविधिरित्याशङ्कायां स्वस्वाश्रमविहित-निवृत्तकर्मभिः परिहृतकामादिवैरिणा प्रसन्नो विष्णुरेव ध्यानोपयुक्तं ज्ञानं ददातीत्याशयेनाह उज्झितेत्यादिना। दंपतीशब्देन गृहस्थाश्रमो लक्ष्यते। एवं च तस्य आद्यः ब्रह्मचर्याश्रमः दंपत्याद्य एव आद्यो येषां ते दंपत्याद्याद्याः ते च ते आश्रमाश्च तैः तत्तदाश्रमविहितकर्मभिरिति यावत्। उज्झिताः परिहृताः परे कामादिवैरिणो येषां ते उज्झितपराः तेषां मानं ज्ञानं यस्मात्स उज्झितपरमानः तं। [तेषां प्रतिबन्धकध्वंसपूर्वकं ज्ञानदमित्यर्थः।](या).
(v) **दम्पत्याद्याद्याश्रमैस्सदैवपरमानन्दम्** – a) दंपत्याद्याद्याश्रमैर्वर्णाश्रमो-चितकर्मभिः करणैः सदैवान्विष्णुपूजकान्पातीति सदैवपः रः रतिश्च मा ज्ञानं च अनं चेष्टा च अत्र नुमागम एकवद्भावो वा बोध्यः। तानि ददातीति

रमानन्दश्च रमाया अनं चेष्टां ददातीति वा। सदैवपश्चासौ रमानन्दश्च तथा तम्। प्रथमं परमानन्दमित्यत्र परमा श्रीर्येभ्यस्तान्नन्दयतीति वा। परा चासौ मा च परमा तस्या आनन्दो यस्मादिति वा। पराणां मया ज्ञानेन आनन्दो यस्मादिति वा। तेषां मा नन्दौ ज्ञानसुखे यस्मादिति वा। परम आनन्दो यस्येति वा। परं आनन्दमिति पदद्वयं वा ज्ञेयम्। (त) It means : Lord Viṣṇu is सदैवपः as He protects His worshippers together with gods who worship Him by performing their duties befitting to their वर्ण and आश्रम. He is also रमानन्दः as He bestows pleasure (र), knowledge (मा) and activity (अन); or because He grants activity to Goddess Lakṣmī (रमा). Thus He is both सदैवपः and रमानन्दः. Further the word परमानन्दम् in ध्यायेत्परमानन्दम् can mean (i) Lord Viṣṇu delights those good souls who consider Goddess Lakṣmī as superior to them; (ii) Goddess Lakṣmī derives Her bliss from Lord Viṣṇu; (iii) Lord Viṣṇu grants bliss being pleased by the knowledge of superior souls; (iv) Superior souls derive their knowledge and bliss from Lord Viṣṇu; (v) Lord Viṣṇu's bliss is the supremest. Accordingly we have (1) परमानंदम्, (2) अपरमानन्दम्, (3) परमानं दं... and (4) सदैवप+रमानन्दम्. b) दंपत्याद्याद्याश्रमैः। वर्णाश्रमोचितस्वकर्मभिः सं सृतं अनुसृतं पूजितमिति यावत्। यद्दैवं परदैवतं विष्ण्वाख्यं तत्। पालकत्वात्पम्। वर्णाश्रमोचितस्वकर्मभिराराधकान् जनान् पातीति यावत्। सं च तत् दैवं च तत् पं चेति-सदैवपमिति विग्रहः। दैवविशेषणत्वान्नपुंसकता। तदुक्तं 'तदिदं परमं दैवमिज्यते यैः स्वकर्मभिः। वर्णाश्रमोचितैस्तान्हि पाति विष्णुर्न चेतरानि'ति। रं रतिः मा ज्ञानं अनश्चेष्टा। द्वन्द्वैकवद्भावः। तत् ददातीति रमानन्दस्तं सर्वेषां च यथायोग्यं रतिज्ञानगतिप्रदमित्यर्थः। अथवा रमाया अनं चेष्टां ददातीति रमानन्दस्तमिति। सदैवपश्चासौ रमानन्दश्चेति कर्मधारयः॥ (भ). Here also it is सदैवप+रमानन्दम्. But सदैवप is split into स+दैव+प meaning Lord Viṣṇu is स as He is सृत (=अनुसृत=पूजित) by good souls through their वर्णाश्रमोचितकर्मs. He is also दैव (=परदैवत) the supreme

Deity. And He is प because He protects. He protects all those who worship Him through the performance of their duties befitting to their वर्ण and आश्रम. (cf : स्वविहितवृत्त्या भक्त्या भगवदाराधनमेव परमो धर्मः। गीतातात्पर्यपीठिका). Further, Lord Viṣṇu is रमानन्द because He grants pleasure (र), knowledge (मा) and activity (अन) to all souls due to their nature; or, He is रमानन्द because He grants activity to रमा. c) **सदैवाः** स्वविहितकर्मानुष्ठानसाध्यपुण्यसम्पन्नाः तेषां **परस्य** परब्रह्मणः **मा** ज्ञानं **आनन्दश्च** यस्मात्सः **सदैवपरमानन्दः** तम्। 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति' इति श्रुतेः। भगवन्तमेव तैस्तैर्विशेषणैर्विशेषयता न केवलेन कर्मणा वा कर्मफलं, ज्ञानेन वा ज्ञानफलं, किं तु तत्साध्यभगवत्प्रसादेनैवेति सूचितम्।(ना) **Here** सदैवाः means those good souls who have acquired religious merit through the performance of their वर्णाश्रमोचितकर्मs. Even they obtain knowledge of Lord Viṣṇu and bliss, through His grace. It is asserted that कर्म by itself cannot yield its fruit. So too ज्ञान by itself cannot yield its fruit. But they yield their fruits by the grace of the Lord resulting from particular कर्म and ज्ञान. (*Read* also : जायाया जम्भावद्म्भावौ निपात्याविति वचनात् पूर्वपदजायाशब्दस्य दमित्यादेशः। तस्य पूर्वपदान्तस्थत्वेऽपि न यतिभङ्गदोषः शङ्कनीयः। यतेः पादान्त एव पादावसानेन कृतत्वात्।(ना)] c) या. takes only सदैव परमानन्दः and interprets that every soul secures always its own inherent bliss at liberation from Lord Viṣṇu. And this is a reply to a possible question. "What is the fruit of विष्णुध्यान?" [नन्वेवं ध्यातो विष्णुः किं फलं ददातीत्यपेक्षायां नित्यशुद्धानन्दरूपं मोक्षं ददातीत्याशयेनाह **सदैवेति। सदैव परमः** नित्यः शुद्धः स्वरूपभूत इति यावत्। **आनन्दो** यस्मात्स तथोक्तस्तमित्यर्थः।(या)] Further या. gives the interpretation of the verse understanding माता = प्रमाता = ध्याता = ब्रह्मा, raising a question - "Are there any souls who have obtained liberation by विष्णुध्यान ? If not, who will believe the

efficacy of विष्णुध्यान ? If yes, who are such souls who have obtained bliss of liberation herebefore ?". The reply is : "There are many many souls including Brahmā and other gods who had resorted to Lord Viṣṇu in the previous creation to secure bliss through विष्णुध्यान and they were all granted such bliss by Him. [यद्वा, ननु विष्णुध्यानेन पूर्वं मुक्तिं प्राप्ताः केचित्सन्ति चेत्तर्हि तस्मिन् ध्यानविधौ विश्वासो भविष्यतीत्यपेक्षायां तादृशाः संतीत्याह **यन्मातेति।** **यन्माता** यत्प्रमाता यद्ध्यातेति यावत्। ब्रह्मा दंपत्याद्याद्याश्रमैः संपूर्णब्रह्मचर्याद्याश्रमसंपन्नैर्देवादिभिस्सह। **पतिं** पालकं स्वोपास्यं विष्णुं। **अयत्** प्राप। ततश्च पूर्वकल्पे विष्णुध्यानेन तत्प्राप्तिरूपमुक्तिमंतो ब्रह्माद्याः संतीत्युक्तं भवति।(यां)] Then, in this interpretation, **अपरमानन्दम्** and **उज्झितपरमानम्** serve as epithets of विष्णुम्. अपरमः = न विद्यते परमः यस्य = Lord Viṣṇu has none superior to Him. आनन्दः = आनन्दयति इति = He delights. उज्झितपरमानम् = ध्वंसितवैरिदर्पम् = He has destroyed the pride of enemies. Thus Lord Viṣṇu is the Supermost, is the Delighter, and is the Destroyer of enemies who cause all evils. Hence He alone is fit to be meditated upon. [अस्यां योजनायां विष्णोरेव ध्येयत्वमुपपादयितुं अपरमानंदं उज्झितपरमानमिति विशेषणद्वयम्। न विद्यते परमो यस्मात्सोऽपरमः आनन्दयतीत्यानन्दः। (अहिकुण्डलाधिकरणन्यायेन आनन्दविशिष्टः आनन्दरूपश्च) ततः कर्मधारयः। उज्झितपरमानं ध्वंसितवैरिदर्पं। ततश्च विष्णोः सर्वोत्तमतया विशिष्टत्वात् आनन्ददातृत्वेन अनिष्टजनकवैरिदर्पहंतृत्वेन चेष्टत्वात्॥ [विष्णुत्वेनाधिकृत-कृष्णाभेदलाभेनाधिकृतत्वाच्च] तस्यैव ध्येयत्वमुपपन्नमिति॥ (या)] And Lord Viṣṇu is Kṛṣṇa Himself who is lauded in this poem. As shown above, each **परमानन्दम्** has a different meaning, giving rise to यमकालङ्कार named **सर्वपादान्त्ययमक।** [Note : **ध्यायेत् परमानन्दं** – "ध्यायेत् तं परमानन्दम्" इति प्र.पाठः नरहरितीर्थीयव्याख्यावाक्यसाङ्कर्येण भ्रमप्राप्तः। अनुष्टुभ्बद्धायास्तस्या ह्ययमाद्यः पादः। – B.]

(2) (पदच्छेदः) यस्य। करालः। अलं। चक्रं। कालः। परस्य। हि। करालोलं। यस्य। गदा। पवमानः सन्। वि। आ। सः। (व्यासः)। अभवत्। सत्। आपवमानः॥

This verse states that Lord Viṣṇu Himself incarnated as the well known Sage Vyāsa, who composed among others the voluminous and authoritative work *'Mahābhārata'*. या. observes : अथ भारतस्याप्तकृततया प्रामाण्यमस्तीति सूचनाय तत्कर्तुर्व्यासस्य भगवदवतारत्वेनाप्तत्वं भगवतोऽपि सशरीरस्यैव प्रळयेऽवस्थित्या जगद्व्यापारोपयुक्तं नानावतारकरणं च सूचयति **यस्येति**।(या). It means : Firstly the *Mahābhārata* is a valid authority as it has been composed by Lord Viṣṇu Himself as Vyāsa. Secondly during the state before the world-creation, Lord Viṣṇu was possessing His divine body and was engaged in manifesting Himself in various forms for the welfare of the world. During that state before the world-creation, Kāla or Durgā was His disc and Pavamāna or Vāyu was His mace. (I) **यस्य परस्य अलं करालः कालः करालोलं चक्रम्।** (i) **यस्य परस्य** पूर्वकालीनस्य प्रळयेऽवस्थितस्येति यावत् नारायणस्य। **अलं** अत्यन्तं। **करालः** क्रूरः। **कालः** कालाख्यदुर्गात्मकलक्ष्मीरूपविशेषः (महतश्चतुर्मुखादित्यादाविव अभिमताभिमानिनोरभेदव्यपदेशः।) **करालोलं** करे सम्यक्भ्रमत्। **चक्रं**।(या). Lord Viṣṇu alone was existing during the period of *pralaya* or world-dissolution or before the beginning of the creation of the world. Then Durgā, the form of Goddess Lakṣmī, called Kāla, was the terrific disc revolving in His hand. (ii) स एष भगवान्विष्णुर्यतश्चक्रगदाधरः। सर्वसंहारकं चक्रं दुर्गारूपं हि यत्करे॥ कालात्मकं यतः कालो नरसिंहो भयंकरः। अनन्तसुकरालास्यकर-श्रीमत्पदाम्बुजः॥ जानानो हि मरुत्सर्वं गदारूपो हि यत्करे। प्रलयेऽपि स वै देवः श्रीमन्नारायणोऽवसत्(वसन्)॥(टी). (iii) स एष भगवान्विष्णु-र्यतश्चक्रगदाधरः अतः प्रलये दुर्गारूपं चक्रं यत्करे तिष्ठति गदारूपो मुक्तो मरुत् यत्करे तिष्ठतीति शेषेणान्वयः। अमुक्तयोः काममरुतोस्तदा

तदभिमानाभावात्। अभिमन्यमानयोर्जडयोश्चक्रगदयोः स्वकारणे लयाच्चिद्रूपे एव चक्रगदे ग्राह्ये। अत एव 'मुक्तमाला विमुक्तद्रुहिणगणतनुः' इति त्रिविक्रमाचार्योक्तिः। स वै देव इति यत्करे दुर्गारूपं चक्रं गदारूपः पवमानः स वै स एव देवो नारायणः प्रलयेप्यवसत् इत्यन्वयः।... यः पूर्वश्लोके परमानन्दत्वेन वर्णितः **स हि** स एव **परः** श्रीमन्नारायणोऽभवत् अवसत् प्रलयेऽपि इति शेषः। स कः **चक्रं** सर्वसंहारकं दुर्गारूपं दुर्गानामकम्। लक्ष्म्या इति शेषः। **कालः** कालात्मकं कालनामकं च यस्य सः **करालोलं** करेणालोल्यते परिभ्राम्यते स्वव्यापारे प्रेर्यते तत्तथा। कुत एतत्। यतो विष्णुश्चक्रधरः पुनः स कः यः **कालः** कालयति द्रावयति छेदयतीति वा कालो नरसिंहः ब्रह्मादिसंहर्तेत्यर्थः। कीदृशः **कालः अलं करालः** भयंकरः। कुतो भयंकरः यतोऽनन्तसुकरालास्यकर-श्रीमत्पदाम्बुजः।(टि)] (iv) 'नृत्यते प्रलये देवो नृसिंहाकृतिरीश्वर' इति नृसिंहस्य प्रलयस्थितिवचनात् प्रलये स्थितो विष्णुरेवेति सिध्यतीति भावेनाह। **योऽलं कराल** इति। यः प्रलये स्थितः अलं करालः अतिक्रूरास्यकरचरणाद्यवयववान् कालो भयंकरो नरसिंह इत्यर्थः। हि शब्दः उक्तार्थे प्रमाणप्रसिद्धिद्योतकः।(भ) All the three टी. टि. and भ. maintain that Lord Viṣṇu was existing in the state of *pralaya* in the form of extremely terrible Narasimha as indicated by the words **अलं कराल** and **काल**. The word **काल** applies to both Durgā and Lord Narasiṁha. ना. raises an objection and replies : ननु तथापि 'सदेव सोम्येदमग्र आसीत्' इति श्रुतौ जगत्कारणं किंचित्सच्छब्दवाच्यं प्रतीयते तच्च बहुभावाद्विकारि प्रकृत्यादिकमेव युक्तं अतः कथमसौ ध्येय इत्यत आह **यस्य करालोलमिति**। यः परमात्मा सन् सच्छब्दवाच्यः तत्राप्ययमेवोच्यत इति भावः।... **परः स हि करालोलम्**। **सः परः परमात्मा अलमत्यर्थं करालः कालः (कालपदवाच्यः) एव**। हि श्रुत्यादिप्रसिद्ध इत्यर्थः।(ना). It means : In the previous (first) verse it has been stated ध्यायेत्परमानन्दम् which lays down that the Lord, the Creator of this universe should be meditated upon for one's welfare here in the world and for liberation hereafter. But it is not right to assert that the Lord is the World-creator. Because the

scriptures clearly declare : सदेव **सोम्येदमग्र आसीत्** which means 'In the beginning there was only *Sat* or Being'. And this Being became many. Hence it should be concluded that this Being, and not the Lord, is the cause of the world. In reply to this contention, this second verse clarifies that in the scriptural statement सदेव &c. सत् means only the Lord and not insentient being like *Prakṛti* as the contender above seems to suppose. *Read also :* स एव भगवान्विष्णुः परमानन्द इत्यपि। बोधयन्तो महान्तोऽथ प्रथमं प्रलये स्थितम्॥ वदन्ति श्रीमदाचार्या यस्येत्यादिगिराऽमरान्॥ (टी). पूर्वश्लोकेनोत्तरश्लोकं संगमयति। स एष इति। एकवाक्यत्वसिद्धये। न च भिन्नवाक्यत्वम्। संभवत्येकवाक्यत्वे भिन्नवाक्यत्वाङ्गीकारस्यानुचितत्वात्। अथवाऽभवदिति अत्रापि क्रियापदश्रवणेन पूर्वश्लोकोक्तक्रियाकाङ्क्षाभावात्। स एष इत्यादिना पूर्वश्लोकोक्तमनुवदति प्रलये स्थितिं बोधयितुम्। न चेदं न वक्तव्यमेव यस्य लक्ष्म्यादिप्राप्यत्वं तस्यैव नारायणस्य प्रलये 'एको नारायण आसीदि'त्यादिना अवस्थित्युक्तेः। न च 'वासुदेवो वा इदमग्र आसीदि'ति श्रवणात्कथं नारायणस्यैवावस्थानमिति वाच्यम्। तद्वाक्यस्य नारायणाभेदाभिप्रायेण शक्तिरूपाभिप्रायेण वा ईश्वरसर्गप्रस्तावे वासुदेवरूपस्य प्रथमं व्यक्त्यभिप्रायेण वा प्रवृत्तेः। अन्यथा 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इत्यादि वाक्यानां निर्विषयत्वापत्तेः। अत एव 'असद्वा इदमग्र आसीत् ततो वै सदजायत' इति श्रुत्या अनासाद्यत्वेन असन्नामकनारायणात् आसाद्यत्वेन सन्नामकवासुदेवाभिव्यक्तिरूपा जनिरुक्ता भवति। अपिशब्दो भिन्नक्रमः प्रलये स्थितमपीति संबन्धः। नारायणमिति शेषः। बोधयन्त इत्यस्य व्यवहितेनामरान् इत्यनेनान्वयः। (टि) II. **यस्य गदा पवमानः** - This refers to Lord Viṣṇu's mace during *pralaya.* (i) पुनः स कः। पवतेऽसौ पवमानः सर्वं जानानः। पवमानः मरुत्। कुत एतत् यतो विष्णुर्गदाधरः। हिशब्दः प्रमाणप्रसिद्धिद्योतकः। प्रमाणं तु 'पूर्वं हरेश्चक्रमभूद्दिदुर्गे'ति (ता.नि.३.७५)। तथा 'गदा तु वायुर्बलसंविदात्मे'ति (ता.नि.३.७६)। एवं च चक्रगदाधरो नारायणः प्रलये अवसत्।(टि) (ii) 'बृहद्धत्तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश' इति श्रुतौ 'वायुरेव पवमानो दिशो हरित आविष्टः' इति तद्व्याख्याश्रुतौ (ऐतरेयोपनिषदि) उक्तमहिमा पवमानो वायुर्यस्य गदा

गदीयायुधदेवता सोऽपि तदुपजीवकः। (भ) (iii) **पवमानः** सर्वज्ञो वायुः। **यस्य**। करालोला **गदा** गदाभिमानी सर्वायुधोपलक्षणमेतत्। प्रळयका(रि)-लीनतयाऽभ्यर्हितत्वाच्चक्रगदयोः स्वशब्देनोपादानम्।(या) All this means that at the time of *pralaya,* god Vāyu was serving Lord Viṣṇu as His mace. The word 'पवमान' should be interpreted in two ways : 1) 'all-knowing' and 2) 'Vāyu', deriving the meaning 'all-knowing god Vāyu'. Next important statement is **आपवमानः सन् सः सत् (भवत्) व्यासः अभवत्।** This has got two meanings : The Lord became many and He became Sage Vyāsa. The commentaries give different explanations : (i) व्याभवद्वासुदेवादिरूपेणाग्रे स एव हि। अथवा व्यस्यत इति व्यास इत्युच्यते हरिः॥ **विभक्तोऽभवदित्यर्थश्चतुर्धा पञ्चधापि** च। द्विषड्दशशताद्यात्मा विशेषादेव केवलम्॥ एवं व्यासाभिधानोऽथाभावयत्सदिदं जगत्। यस्मादापवमानश्च स्वातन्त्र्ये व्यत्य(लुप्त)योऽपि च। एवं सामान्यतः सर्वानवतारान्हरेः प्रभोः। उक्त्वा सृष्टिं च जगतः संक्षेपादभिधाय च॥ अधुना भारतं वक्तुमाह वासिष्ठपुंगवम्। सन् यो व्यासोऽभवदिति विशेषाद्भारताभिध(धिप)म्॥ उत्सन्नं भारतं वंशं यो दधार हरिः परः। स एव **भारताऽद्यः स्याद्वक्ताऽयं** भारतस्य च॥ सर्वदा सत्रयं **व्यासोऽ**वततार हि मानयन्। अविवेकादापवेति **शक्रे**णोक्तं वसिष्ठकम्॥ तदन्वये स वै ज्ञानदाता देवादिसञ्जने॥ (टी) (ii) स एव नारायण एवाग्रे वासुदेवादिरूपेणाभवदित्यन्वयः। ... स एव **व्याभवत्**। वासुदेवादिरूपेणाग्रे जगत्सृष्टेः पूर्वं व्यक्तोऽभवत्। अथवा स नारायण एव **व्यासोऽभवत्।** व्यस्यत इति व्यासः। विभक्तः चतुर्धा पञ्चधा द्विषड्-दश-शताद्यात्मा केवलं विशेषादेव न तु भेदात् अभवत्। प्रकटो बभूव। एवंविधः व्यासः विविधरूपः स नारायणः अथ स्वावतारानन्तरं **सत् अबाध्यमिदं** जगत् जडाजडात्मकं **अभवत्** अभावयत् उदपादयत्। स्वोदरनिविष्टं जीवजातं सूक्ष्मस्थूलभेदेन महदादितत्त्वसृष्ट्या तत्कार्यब्रह्माण्डादिसृष्ट्या तदभिमानवच्च-कारेत्यर्थः। कस्मात् यस्मात् **आपवमानः** स्वातन्त्र्येण चेष्टमानः इदं सर्वत्र संभावकं तथैव श्रावयति **'नासदासीत्'** इत्यादिका च श्रुतिः। अथवा **सन्** व्यासादिसर्वरूपेण विद्यमान एव यो भगवान् कार्यावसरे ब्रह्मादिप्रार्थनां निमित्तीकृत्य भूमौ **व्यासो** व्यासनामा **अभवत्** प्रकटोऽभवत्। कीदृशः यः

सत् सन्तम्। सामान्येऽपि नपुंसकमिति न्यायात्। उत्सन्नं सन्तत्यभावात् भारतं वंशं **आपवमानः** अन्तर्णीतणिजन्तमिदम्। दधार सन्तत्युत्पादनेन उत्तरकालसंबन्धिनं चकारेत्यर्थः। अथवा सत् सन्तं अपाठाऽपाठादिना तिरोहितं वेदादिकं **आपवमानः** वेदं विभजमानः, भारतादिकं च कुर्वाणः। पुनः कीदृशः स व्यासः **सत् यो व्यासः** सर्वदा विद्यमान एव व्यासः **आपवमानः** अब्विवेकादिन्द्रेणापवेत्युक्तं वसिष्ठं मानयति तत्कुले अवतीर्य तत्कुलं जगति पवित्रीकृत्य तं कीर्तिपुण्यभाजं करोतीत्यर्थः। पुनः कीदृशः **आपवमानः आ** समन्तात् **अप्सु** सर्वदेवेषु 'आपो वै सर्वा देवता' इति श्रुतेः उपलक्षणमेतत्। देवादिसज्जने अवनं **अवः** अवतेर्गतिकर्मत्वात् अवो ज्ञानं तस्य **मां** निर्माणं उत्पत्तिं नयतीति वा आपवमानः। पुनः कीदृशः **सदापवमानः**। सत्सु देवादिसज्जनेषु आपवते तेभ्यो ज्ञानादिमोक्षान्तमभीष्टं ददातीति भावः।(टि) (iii) कथं तर्हि बहुभावस्तस्येत्यत उक्तम्। **यो व्यासोऽभवत्**। व्यस्यत्यात्मानमिति व्यासः तत्तत्पदार्थेषु नानारूपैः प्रविष्ट इत्यर्थः। 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनुप्रविश्य नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकं करवाणि' इति (छां.उ) श्रुतेरिति हिशब्दार्थः। यद्वा **वि। आ। सः।** इति त्रीणि पदानि। तथा च **सः** परमात्मा **आ** सम्यक्, समन्तात् सर्वपदार्थप्रवेशनार्थमिति यावत्। विविधप्रकारोऽभवदिति। सर्गादौ वासुदेवादिरूपेण मत्स्यादि-रूपैश्चानेकरूपोऽभवदिति वा। अनेकरूपैः सर्वपदार्थेषु स्थितिश्च तत्तत्पदार्थसत्ताप्रदानार्थमित्याह। **सदापवमान** इति। पवमानो वायुः 'पवमानः प्रजापतिरि'ति श्रुतेः हिरण्यगर्भश्च। तथा पवते वायुवशादितस्ततः उड्डीयोड्डीय गच्छतीति **पवमानं** तृणादि एकशेषेण तदुभयनिर्देशः। पवमानमभिव्याप्येत्यापवमानं ब्रह्मादितृणान्तं जगत् । **सत् आपवमानं** येनेति सदापवमानः। आब्रह्मस्तम्बपर्यन्तस्य जगतः सत्ताप्रदातेत्यर्थः। आहोस्वित् पवमानेन वायुना अभिव्याप्तं स्वीकृतं अनुगृहीतं इति यावत्। तदेव सत् समीचीनं यस्येत्यर्थः। वायुनानुगृहीतं यदनुग्रहपात्रमित्यर्थः। उक्तं हि 'तस्मात्स मारुतिकृते रविजं ररक्ष' इति (ता.नि.)। यद्वा सत् अधिकारिजातं आपवमानं मुख्यप्राणपर्यन्तं यस्येति। 'इयदामननात्' (ब्र.सू.३.३.३५) इत्यत्रोक्तत्वादिति। **...व्यासोऽभवदिति।** व्यस्यति विभजति वेदांश्चेति **व्यासः।** अथवा व्यस्यति निरस्यत्यज्ञानं पाखण्डादिदुरागमांश्च ब्रह्ममीमांसानिर्माणेनेति **व्यासः।** तथा भारतपुराणादिनिर्माणेन स्वगुणान् विस्तारयति चेति। अथवा व्यस्यति विस्तारयति उत्सन्नं भारतं वंशं धृतराष्ट्रपाण्डुविदुरोत्पादनेनेति

व्यासः। आ समीचीनः **पवमानो** येनेत्यापवमानः। स्वस्य ज्ञानादिपूर्णतारूपं समीचीनत्वं व्यासशिष्यत्वादेवेति सूचयत्याचार्यः। अथवा **सतः** ब्रह्मादिसज्जनान् आ सम्यक् पावयतीत्यापवमानं ज्ञानं शास्त्रं वा यस्मात्स तथोक्तः। 'नारायणाद्विनिष्पन्नं.... ब्रह्मरुद्रादिदेवेषु मनुष्यपितृपक्षिषु। ज्ञानं संस्थाप्य भगवान् क्रीडते पुरुषोत्तमः।' इति हि पुराणप्रसिद्धिः। ननु शुकाचार्यस्य ज्ञानाधिक्यदर्शनात् कथं वायोरेव समीचीनत्वमित्यतो वाऽऽह। **भवत्सदापवमानः** इत्येकं पदम्। आ व्याप्तः पवमानः वायुः यस्मिन्निति विग्रहः। विशरणार्थस्य सदेः सदिति रूपं रुद्रवाचकम्। भवति उत्पद्यते सन् = संहर्ता आपवमानः वायुः यस्मादिति त्रिपदबहुव्रीहिः। यस्मादुत्पन्नः शिवरूपः शुकः वायुनाऽऽविष्टः तस्यापि ज्ञानाद्यतिशयो वाय्वावेशनिबन्धनोऽतो युक्तं वायोरेव सर्वाधिकारिसमीचीनत्वमिति भावः।(ना) (iv) **सः** **श्रीनारायणः** **आपवमानः** आपवमानं पवमानमभिव्याप्य। **सत्** स्वोदरे विद्यमानं जगत्। **भवत्** भावयन्। स्वातन्त्र्यज्ञापनाय व्यत्ययः। **सः** **व्यासः** व्यासवान् विस्तृतः विभागवान् वा। **अभवत्** चतुः-पञ्च-द्विषट्-दश-शताद्यात्मकोऽभवदित्यर्थः। यः **सन्** सर्वदा विद्यमानः नानारूपः। यच्छब्दबलात् स इति लभ्यते। सः **व्यासः** वेदव्यासोऽभवदिति योज्यम्। व्यासः कुत्रावतीर्ण इत्यतस्तं विशिनष्टि **सदापवमान** इति। अप्सु प्रवेशादापवेति शक्रेणोक्तत्वादापवो वसिष्ठः तत्संबंधादापवो वसिष्ठान्वयः। ततश्च सन् निर्दुष्टश्चासौ आपवश्च सदापवः तस्मिन्मानं निर्माणं अवतरणं यस्य स तथोक्तः।(या). All this means : Having pervaded everything from Vāyu downwards (आपवमान) and with the intention of creating and bringing out the world existing in His stomach, the Lord became many (व्यास) as four, five, ten, twelve, hundred and so on. **व्यासोभवत्** = **व्या+सः+अभवत्** = **सः+व्याभवत्** has many meanings: (1) Lord Viṣṇu who was existing during *pralaya* became many at the beginning of the world-creation as Vāsudeva and so on. (2) He manifested in many forms, four, five, ten ..... This manifestation does not mean that there is any distinction among the several forms. (3) He entered into innumerable objects having taken innumerable forms. (4) He divided the Vedas.

(5) He composed works revealing the real nature of the Lord and thus removed the ignorance caused by heretical works (6) He spread wide His own qualities by composing works like *Mahābhārata* and *Purāṇas* (7) He made the dynasty of Bharata to continue by causing the birth of Dhṛtarāṣṭra, Pāṇḍu and Vidura. Again, सत् अभवत् = He created or brought out (उदपादयत्) the entire world existing in His stomach. सन् व्यासरूपोऽअभवत् – The Lord always exists in the form of Vyāsa and others; but then having responded to the prayers of Brahmā and other gods, He manifested as Sage Vyāsa. सदापवमानः = सत्+आपवमानः 1) He made the family of Bharata to continue by becoming the cause of the sons of Vicitravīrya after his death. 2) He divided the Vedas and purified the Vedic lore and made it reach the good souls. He composed *Mahābhārata*, *Purāṇas* and *Brahmasūtras*. सत् यः व्यासः आपवमानः – Ever-existing Lord manifested as Sage Vyāsa in the family of Vasiṣṭha called as आपव by Indra. [सदापवमानः = सत् (faultless) + आपव (Vasiṣṭha) + मान (birth)] आ+अप्+अव+मा+न – He causes (न) the origin (मा) of अव (knowledge) in good souls like gods (अप्) on all sides (आ). सत्+आपवमानः – He bestows (आपवमानः) all the desires of good souls like gods. The म.ता.नि. narrates : आसीदुदारगुणवारिधिरप्रमेयो नारायणः परतमः परमात्स एकः। संशान्तसंविदखिलं जठरे निधाय लक्ष्मीभुजान्तरगतः स्वरतोऽपि चाग्रे॥ तस्योदरस्थजगतः सदमन्दसान्द्रस्वानन्दतुष्टवपुषोऽपि रमारमस्य। भूत्यै निजाश्रितजनस्य हि सृज्यसृष्टावीक्षा बभूव परनामनिमेषकान्ते॥ (१.२-३) पूर्व हरेश्चक्रमभूद्धि दुर्गा तमःस्थिता श्रीरिति यां वदन्ति॥ सत्त्वात्मिका शङ्खमथो रजःस्था भूर्नामिका पद्ममभूद्धरेर्हि। गदा तु वायुर्बलसंविदात्मा शाङ्र्गश्च विद्येति रमैव खड्गः॥ दुर्गात्मिका सैव च चर्मनाम्नी पञ्चात्मको मारुत एव बाणः॥ (३.७४-६) इतीरितस्तैरभयं प्रदाय सुरेश्वराणां

परमोऽप्रमेयः। प्रादुर्बभूवामृतभूरिलायां विशुद्धविज्ञानघनस्वरूपः॥ वसिष्ठनामा कमलोद्भवात्मजः सुतोऽस्य शक्तिस्तनयः पराशरः। तस्योत्तमं सोऽपि तपोऽचरद्धरिः सुतो मम स्यादिति तद्धरिर्ददौ॥(१०.४१-४२) **[पादान्त्ययमक** (वि); **पादोपान्त्ययमक** (गुत्तल)]

3) (पदच्छेदः) **यस्य। रमा। न। मनोगं। जगृहे। विश्वंभरा। अपि। नमनः। (न। मनः।) अगं। यस्य। पुमान्। आनन्दं। भुङ्क्ते। यद्धाम। कपतिमानानन्दम्॥**

In the previous verse (2) it was stated that the Lord incarnated as Sage Vyāsa. A doubt may arise whether Vyāsa is equal to the Lord or inferior to Him. This verse removes the doubt maintaining that even though Vyāsa is an incarnation of the Lord, He is equal to Him in all ways : 1) ननु व्यासस्य भगवदवतारत्वेऽपि इन्द्राद्यवतारेऽर्जुनादाविव ज्ञानादिह्रासेनाप्तत्वं निर्णेतुमशक्यमित्यत आह **यस्येति**।(या). 2) व्यासस्य भगवदवतारत्वेऽपि इन्द्राद्यवतारेऽर्जुनादाविव न ज्ञानादावूनतास्तीत्याशयेन तस्य मूलरूपसाधर्म्यमुपपादयति।(भ). It is true that the knowledge of Arjuna, an incarnation of Indra was inferior to that of Indra. But it is not so in the case of Vyāsa, an incarnation of Lord Viṣṇu. Three factors are adduced to prove the point : (i) **विश्वम्भरा रमा अपि यस्य मनोगं न जगृहे।** (अ) **रमापि** यस्य मनोगं यन्मनोगतं न **जगृहे।** साकल्यान्नैव जानाति।... कथंभूता रमा **विश्वंभरा** विश्वं बिभर्ति इति सा तथा सर्वं च मनसा जानती।(टि). (आ) विश्वं मनसा **बिभर्तीति विश्वंभरा** सर्वज्ञापीति यावत्।(भ). (इ) **विश्वंभरा** सकलजगद्धारणपोषण-कर्त्र्यपि **रमा** लक्ष्मीः यस्य मनोगं मनसि विद्यमानं न जगृहे। लक्ष्मीज्ञानापेक्षयाप्यनन्तज्ञानवानित्यर्थः।(ना) (ई) **विश्वंभरा**। देहेन मनसा चेति शेषः। मनसा विश्वं पश्यन्ती अपि (देहेन सर्वधारकापि) **रमा। यस्य मनोगं** येन व्यासेन ज्ञातं विश्वं सर्वं तत्स्वयं। **न जगृहे**। नापश्यत्।(या). All this means that the knowledge possessed by Sage Vyāsa is beyond the comprehension of even Goddess Lakṣmī who knows all about this universe and who

supports the universe in all ways. That is, Sage Vyāsa is superior in knowledge to Goddess Lakṣmī and there is only One who is so superior to Lakṣmī and that is the Lord Himself. So, Sage Vyāsa is equal to the Lord. 2) **यस्य नमनः पुमान् अगं आनन्दं भुङ्क्ते।** (i) **यस्य नमनः** नमस्कर्ता स्तोता वा **पुमान्।... अगं** कदापि न गच्छतीत्यगं नित्यमिति यावत्। **आनन्दं** स्वरूपसुखं **भुङ्क्ते।**(भ) (ii) किंच **यस्य नमनः** नमस्कर्ता स्तोता वा पुमान्। **अगं** न गच्छतीत्यगं सर्वदा विद्यमानं। **आनन्दं भुङ्क्ते।**(या). It means that the devotee who bows down and eulogises Vyāsa enjoys permanent bliss befitting to his own inherent nature. Such bliss is granted only by Lord Viṣṇu and hence Vyāsa is Viṣṇu Himself. भ gives also a different explanation : अथवा **यस्य नमनः अगं** अगम्यं भगवन्नमनादिकं विना अन्यैर्हेतुभिरप्राप्यमानन्दं **भुङ्क्ते** इति।(भ). It means that the devotee enjoys the bliss which cannot be secured by any other means. 3) **यद्धाम कपतिमानानन्दम्।** (i)... तपः (यतः) स्वाप्ययधाम हि। प्रजापशुपतिप्राणश्रिया(श्रीणा)मानन्ददं परम्॥(टी) (ii) पुनः स कः **यद्धाम** विधयापेक्षया नपुंसकं तपःस्वाप्ययधाम तपसा स्वे स्वतन्त्रे अप्ययः अपिहितः प्रवेशः प्रलयः मुक्तिश्च येषां ते प्रलीना मुक्ताश्च तेषां धाम आश्रयः। कीदृशं धाम कीदृशं स्वरूपं तपः तेजःपुञ्जरूपमिति वा। कीदृशं धाम **कपतिमानानन्दं** कश्च पतिश्च मा च अनश्च ते तथा तेषामानन्दो यस्मात्तत् तथा।(टि). (iii) अपि च आनन्दं आनन्दरूपं। **यद्धाम** यस्य व्यासस्य स्वरूपं। **कपतिमानानन्दं** कः ब्रह्मा पतिः शिवः (कः ब्रह्मा पतिः येषां ते कपतयः अशेषदेवाः) मा रमा अनः प्राणः तेषामानन्दो यस्मात्तत्तथोक्तम्।(या). Sage Vyāsa is the abode of the released souls and His form grants bliss to Brahmā, Rudra, Lakṣmī and Vāyu. Such a Person is Lord Viṣṇu and hence Vyāsa is Viṣṇu Himself. So या. concludes : तथा च व्यासस्य रमाद्यज्ञातज्ञातृत्वेन अपिरिच्छिन्नज्ञानत्वात् सकलसज्जनमोक्षदातृत्वात् रमाद्या-नन्दोपजीव्यानन्दस्वरूपत्वाच्च ज्ञानादिह्रासेनानाप्तत्वशंका नेति भावः।(या). Now there are also different explanations (i) स **पुमान्** स

परः पुमान् **आनन्दं** स्वपरमानन्दं **भुङ्क्ते** स कः **रमापि** यस्य **मनोगं** यन्मनोगतं न **जगृहे** साकल्यान्नैव जानाति। वा इत्यथवा यस्य तस्य अगं अंगान(नु)रूपं अस्तवं इत्यर्थः। न किंचित्। सर्वे यत्स्तुतिरूपा इत्यर्थः। तदुक्तं 'वेदे रामायणे चैव' इत्यादि। पुनः स कः **यस्य** यस्यकस्यचिन्मनः **अगं** अगम्यं न। तदुक्तं 'येनाहुर्मनो मतम्' इति (टि). He is the Supreme Person enjoying His own infinite and excellent bliss. His mind cannot be fully comprohended even by Goddess Lakṣmī. There are no words which do not praise Him. There are no minds which are beyond His comprehension. That is, He is Ommiscient, perfectly and fully. (ii) **यस्य मनः अगं** न गच्छतीत्यगं अनन्तं **आनन्दं** नित्यसुखं **पुमान्** जीवः **न भुङ्क्ते** न प्राप्नुयादित्यर्थः।(टि) No individual soul can obtain the infinite bliss of the Lord. (iii) कस्यचिन्मनो **यस्य अगम्** अगम्यं न। अन्यमनोगतं सर्वं यो वेत्तीति यावत्। तदुक्तं - "द्वैपायनेन यद्बुद्धं ब्रह्माद्यैस्तन्न बुध्यते। सर्वं बुद्धं स वै वेद तद्बुद्धं नान्यगोचरम्" इति। अथवा **यस्य मनोगं** मनसोऽगम्यं वास्तवं किंचिदपि नास्त्येवेत्यर्थः। स **पुमान्** परमपुरुषो व्यास आनन्दं स्वीयं परमसुखं भुङ्क्ते। (भ) Vyāsa is All-knower. Nothing is unknown to Him. His knowledge is superior to that of even Brahmā and others. He is the Supreme Person and enjoys His excellent bliss. Hence Vyāsa is Viṣṇu Himself. (iv) अथ भगवतः ध्येयताप्रयोजकसर्वोत्तमत्वरूपं माहात्म्यमाह - **यस्य रमेति।** स **पुमान्** परमपुरुषः **आनन्दं** पूर्णसुखं **भुङ्क्ते।** निरुपपदानन्दशब्दस्य मुख्यानन्दार्थत्वात्। कीदृशमानन्दं **नमनोगं** मनसा इन्द्रियेण **अवबोधकेन** वेदादिनाऽवगम्यतेऽसौ मनोगः तथाविधो न भवतीत्यर्थः। **निषेधार्थनकारेण** **समासः।** 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्, न बिभेति कुतश्चन' इति श्रुतेरिति भावः।(ना). This means that this verse intends to bring out the greatness as well as absolute supremacy of the Lord which has made Him the object of meditation laid down in the first verse. He enjoys perfect bliss. This bliss is beyond

the comprehension of **sense-organs** as well as of the Vedas. This is declared by a scripture : 'यतो वाचो' &c. (v) अथवा **रमा** श्रीः **विश्वंभरा** धरा च **यस्य। नमनोगं।** नमतीति **नमनं** 'कृत्यल्युटो बहुलम्' इति कर्तरि ल्युट्। उ ऊर्ध्वं गच्छतीति **उगं। नमनं** च तदुगं चेति नमनोगं। अवनमति उन्नमति वा इत्येतादृशं चामरद्वयं **जगृहे।** लक्ष्मीधराभ्यामपि चामराभ्यां वीज्यमानः कथं सर्वोत्तमो न भवेदिति भावः। कुतः लक्ष्म्यापि तज्ज्ञानविषयो **न** जायत इत्यत उक्तं **यस्य मनः अगं** न गच्छतीत्यगं **न भवति** सर्वार्थविषयमित्यर्थः। तस्या ज्ञानं तु ईशादन्यत्रानालोचनेऽपि सर्वार्थविषयमिति **भावः।**(ना) Here रमा (Lakṣmī) and विश्वंभरा (Earth) are **understood** as two **different** deities. नमनोगम् is split as नमन+उग meaning **bending** low and rising up. Lord Viṣṇu is served by Lakṣmī in the forms of Śrī and Dharā **as two** chowries. **Further,** His knowledge cannot be **fully grasped** even by these two deities, who are competent to grasp all other knowledge. (vi) अथवा **यद्धाम** यस्य धाम वैकुण्ठादिस्थानम्। **अगं** न गच्छतीत्यगं अजडं चिदात्मकमित्यर्थः। (टि). Lord's abode like Vaikuṇṭha is full of sentiency. (vii) पुनः **कीदृशं धाम कपतिमानानन्दम्। कश्च पतिश्च मा च अनश्च** एषां **अनं** गतिं **मतिं** च **दं** प्रदमित्यर्थः। (टि). **को** विधिः **पतिरुमापतिर्मा** लक्ष्मीः **अनो** मुख्यमरुत् एषामनं चेष्टाम्, अन चेष्टायामिति धातोः, **अनं** ज्ञानं, अणपणगताविति धातोः, ददातीति तथा।(त). **Lord's form** or abode **grants** activity and **knowledge** to Brahmā, Rudra, Lakṣmī and Vāyu. (viii) **यद्धाम** यस्य स्वरूपं स्थानं वा **वैकुण्ठादिरूपं कपतिमानानन्दं** ..... कपत्योर्ब्रह्मेशयोर्मानानन्दौ ज्ञानानन्दौ यस्मिन्निति वा। (ना). Brahmā and Rudra **secure knowledge and** bliss from Lord's form or abode. The म.ता.नि. **describes** Vyāsa : जयत्यजोऽखण्डगुणोरुमण्डलः सदोदितो ज्ञानमरीचिमाली। **स्वभक्त**-हार्दोच्चतमोनिहन्ता व्यासावतारो हरिरात्मभास्करः ॥(३.१) अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः। अनन्तशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥ शुभमरकतवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशंखाब्जरेखः। रविकरवरगौरं चर्म चैणं वसानस्तटिदमलजटासन्दीप्तचूडं

दधानः ॥ विस्तीर्णवक्षाः कमलायताक्षो बृहद्भुजः कम्बुसमानकण्ठः। समस्तवेदान्मुखतः समुद्गिरन् अनन्तचन्द्राधिककान्तिसन्मुखः ॥ प्रबोधमुद्राभयदोर्द्वयान्वितो यज्ञोपवीताजिनमेखलोल्लसन्। दृशा महाज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत ॥ (१०.५२-५). [पादान्त्ययमक (वि); **पादोपान्त्ययमक** (गु)]

4) (पदच्छेदः) परमेषु। यदा। तेजः। परं। एषु। चकार। वासुदेवः। अजः। मानधि। विभ्रत्सु मनः। मा। अनधिमा। (मानाधिमा) आसीत्। नवासुदेवः। अजः ॥

This verse intends to clarify that Lord Kṛṣṇa did not get the name 'Vāsudeva' because He was born as the son of Vasudeva and Devakī. *Read* : ननु व्यासोऽभवदिति कृष्णावतारोऽप्यादिकाल एवोक्तः स न युक्तः। तथात्वे तस्य वसुदेवजातत्वासंभवेन वासुदेवशब्दवाच्यत्वानुपपत्तिप्रसंगात्। 'देवकीजठरभूरुहुराज' इति प्रमाणविरोधाच्चेत्यतो वासुदेवशब्दवाच्यत्वे उपपत्तिं तावदाह **परमेष्विति**। (या) The verse adduces reasons : वासुदेवोजः = वासुदेवः+जः = जः+वासुदेवः = यः(जययोरभेदात्)वासुदेवः विद्वद्रूढ्या हरिः सः। That Lord Kṛṣṇa who is known as Vāsudeva. Firstly, He is **अजः** = न जातः = Not born i.e. He is Unborn. It means that He is not born even as the son of Vasudeva. Then a question arises : "Why is He called then 'Vāsudeva' and why should वासुदेवः not be understood as वसुदेवस्य अपत्यं पुमान् ?" The reply is as follows : 1) **यत् परमेषु मानधि मनः बिभ्रत्सु एषु परं आतेजः चकार।** (i) **यत्** यस्मात्। **परमेषु** इन्द्राद्यपेक्षयोत्तमेषु। **मानधि** मानानि ज्ञानानि धीयन्तेऽस्मिन्निति मानधि ज्ञानपूर्णं। **मनः** चित्तं। **बिभ्रत्सु एषु** ब्रह्मादिदेवेषु **परं** लोकविलक्षणं। **आतेजः** स्वविषयकं ज्ञानं। **चकार।** (या). It means that the Lord created superhuman knowledge about Himself in the minds of gods like Brahmā who are superior to Indra and others. And as such He cannot be believed to be the son of a mere human being like Vasudeva. In this sense, the word वासुदेव has the following etymological meaning : तस्मात्

अनेन वं ज्ञानं सु समीचिनं पूर्णं यस्य तत् वसु ज्ञानेन पूर्णं मनः। तेन देवः देवनं स्तुत्यादि येषां ते वसुदेवाः। (वसु धनं ज्ञानधनं तेन देवाः प्रकाशमानाः) पूर्वोक्ताः ब्रह्मादयः तेषामयं संबन्धी वासुदेवः। सम्बन्धश्च तद् ज्ञानदातृत्वादिरूप इति वासुदेवशब्दनिर्वचनं दर्शितमिति ज्ञातव्यम्।(या) That is, व= knowledge; सु= correct or full; So, वसु= mind full of knowledge. देव = extolling &c. Therefore, वसुदेव = Brahmā and others who extol the Lord with their minds full of knowledge. Or, वसु = wealth in the form of knowledge; देव = Lustrous. Hence, वसुदेव = Gods who are lustrous due to their wealth of knowledge. Further, वासुदेव = वसुदेवानाम् सम्बन्धी अयं. As the Lord grants knowledge to those gods, He is related to them and hence called as वासुदेव. Further, तथा कृष्णः स्वप्रादुर्भावानन्तरं स्तुत्यर्थमागतानां ज्ञानपूर्णमनस्कानामप्युक्तं तद्ज्ञानं स्तुत्युपयुक्तं चकार। तत एव निमित्ताद्वासुदेवशब्दवाच्यः। न नतु वसुदेवजातत्वेन, अजत्वविरोधादिति भावः।(या). When the Lord manifested Himself as Child Kṛṣṇa all those gods with their minds full of knowledge came to extol Him and He made their knowledge useful to extol Him. Therefore He is called वासुदेव. (वसु= wealth of knowledge; देव = extolling; तत्प्रेरकः = वासुदेवः). The Lord is not called वासुदेव because He took birth as the son of वसुदेव; because, it goes against His being अज or Unborn. Anybody may ask : "Is the knowledge of Goddess Lakṣmī equal to that of other gods like Brahmā?" The reply is "No. **मा अनधिमा**". ननु आतेजश्चकारेत्युक्त्या रमाज्ञानं ब्रह्मादिज्ञानसममेवेति प्राप्तमत आह **मानधिमेति। मा रमा। अनधिमा** अधि अधिका मा ज्ञानं यस्य सः अधिमः न विद्यते अधिमो यस्याः सकाशात् एतेषूक्तदेवेषु सा अनधिमा आसीदित्यर्थः।(या). It means, अधि = superior; मा=ज्ञानं; अधिमः = one possessing superior knowledge. अनधिमा = not having any one possessing superior knowledge,

Goddess Lakṣmī is called अनधिमा and hence Her knowledge is not equal to that of other gods like Brahmā. It is explained above by या. having split up नवासुदेवोजः as न+वासुदेवः+अजः, meaning "Unborn Kṛṣṇa is not the son of Vasudeva." या. also explains alternately by splitting up as **नवा+असु+देवः+अजः।** यद्वा नवासुदेवः अज इति पदच्छेदः। निर्वचनाद् वा शब्दो नवेत्यर्थकः। ततश्च अजोऽपि पायुगुह्ययोरैक्याभिप्रायेण वानां नवानां असूनां इन्द्रियाभिमानिनां देव इति वा।(या). It means that the Lord even though is Unborn, He is the Lord of the presiding deities of nine organs [five sense-organs + four action-organs (holding पायु (anus) and गुह्य (=उपस्थ organ of procreation) as one. Or, वानाम् नवानाम् असूनां देवोऽपि जयोऽपि योगिनां यस्माद्भवतीति वा वासुदेवशब्दस्य निर्वचनानंतरं च प्रदर्शितं भवतीति ज्ञातव्यम्।(या). Even the sages conquer the bodily organs because of the grace of the Lord, who is called Vāsudeva. टि. following टी. explains in a different manner : 1) **वासुदेवोजः = वासुदेवः + अजः।** a) **वासुदेवः** वसन्ति तत्त्वाभिमानित्वेन सर्वत्रेति वासवो देवाः तेषां देवो वासुदेवः देवराट्। **अजः** अज गतौ क्षेपणे चेति धातुव्याख्यानात् अजयति गमयति प्रापयति शुभं अशुभक्षेपणेन देवानामित्यजः। देवानां वा शुभावहः।(टि) Accordingly, वासु is derived from वस् (to dwell) and it refers to gods dwelling everywhere as presiding deities. Lord Kṛṣṇa is the देव or Master of these gods and so He is called वासुदेव. Secondly **अज** is derived from अज् (to go, to remove) and it means the Lord is called अज because He brings good to gods by removing bad from them. 2) अथवा **वासुदेवः** वेन वा गतिगन्धनयोरिति धातुव्याख्यानात्। ज्ञानेन आ समन्तात् सुष्टु दीव्यतीति **वासुदेवः** ज्ञानदेवनः।(टि). [व+आ+सु+देवः] The Lord is called as वासुदेव because He shines (देव) all round (आ), perfectly (सु) due to knowledge (व). Then, **यदा परमेषु एषु परं तेजः चकार मानधि**

**मनः बिभ्रत्सु मा मानधिमा** is explained : **यदा** यस्मात् 'यदा तदेति हेत्वर्थे कालार्थे चापि भण्यते' इति वचनात्। **परमेषु एषु** पूर्वप्रस्तुतेषु रुद्रेरप्रजापश्रीषु **परं तेजः** ज्ञानरूपं **परं** तेजश्चकार। तेन कारणेन **मानधि** मानानि ज्ञानानि धीयन्ते **यस्मिन्** तत् **मानधि**। ज्ञानार्णवं **मनः बिभ्रत्सु**मध्ये **मा** रमा। मानधिमा। **मीमांसन्ते** ते मानः ज्ञानिनः तेभ्यः **मान्भ्योऽधि** अधिका मा ज्ञानं यस्याः **सा** मानधिमा अत्युत्तमज्ञाना **आसीत्** बभूव। सर्वदा एका रमैव। **तस्या** एव नित्यमुक्तत्वेन तदीयज्ञानस्य जन्मनाशयोरभावात् अन्येषां तत्सद्भावात् इत्यर्थः।(टि) It is **वासुदेव who** granted (चकार) brilliant lustre (परं तेजः) of the form of knowledge to these (एषु) higher gods (परमेषु) like Rudra, Vāyu, Brahmā and Lakṣmī. Because of this reason (यदा), amongst gods bearing minds (मनः बिभ्रत्सु) possessing ocean-like knowledge (मानधि), Goddess Lakṣmī (मा) alone is of supermost knowledge (मानधिमा). The reason is obvious : She alone is eternally liberated and there is no origin and destruction to Her knowledge any time, anywhere. अथवा वासुदेवः **एषु परमेषु** ब्रह्मादिषु क्षीराब्धिशायिनं स्वात्मानं भूभारहरणाय स्तोतुमतिशुद्धं **मानधि** ज्ञानार्णवं मनः **बिभ्रत्सु परमुत्तमं तेजः** ज्ञानरूपं **यदा** चकार तदैव ते स्तोतुं समर्थाः जाताः अन्यदा **न** इति यदा तदा **तेभ्यः मा श्रीः मानधिमा** अत्युत्तमज्ञाना आसीत्। तस्याः **कादाचित्काज्ञानाभावात्**।(टि) It means, when the Lord was lying on the क्षीरसागर, gods desired to praise Him requesting Him to incarnate to lessen the burden of the Earth by destroying the wicked. When (यदा) the Lord made their minds (मनः बिभ्रत्सु) full of knowledge (मानधि) of excellent kind (परं तेजः), then only they became able to praise Him. Because of this, Goddess Lakṣmī (मा) is always superior in knowledge (मानधिमा) to them as She does not have ignorance any time, anywhere. Now the interpretation of **नवासुदेवोजः** is as follows : (i) पुनः कीदृशः वासुदेवः **न वा असुदेवः**। इत्थं लक्ष्म्याः अत्युत्तमज्ञानसिद्ध्यर्थं योगिनां ब्रह्मादीनां सदा

असुदेवः असूनामिन्द्रियाणां देवो विजयो यस्मात् स तथाभूतो न जः जातः लक्ष्म्यपेक्षया तेषां नीचज्ञानत्वसिद्ध्यर्थं तेषां नित्यमिन्द्रियजयं न दत्तवान् इत्यर्थः।(टि). It is वासुदेवः Who did not make (न ज) other gods except Lakṣmī as conquerors (देव) of their organs (असु) so that She should always be superior to them. (ii) पुनः कीदृशः। वा इत्यथवा तेषामसुदेवः असूनां देवो विजयो यस्मात्स तथोक्तः। एवंभूतो जः जातः स्वप्रसादेन तानिन्द्रिय-जयवतश्चकारेत्यर्थः।(टि). The Lord became (ज) Vāsudeva, or (वा), because He made gods conquer (देव) their organs (असु). (iii) कीदृशः। वासुदेवः न जः। वान्ति असुषु ते वासवः इन्द्रियतोषणपराः तेषां देवः प्रियः असुरप्रियः न जः जातः।(टि). The Lord did not (न) become (जः) the beloved (देव) of demons who indulge (वा) in sensual (असु) pleasures. Hence He is called वासुदेव. (iv) वा इत्यथवा असुभिरिन्द्रियैः रमन्ते तैः सह क्रीडन्तीति असुराः इन्द्रियाणां नियतत्वेन उत्पथगामित्वाभावात्। तत्सखायः लब्धप्राणप्रसादा वा असुरा वा। 'महद्देवानामसुरत्वमेकम्' इति श्रुतेः। तेषां देवः प्रियः जः जातः।(टि). In this interpretation the word असुर expresses 'god' as they enjoy sensual (असु) pleasures with control. Hence they have become the beloveds (देव) of the Lord. Hence the Lord has become (ज) वासुदेव. (v) पुनः कीदृशः। अजः अजातोऽपि हरिः वासुदेवः वासुदेवनामा जः जातः। कस्मात् वसुदेवाख्यसंबद्धमनसो विषयत्वतः। कोऽर्थः।(टि) Even though Unborn, (अज) Lord Viṣṇu has become (ज) the bearer of the name वासुदेव. Why ? Because He happens to be the object of the mind related to the expression वासुदेव. What does this mean ? 1) वसुदेवस्येदं वासुदेवं तत्सम्बद्धं मनः अथवा वसत्यस्मिन् इति वसु देवस्य वसु वसुदेवं श्रीहरिसन्निधानपात्रं ध्यानानुगृहीतं मनः तद्विषयत्वात् तद्ध्येयत्वात्। (टि). It means that the mind is called वसुदेव as it is the residence (वसु) of God (देव) and Lord Viṣṇu being the object of mental meditation, is called वासुदेव. 2) अथवा वातीति वाः, सूतेऽखिलं जगदिति सुः,

दीव्यतीति देवः, वाश्चासौ सुश्चासौ देवश्चासौ तथोक्तः ज्ञानरूपः जगत्कर्ता क्रीडादिगुणविशिष्टश्चेत्यर्थः।(टि). Here वा expresses knowledge, सु creation and देव sport. As Lord Viṣṇu is full of knowledge, is the World-Creator and indulges in the sport of controlling life and death of the entire universe consisting of both sentients and insentients, He is called वासुदेव. 3) अथवा वाति जानाति अखिलमिति वः सर्वज्ञः असुः असुमुख्यः 'मुख्ये मुख्यः प्रकीर्तितः' इति वचनात् सर्वज्ञो मुख्यप्राणः तदात्मकेन वा असुना भीमेनैव दीव्यति असुरान् जरासन्धादीन् जिगीषति तेन सह क्रीडते वा, तेन व्यवहरतीति वा, तेन **देवो** द्योतः सर्वोत्तमत्वप्राकट्यं वा लोकेषु यस्येति वा, तेन सर्वदा स्तूयत इति वा, तस्माच्च कमनीयो वा, तेनैव सह गच्छतीति वा वासुदेवः।(टि). Here वः = सर्वज्ञः = all knowing; असुः = मुख्यप्राणः = Vāyu = Bhīma; and देव is from √दिव् having various meanings like play, shine &c. Hence Lord Viṣṇu is called वासुदेव, because 1) He intends to destroy demons like Jarāsandha through Bhīma; or 2) He sports with Bhīma; or 3) He functions with him; or 4) He manifests excellently in different regions with him; or 5) He is always eulogized by him; or 6) He shines with him; or 7) He moves with him. 4) अथवा वासुना वासुप्रसादेनेति यावत्। दीव्यते गम्यते ज्ञायते प्राप्यते चान्यैर्देवादिसद्भिरिति वा वासुदेवः।(टि). The Lord is so called because He can be reached, known and secured by the grace of वासु or Viṣṇu. In fine, टि. declares एभिरेव निमित्तैर्वासुदेवो न तु वसुदेवापत्यत्वतः। The Lord is named वासुदेव only because of the reasons mentioned above and not because He is the progeny of Vasudeva. Further **नवासुदेवः** is explained in three different ways : 1) न **वासुदेवः** सर्वं वाक्यं सावधारणमिति न्यायात् वासुदेव एव न केवलं किन्तु असुदेवः असूनां देवः हृषीकाणां अधीश्वरः हृषीकेश इत्यर्थः।(टि). He is not only वासुदेव but also is असुदेव = हृषीकेश = Lord of sense-organs. 2) नवाः नूतनाः नित्यतरुणाः असवो येषां ते तथा

जरानुपहतेन्द्रियाः मुक्ताः तैः दीव्यति क्रीडते इति वा वासुदेवः। (टि). The liberated souls are नवासवः = नवा+असवः = they possess ever-young organs. As the Lord sports (देव) with such liberated souls He is called वासुदेव. 3) नवासुभिः सर्वदा नित्यतरुणैः स्वीयैरिन्द्रियैः क्रीडत इति वा वासुदेवः।(टि). The Lord sports (देव) with His own ever-young organs (नवासवः) and hence He is called वासुदेव. भ. explains the verse as referring to Lord's incarnation as Vyāsa described in the previous two verses (2 and 3) : अजः व्यासरूपो हरिः ज्ञानरूपं तेजः यदा यस्मात् चकार। उद्‌बोधयामासेति यावत्। The Unborn Viṣṇu in the form of Vyāsa enkindled lustre of the form of knowledge. कीदृशः अजः वासुदेवः। वा गतिगन्धनयोरिति धातोः वा ज्ञानं तां सुष्ठु देवयति गमयति इति तथोक्तः। 'दत्तव्यासादिरूपेषु ज्ञानकार्यो जनार्दन' इत्युक्तेः।(भ) Lord Vyāsa is called वासुदेव as He imparts correct knowledge. Further अजः अयः देवानां शुभावहश्च। 'अयः शुभावहो विधिः' इति वचनात्। जयोः स्थानसाम्याज्ञस्य यः तथा च व्यासरूपस्य ज्ञानकार्यावतारत्वाद्देवशुभावहत्वाच्च देवेषु ज्ञानोद्बोधनं युक्तमिति भावः।(भ) ज and य originate from the same place viz. तालु or palate. Hence the two can be mutually substituted. Therefore, अजः = अयः = शुभावहः. It is but proper for Vyāsa to impart knowledge as His incarnation is to impart knowledge and to grant well being to gods. Moreover, इन्द्रियविजयाभावे कथमेषां देवानां ज्ञानसिद्धिरित्यतो भगवत्प्रसादादेव सोऽपि सम्पद्यत इति भावेन व्यासं विशिनष्टि न वासुदेव इति। नवानां पायुगुह्ययोरैक्याभिप्रायेण नवत्वसंख्या-नामसूनामिन्द्रियाणां देवो विजयो यत्प्रसादाद्योगिनां भवति स तथोक्तः। (भ) How can there be perfect knowledge without self-control ? This self-control or conquest on organs is granted by Lord Vyāsa and so He is called वासुदेव. [दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिस्वप्नमोदमदकान्तिगतिष्विति धातोः। अत्र विजिगीषापदेन तद्विषयो विजयोऽपि ग्राह्यः।(भ)] भ further

states : एवं महाभारततात्पर्यनिर्णयानुसारेण **दशमाध्यायोक्तव्यासमाहात्म्य-मभिधायाथैकादशाध्यायमारभ्य क्रमेण कथां निरूपयिष्यन्नादौ कृष्णावतारकथां** वक्तुमवतारार्थमात्मानं स्तोतुमुद्यतेषु देवेषु भगवता **कृतमात्मप्रकाशनं** निरूपयति **परमेष्विति।** (भ) That is, **uptil** now the **story** of Lord Vyāsa narrated in the **tenth** chapter of the *Mahābhārata-tātparya-nirṇaya* is **given** in **brief.** With the verse beginning with परमेषु, **there begins the** story of Lord's incarnation as Kṛṣṇa. **First we** have Lord's revealing Himself before **gods who** had assembled to request Him to incarnate in the human world. तेषु **परं** तेज आत्मप्रकाशनलक्षणं **चकार।** तन्मनसो गोचरीबभूवेति **यावत्।**(भ) The Lord revealed **Himself** to **them.** यस्मात् **ज्ञानधि मनो बिभ्रत्सु** देवेषु परं **तेजश्चकार** तस्मादेव वसुदेवाख्यसंशुद्धदेवमनसो विषयत्वादेव निमित्तादजोऽपि हरिर्वासुदेव इत्युच्यते न तु वसुदेव-जातत्वनिमित्तात्। तथात्वे अजत्वविरोधादिति भावः। यथोक्तं भागवते 'सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतम्। स त्वं च यस्मिन् भगवान् वासुदेवो ह्यधोक्षजो मे मनसा विधीयते' इति।(भ). The Lord made the minds of **gods full of perfect** and **lustrous** knowledge. As He **is the object of their pure** minds called वसुदेव, He is called वासुदेव. **He** is **not called** as वासुदेव due to His being the **progeny** of Vāsudeva. Because this goes against the **truth** that He **is** अज or Unborn. ना gives two **different** interpretations of **नवासुदेवः।** (i) नौति स्तौतीति **नवः असुदेवः** प्राणेश्वरो **यस्येति** वा। He is the Lord of the life of His **eulogizer.** (ii) **नवेन** स्तोत्रा **असुनैव दीव्यत** इति। He **sports** with the life of His eulogizer. The म.ता.नि. states वसुदेवसुतो नायं नायं गर्भेऽवसत्प्रभुः। नायं दशरथाज्जातो न चापि जमदग्नितः ॥(२.७८) विदोषविज्ञानसुखैकरूपोप्यजो जनान्मोहयितुं मृषैव। योषित्सु पुंसो ह्यजनीव दृश्यते न जायते क्वापि बलादिविग्रहः॥ यथा नृसिंहाकृतिराविरासीत्स्त-म्भात्तथा नित्यतनुत्वतो विभुः। आविर्भवेद्योषिति नो मलोत्थस्तथापि मोहाय निदर्शयेत्तथा ॥(१०.४८-९) यः सत्सुखज्ञानबलैकदेहः समस्तदोषस्पर्शोज्झितः

सदा। अव्यक्ततत्कार्यमयो न यस्य देहः कुतश्चित् क्व च स ह्यजो हरिः ॥ न शुक्लरक्तप्रभवोऽस्य कायस्तथापि तत्पुत्रतयोच्यते मृषा। जनस्य मोहाय शरीरतोऽस्या यदाविरासीदमलस्वरूपः ॥ ....यथा पुरा स्तम्भत आविरासीदशुक्लरक्तोऽपि नृसिंहरूपः। तथैव कृष्णोऽपि तथापि मातापितृक्रमादेव विमोहयत्यजः ॥ (१२.६०, ६१.६३) **[पादादियमक]**

5) **(पदच्छेदः) सः। अजनि। देवक्यन्ते। यस्मात्। अनुकम्पनावत्। एव। क्यन्ते। अवदन् देव। क्यं। ते भुवनं। हि। सुराः। सदा एव। देवक्यन्ते ॥**

This verse refers to the popular belief of Lord Kṛṣṇa's birth as the son of Devakī and Vasudeva. It is made **clear that** He took birth *near* **Devakī (देवक्यन्ते)** and **not from her womb**. The verse contains the word **देवक्यन्ते** occurring at four places and it has been interpreted in several ways : 1) **देवकी+अन्ते** - (i) देवक्याः समीपे एव।(टि) (ii) इदानीं देवकीजठरजातत्वप्रसिद्धिविरोधं परिहरन् देवैः कृतां स्तुतिं लेशतो दर्शयति **स** इति। **सः** कृष्णः। **देवक्याः अन्ते** समीप एव। **अजनि** प्रादुर्बभूव। अत एव न तन्मलोत्थः। तत्समीप एव प्रादुर्भूतत्वात्तज्जठरजातत्वप्रसिद्धिरिति भावः।(या) Lord Kṛṣṇa is believed to have been born from the womb of Devakī, only because He manifested as a child nearby Devakī. 2) (i) अथवा देवान्कात्कुर्वन्ति पीडयन्तीति **देवकिनो दैत्याः** तेषां **अन्ते**। तादर्थ्ये **सप्तमी**। तेषां नाशाय भगवान्मधुसूदनः आविर्बभूव।**(टि)** (ii) किमर्थं प्रादर्भूत इत्यत उक्तं **देवक्यन्त** इति। देवानां **कः** कात्कारः **येषामस्तीति** ते **देवकिनो** दैत्याः। तेषामन्ते। तादर्थ्ये सप्तमी। विनाशायेत्यर्थः।(या) "Why did Lord Kṛṣṇa take birth ?" "To destroy demons who reproach gods." "But how do you say that He took birth to destroy demons ?". The reply is : 3) **यस्मात् अनुकम्पनावदेव क्यन्ते अवदन् ते सुराः।** "Because such a destruction was prayed for by gods." (i) **कस्मात् यस्मात्** ते सुराः **देवाः** क्यन्ते कं सुखं येषां ते किनः सुखिनः **(लक्ष्म्यादयः**-त) तेषामन्तोऽवसानं (अवधिभूतः-त) उत्तरावधिः **(सीमेत्यर्थः-ना) क्यन्तः** 'यतो

वाचो निवर्तन्ते' इति श्रुतेः। अपरिमितानन्द इति यावत्। तत्र सामीपिकाधिकरणे सप्तमी। तत्समीपे। अनुकम्पनावदेव यथा तस्य सत्सु कृपा भवेत्तथा भूतं वचन**मवदन्**।(टि) The Lord is infinitely blissful. He is beyond the limits of bliss. Gods prayed such Blissful Lord to show pity on the good and protect them, by destroying the demons. 4) (i) **कस्मान्नमलोत्थ** इत्यत उक्तं **यस्मात् सुराः** वेदाभिमानिनो देवाः। **देवक्यन्तेऽवदन्निति** कं सुखं एषामस्तीति किनः ते च ते देवाश्च देवकिनः। कडारादित्वात्परनिपातः। तेषामन्ते तारतम्यान्तगप्रकृतिपरं परिपूर्णसुखमेवावदन्। तस्मान्न **मलसंभावन**-मस्मिन्निति भावः।(या) Here **देवक्यन्ते** is interpreted as 'the Lord is the highest among gods who enjoy happiness'. That is, He is fully happy and infinitely blissful. And this leads to confirm that Lord Kṛṣṇa was not born from the womb of Devakī, which contains impurities like blood, flesh &c. (ii) **अनु** वचनश्रवणानन्तरमेव असुराणां **कम्पना** कम्पः विद्यते यस्मिंस्तत्तथा असुरकम्पहेतुभूतं वचनमवदन्। तस्मादित्यर्थः। असुरवधार्थं ब्रह्मादिप्रार्थनावचनादाविर्बभूवेत्यर्थः।(टि). Here **अनु+कम्पना** is related to demons. They trembled on hearing the prayer of gods to Lord Kṛṣṇa, who responded to the prayer and took birth nearby Devakī. (iii) **कम्पनावत्** वचनं कम्पमानाः सन्तो वचनमवदन्। किमवदन् हे देव जगन्नाथ **क्यं** कमन्द्रियं मनः 'मन एव मनुष्याणां कारणं बन्धमोक्षयोः।' 'मनः परं कारणमामनन्ति' इत्यादेः मुख्यकारणं मनः तदभिमानी तच्छब्देनोच्यते। केन मनोभिमानिना रुद्रेण। **अथवा** को विरिञ्चः तेन यम्यते नियम्यते तदधीनमिति यावत्। तत् **क्यं** निरुक्तत्वात् अकारलोपः। एतादृशं **भुवनं** जगत् **कि** कमस्यास्तीति **कि** सुखि यथा भवेत्तथा रक्ष इत्यवदन्।(टि). Gods with tremor in their bodies because of the fear of demons, prayed to the Lord to protect this world so that it becomes happy and comfortable to live in. Further, कस्मिन्सति। **अन्ते** नृजन्मभिः सुखस्यान्ते दैत्यैः प्राप्ते सतीत्यर्थः। कथंभूते देवे **अन्ते** अन्तं करोति नाशयतीति अन्तिः तस्य सबुद्धिः। **अन्ते** हे अरिहन्। कथंभूते। **सदैवदे** देवेभ्यः प्रार्थितं महत् अभीष्टं ददातीति

सदैवदः तस्मिन्नित्यर्थः।(टि). The Lord always grants the wishes of gods. He is called as अन्तिः or Destroyer. And so He is addressed as अन्ते (vocative singular of अन्ति). Hence He was prayed by gods when demons having taken human form began to torment the Earth. Hence, 1) **देवक्यन्ते** = देवकी+अन्ते= Nearby Devakī. 2) **देवक्यन्ते** = देव+क्‍वी+अन्ते = For the destruction of demons who offend gods. 3) **अनुकम्पनावदेवक्यन्ते** = **अनुकम्पनावत्+एव+क्यन्ते।** With tremor and to arouse pity, gods prayed to the Lord who is क्यन्त = अपरिमितानन्द = of infinite bliss. 4) **सदैवदेवक्यन्ते** = सदैव+दे+अव+कि+अन्ते=हे **अन्ते** (Destroyer) हे **सदैवदे** (= Granter of wishes of gods) **कि** (happy) **अव** (protect). 5) **देवक्यन्ते** = देव+क्यं+ते= O Lord, this thy world (भुवन) is क्यम् [controlled by कः (Brahmā or Rudra)] and should be protected by Thee. 6) **क्यन्ते** = Gods prayed at His feet or, near क्यन्त = अपरिमितानन्द = Infinitely blissful Lord. Note also interpretation of या. (अ) **सुरा** ब्रह्माद्याः अवतारानन्तरं **अनुकम्पना अव देव** इति पदच्छेदः। तथा अत्र सज्जनेषु हरेः **अनुकम्पना** कृपा यथा स्यात्तथा **अवदन्** अस्तुवन्। किमिति। हे **देव क्यं** को ब्रह्मा तन्निमितं क्यं **भुवनं अव** रक्ष। **हि** यस्मात् **सदैव ते** त्वदधीनं **क्यं** तस्मात्।(या) When the Lord descended as Child Kṛṣṇa, Brahmā and other gods prayed to Him to arouse mercy on good souls : "O Lord, protect this world created by Brahmā, because it is always dependent on Thee". (आ) **क्यन्ते** इत्यपिच्छेदः। **किनां** सुखिनां भुवनान्तर्गतानां **अन्ते** नाशे नृजन्मभिर्दैत्यैः प्राप्ते सति अव। इति शब्दोऽध्याहार्यः। तस्य चावदन्नित्यनेनान्वयः। **अनुकम्पनावत् एवेति** पदच्छेदः। अत्र अनुकम्पनावत् अवदन्नितिक्रियाविशेषणम्। **तथा च** सुराणां यत्स्तुतिरूपं वचनं तल्लोकानुकम्पापूर्वकमेवेत्युक्तं भवति। अस्यां योजनायां सदैवदे अव इति च्छेदो विवक्षितः। तथा च सदैवदे नित्यमेव सर्वपुरुषार्थप्रदे त्वयि विद्यमानं भुवनमवेति योज्यं।(या). It means क्यन्ते = की+अन्ते (अव). की=सुखी and अन्ते=नाशे. As demons have

descended on the earth to destroy (अन्त) happy i.e. good people, the Lord should protect them. And अनुकम्पनावदेव = अनुकम्पनावत्+एव. It means that gods prayed having mercy on the world of human beings. Thirdly, सदैवदेव = सदैवदे+अव. It means that the Lord who always (सदैव) grants (द) all human comforts should protect the world which resides in Him. It is worthy to note that वि. following ना. (see Appendix I) gives as many as 14 meanings of देवक्यन्ते अवदन् - 1. देवक्यन्ते = अक्षैः दीव्यतीति देवकः। (Śakuni, expert in dice-play) देवकः अस्य अस्तीति देवकी। (Dvāparayuga presided over by Śakuni) देवकिनः अन्ते। (At the end of Dvāparayuga) 2. क्यन्ते = कं जलमस्यास्तीति की। **(Pure water)** तस्य अन्ते। **(In the milky** ocean). 3. क्यन्ते = कानि शिरांसि अस्य सन्तीति की शेषः। तस्य अन्ते उपरिभागे। (On the hood of serpent Śeṣa). 4. क्यन्ते = कं सुखं येषामस्तीति किनः = दुःखरहितप्रशस्तसुखवन्तः लक्ष्म्यादयः देवाः। तेभ्यः अन्ते = ततः उत्तमे (Superior to even Goddess Lakṣmī and other gods). 5. सदैवदे = दैवं अदृष्टम्। तेन सहिताः सदैवाः। तान् दयते पालयतीति सदैवदे। [In the Lord who protects the **fortunate and religious** souls]. 6. देवक्यन्ते = देवकः सम्बन्धितया अस्य अस्तीति देवकी कंसः। तस्य अन्तः नाशः। तन्निमित्तेन (नैमित्तिकी सप्तमी) [For the sake of destroying Kaṁsa] 7. अनुकम्पनावदेवक्यन्ते = अनुकम्पनं कृपां अवद्यति (दो अवखण्डने) इति। कृपाऽविषयः इति यावत्। वबयोः अभेदात् बक्यन्ते इति च्छेदः। 'अहो बकीयस्तनकालकूटं अपाययत्' इति बकीशब्देन पूतनायाः ग्रहणात्। [To kill Pūtanā unfit to receive mercy.] 8. देवक्यन्ते = अक्षैः दीव्यतीति देवकः शकुनिः। तत्सम्बन्धिनः दुर्योधनप्रभृतयः देवकिनः। तेषां अन्ते नाशाय भगवदवतारात्। [To destroy Duryodhana and others related to Śakuni] 9. देवक्यन्ते = दीनत्वात् देवनामानः इत्याचार्यैः उक्तत्वात् अपभ्रष्टदेवताः दैत्याः देवाः। कुत्सायां देवकाः। क+इ इति अकारात्. तृतीयमक्षरम्। तृतीयोऽतिशये इति अतिशयार्थे। अत्यन्तं अपभ्रष्टाः देवाः दैत्याः गृह्यन्ते।

[To destroy demons] 10. देवक्यन्ते = देवकी युधिष्ठिरभार्या। सा अन्ते यस्य सः देवक्यन्तः युधिष्ठिरः। नैमित्तिकी सप्तमी। युधिष्ठिरार्थम्। [To help Yudhiṣṭhira] 11. देवक्यन्ते = कः प्रजापतिरुद्दिष्टः को वायुरिति शब्दितः इति। देवः+कः = मुख्यवायुः। सम्बन्धितया अस्य अस्तीति देवकी भीमसेनः। तन्निमित्तेन। [For the sake of Bhīma, the incarnation of Mukhya Vāyu who is superior to gods] 12. देवक्यन्ते = देवैः कायते (कै शब्दे) स्तूयते इति देवकी अर्जुनः। तन्निमित्तेन इत्यर्थः। [For the sake of Arjuna, the incarnation of Indra praised by gods] 13. देवक्यन्ते = देवानां कौ = रोगनिवारणे (किति निवासे रोगापनयने च) देववैद्यौ अश्विनौ। तयोः सम्बन्धिनौ नकुलसहदेवौ देवकिनौ। तन्निमित्तेन इत्यर्थः। [For the sake of Nakula and Sahadeva, the incarnations of Aśvins, the divine physicians] 14. देवक्यन्ते = देवं श्रीविष्णुं कायन्ति (कै शब्दे) इति देवकाः वेदाः। तत्सम्बन्धी धर्मः। तन्निमित्तेन इत्यर्थः। [To establish the righteousness laid down by the Vedas] अनुकम्पनावद् भुवनं अव इति अवदन् = Gods prayed for the protection of the world. वि. also observes that Śrī Madhvācārya has highlighted the events of the whole of the *Bhāgavata* and the *Mahābhārata* through the words देवक्यन्ते अवदन्. म.ता.नि. narrates the motive behind Lord Kṛṣṇa's manifestation (अ.११) एतस्मिन्नेव काले कमलभवशिवाग्रेसराः शक्रपूर्वा भूम्या पापात्मदैत्यैर्भुवि कृतनिलयैराक्रमं चासहन्त्या। ईयुर्देवाधिदेवं शरणमजगुरुं पूर्णषाड्गुण्यमूर्तिं क्षीराब्धौ नागभोगे शयितमनुपमानन्दसन्दोहदेहम्॥ ऊचुः परं पुरुषमेनमनन्तशक्तिं सूक्तेन तेऽब्जजमुखा अपि पौरुषेण। स्तुत्वा धरासुरवराक्रमणात् परेश खिन्ना यतो हि विमुखास्तव तेऽतिपापाः॥ दुस्संगतिर्भवति भारवदेव देव नित्यं सतामपि हि नः शृणु वाक्यमीश। पूर्वं हता दितिसुता भवता रणेषु ह्यस्मत्प्रियार्थमधुना भुवि तेऽभिजाताः॥ (१७८-१८०) अतस्त्वया भुव्यवतीर्य देव कार्याणि कार्याण्यखिलानि देव। त्वमेव देवेश गतिः सुराणां ब्रह्मेशशक्रेन्दुयमादिकानाम्॥ त्वमेव नित्योदितपूर्णशक्तिस्त्वमेव नित्योदितपूर्णचिद्घनः। त्वमेव नित्योदितपूर्णसत्सुखस्त्वादृङ्न कश्चित्कुत एव तेऽधिकः॥ (२१८-२१९) इतीरितः

सोऽब्जभवेन केशवस्तथेति चोक्त्वा पुनराह देवताः। सर्वे भवन्तो भवताशु मानुषे कार्यानुसारेण यथानुरूपतः ॥ अथावतीर्णाः सकलाश्च देवता यथायथैवाह हरिस्तथा तथा ॥ः (२२८-२२९). **[सर्वपादान्त्ययमक]**

6) **(पदच्छेदः) नीतः। वसुदेवेन। (अवसुदेवेन) स्वततेन। सः। गोकुलं। सवसुदेवेन। (सवसु। देवेन) (सुअव। सुदे (अवे + न) वेन।) तत्र। यशोदा। ~~तनयं। मेने। कृष्णं। स्वकीयम्।~~ अवदाततनयम् ॥**

Herewith begins a brief account of the important incidents in the life of Lord Kṛṣṇa : (i) इतः परं भारतोदितं कृष्णचरित्रं क्रमेण संक्षेपतो दर्शयत्युत्तरश्लोकैः।(या). (ii) इतः परं हरिवंशाद्युक्तं कृष्णचरितं क्रमेण संक्षेपतो दर्शयत्युत्तरश्लोकैः।(भ). This verse refers to the incident of Lord Kṛṣṇa, the just born child, being taken by Vasudeva to Nandagopa at Gokul. The main sentence is **सः स्वततेन वसुदेवेन गोकुलं नीतः।** (He was taken to Gokula by His father Vasudeva). Significantly the words in the verse are explained as having different meanings. I. **वसुदेवेन** - (i) वसुदेवेन, By Vasudeva. (ii) वसुना शृंखलारूपेण दीव्यति गच्छतीति वसुदेवः, तेन।(टि) By him who was walking with the wealth of chains. II. **स्वततेन** - a) (i) स्वतातेन। (टी टि या) (ii) ततः = तातः इत्यर्थः।(ब वि). By His father. b) (i) क्रीडा-शृङ्खलया बद्धेनापि नानेन स्वसामर्थ्येन नीतः। किं तु **स्वततेन** स्वस्मिन् वसुदेवे ततेन व्याप्तेन देवेन हरिणाऽनुगृहीतेन (तत्प्रेरणयेत्यर्थः-ना)।(टि). (ii) स्वस्मिन्व्याप्तेन हरिणा प्रेरितेन।(या) Vasudeva was prompted by Lord Viṣṇu Who had pervaded (तत) him (स्व). III. **सुवसुदेवेन** - a) (i) सु सुष्ठु वसु द्रव्यं येषां ते सुवसवः वैश्याः तेषां देवेन स्वामिना। यद्वा सु वसुदेवेन द्रोणनामकवसूत्तमस्वरूपेण नंदेन सह।(या). Nanda was the chief of wealthy Vaiśyas at Gokula. Or, Nanda was the incarnation of Droṇa, a higher Vasu. b) **सु+वसुदे+अवे+न.** (i) कंसस्य सुकरं दातुमागते ह्यवमेऽनुजे।(टी). (ii) सु शोभनं वसु कररूपं ददातीति सुवसुदस्तस्मिन्।

अवे अवमे अनुजे नन्दगोपे बृहद्वनान्मधुरां गन्तुं यमुनातीरं प्रति आगते सतीति शेषः। अथवा अवे इत्येतदेवावर्त्य अव गताविति धातोः **अवे** आगते सतीति व्याख्येयम्। .... अस्यां योजनायां नेत्यस्य स्वत इत्यध्याहृतेनान्वयः। न स्वतः स्वसामर्थ्येन नीत इत्यर्थः।(भ). When Nanda the younger brother of Vasudeva (अवे=अवमे) had come (अवे) to the bank of Yamunā on his way to pay (दे) taxes to Kaṁsa in the form of valuable (सु) wealth (वसु). न means स्वतः न = Vasudeva did not take Kṛṣṇa with his own strength. c) सु+वसु+देवेन - शोभनाः देवाः वसवश्च यस्मात्स तथोक्तः। कश्यपावतारत्वात्तस्येति भावः। कुरु पाण्डववत्पृथगुक्तिः।(ना). Accordingly, it qualifies वसुदेव, who is the incarnation of Kaśyapa, who created excellent (सु) Vasus (वसु) and gods (देव). IV. **नीतो वसुदेवेन** = **नीतः + अवसुदेवेन स्वततेन** (i) आख्यं वा वसु यत्तेन यस्य क्रीडादिसप्तकम्। सब्रह्माऽवसुदेवः स्यात्स्वंतातोऽपि स उच्यते॥ स्वः स्वतन्त्रो हरिस्तातो यस्य तेन विरिंचिना। देवेन गोकुलं नीतो यत्र नन्दो वसूत्तमः॥(टी). (ii) आख्यं वसु परब्रह्म तेन सह दीव्यति क्रीडादिसप्तकं करोतीति अवसुदेवो ब्रह्मा तेन। **स्वततेन** स्वः स्वतन्त्रो विष्णुः ततः तातो यस्य स तथोक्तः। तेन विष्णुपुत्रेण देवेन। सः कृष्णः गोकुलं नीतः।(टि). (iii) अः विष्णुः तदाख्येन **वसुना** धनेन **देवाः** क्रीडाविजिगीषाद्युतिस्तुति-मोदकान्तिगतयो यस्यासौ तथोक्तस्तेन **स्वततेन स्वः** स्वतन्त्रो हरिः ततः तातो जनको यस्यासौ स्वततस्तेन विरिंचेन गोकुलं नीतः। तत्प्रार्थनया गोकुलमाजगामेति यावत्। यथोक्तं 'ब्रह्मा प्रणम्याह तमात्मकारणमि'ति आरभ्य 'तौ देवकीवसुदेवौ च तेपतुस्तपस्त्वदीयं सुतमिच्छमानौ। त्वामेव तस्मात्प्रथमं प्रदर्श्य तत्र स्वरूपं हि ततो व्रजं व्रज' (ता.नि. ११ २२३-२२९) इति।(भ) [अ = Lord Viṣṇu; वसु = wealth; देव = functioning; स्व = Independent Lord; तत = **father]** It means that it was not Vasudeva who took the child to Gokula, but it was Brahmā who is the son of Viṣṇu and who functions or sports with Viṣṇu as his wealth, took the child to Gokula. That is, the Lord came to Gokula according to the prayer submitted by Brahmā

as stated by Śrī Madhvācārya in म.ता.नि. XI. 223-229. V. **अवदात+नयम्** (i) अवदाता विमुक्ताः स्युस्तेषामपि च नायकम्। (टी). (ii) अवदाताः विमुक्तास्तान्नयतीति **अवदातनयः** तं, मुक्तनायकम्।(टि). (iii) अवदाताः शुद्धाः मुक्ताः तान्नयतीति अवदातनयः नित्यमुक्त इति यावत्। तं कृष्णम्।(या). Controller of pure released souls. ना. reads and interprets differently :- 1) **सुगोकुलं** = शोभनं गोकुलं।. 2) कीदृशं गोकुलं। **सुवसु** सु शोभनानि वसूनि यस्मिन्निति वा। 3) कीदृशः सः। **अवसुदेवेनः। अः** परमात्मैव **वसु** मुख्यं धनं येषां ते **अवसवः** परमैकान्ताः ते च ते **देवाश्च** ब्रह्मादयस्तेषाम् **इनः** स्वामीत्यर्थः। विसर्जनीयस्य सत्त्वे तेन स्वेत्यत्र द्विसकारस्को निर्देशः। पक्षान्तरेषु 'अनचि च' [८.४.४७] इति द्वित्वेन सकारद्वयमस्त्येव। अथवा **अवसुदे** वेनेति पदच्छेदः। बध्यत इति **बः** तेन बद्धेन वसुदेवेनेत्यर्थः बवयोरभेदात्। अन्येभ्योऽपि दृश्यत (३.२.१७८) इति बध्यतेर्डः। **कस्मिन्** सति। **अवः** अवरः कनिष्ठबन्धुर्नन्दगोपः तस्मिन् **सुदे** सुष्ठु धनं गोरसादि धनदे कंसाय दातुमागते सतीत्यर्थः।(ना) Here अ = Lord Viṣṇu and वसु = primary wealth; and so अवसवः are those gods like Brahmā who worship Lord Viṣṇu solely and exclusively. Their Lord is Viṣṇu. Or, it means that Nandagopa **had come to pay taxes to king** Kaṁsa. *Read* also : **अव** अवमे अनुजे **सुदे** सति। सुशब्दप्रतिपाद्यकरदे सतीत्यर्थः। कंसायेत्यत्र शेषः। ननु गोकुलं सु इत्यत्र वकारस्यैव सत्वात् कथं अवेति पदमिति चेत्। सत्यम्। अकारस्य लुप्तत्वात्। कुतः वष्टिभागुरिमतावष्टम्भात्। भागवतचतुर्थस्कन्धतात्पर्ये वधिमित्यस्य अवधिमिति व्याख्याततत्वान्न कुसृष्टिः।(त). The म.ता.नि. narrates (अ.१२) : ततस्समादाय हरिं ययौ स शूरात्मजो नन्दगृहान्निशीथे ॥६७॥ गतेषु तत्रैव दिनेषु केषुचित् जगाम कंसस्य गृहं स नन्दः॥ पूर्वं हि नन्दः स करं हि दातुं बृहद्वनान्निःसृतः प्राप कृष्णाम्॥ (७९-८०). **[पादान्त्ययमक]**

7) (पदच्छेदः) **ववृधे। गोकुलं। अधि। (आद्यः। देवः।) (आ। द्योदेवः।) आत्। यः। देवः। विश्वं। अद्भुताकुलं। अध्यात् (अधि। आ। अत्)। तत्र। च। पूतनिकायाः। वधं। अकरोत्। यन्निजाः। सुपूतनिकायाः॥**

This verse refers to the growth of Lord Kṛṣṇa in His childhood and also mentions His killing Pūtanā. One meaning of the verse has been given in the English version. There are various explanations. I. **ववृधे+गोकुलं+अधि+आ+द्योदेवः** - Lord Kṛṣṇa was believed to grow, only by those who were ignorant of the fact that He has no growth nor decay. **द्योदेवः** - स्वर्गोपलक्षितसर्वलोकस्वामी कृष्णः। **आगोकुलं अधि** ईषत् (आसमंतात्) गवां अज्ञदृष्टीनां कुलं समूहं इन्द्रियसंमूढजनमधिकृत्य अज्ञदृष्ट्यैति यावत्। **ववृधे**। न वस्तुतः कुतः ? (या). How to know that He has no growth in reality ? **अद्भुताकुलं** अद्भुतमनिर्वाच्यं यथा स्यात्तथा आकुलं व्याकुलं विश्वं। **अध्यात्** अधि आधिक्येन आसमन्तात् अत्तीत्यत् संहर्तेति यावत्। तथा च प्रळयेऽप्यवस्थितस्य न वस्तुतो वृद्धिरिति भावः।(या) Because, at the time of *Mahāpralaya* the entire universe is devoured by the Lord, which means He alone exists thereafter. So He is कूटस्थनित्य and निर्विकारी, having no change like growth at any time. This is made more explicit by टि following टी : (i) अज्ञदृष्ट्यैव भगवान्ववृधे सोऽपि गोकुले। विष्णु(ष्णो)र्देवोऽन्यथा विश्वमध्यात्कथमद्भुतम्। आकुलं ...॥(टी). (ii) स देवः कृष्णः **गोकुलमधि** गोकुले इत्यर्थः। 'अधिशीङ्स्थासां कर्मे'ति अधियोगात्कर्मसंज्ञा। अज्ञदृष्ट्यैव ववृधे न तु स्वरूपापेक्षया। कुतः **आत्** विष्णोः उभयत्र भावप्रधानो निर्देशः विष्णुत्वादित्यर्थः। न हि व्याप्त आकाशो वर्धते तद्वत्। अत एव विष्णोरित्युक्तम्। विष्लृ व्याप्ताविति धातुव्याख्यानात्। वृद्धौ विष्णुत्वायोगात्। बाधकान्तरं चाह। **यो देव** इति। स कः **यो देवः** भगवान् **अद्भुताकुलं** अद्भुतं च तत् आकुलं च तत्तथा। एवंभूतं **विश्वम् अध्यात्**। अध्यादत् भक्षितवान्। अध्यादिति अडभावः छान्दसः 'अदः सर्वेषाम्' [७.३.१००] इति अद उत्तरस्यापृक्तसार्वधातुकत्वस्याड्विधानात्। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति वचनात्। यदि परमात्मा कृष्णो वृद्धिमान् स्यात् तर्हि जगत्संहर्ता न स्यात्, भवति च जगत्संहर्ता तस्मान्न वृद्धिमान् न च विपर्यये पर्यवसाने (व्याप्तिः यो वृद्धिमान् सः) जगत्संहर्ता न भवति यथा देवदत्त इति व्यतिरेकव्याप्त्याश्रयणात्।(टि) टी. and टि

split the line as वृवृधे+गोकुलं+अधि+आत्+यः+देवः+विश्वं+अद्भुताकुलं+अध्यात्. Here two reasons are adduced to prove that the Lord has no real growth : (i) आत् = विष्णोः = विष्णुत्वात् (अः = विष्णुः) = व्याप्तत्वात् = Being completely all-pervading. All-pervading and growing are mutually contradictory. (ii) As stated above, He devours entire universe. [Note also (i) आद्यो देवो विष्णुः ... अध्यात्। आधिक्येन समन्तात् अत् संहर्ताऽऽसीत्।(भ) (ii) गोकुलमध्ये अततीति गोकुलमध्यात्। यो देवो ... अधि आधिक्येन आ समन्तात् अत्तीति अध्यात्। विचित्र-सर्वजगत्संहारक इत्यर्थः।(ना).] But ब. understands differently : यं किल विस्मयविभ्रान्तं विश्वं अध्यायत् स चाऽद्यो देवः अधिगोकुलं ववृधे।(ब). The Lord grew in Gokula. Secondly ब. equates अध्यात् = अध्यायत् and translates विश्वमद्भुताकुलमध्यात् as 'The Lord is meditated upon or praised by the entire universe being agitated by wonder'. ब. reluctantly approves the interpretation of या. as 'विश्वं अधि अत्ति'. (See Appendix - VIII) The whole of first line is interpreted differently also : (i) चाथवा तस्माद्गोकुलं ववृधेऽधिकम्। अकारवाच्यश्च योऽसौ गोकुलप्रतिपक्षगम्। अद्भुतं चाकुलं चापि सर्वमध्याददञ्जसा॥(टी). (ii) अथवा आद्विष्णोः सकाशात् गोकुलं अधि अधिकं ववृधे। कृष्णावतारेण गोकुलस्याधिका वृद्धिर्जातेत्यर्थः। कीदृशं अद्भुताकुलं। व्याख्यातचरमेतत्। अथवा यो देवः कृष्णः गोकुलप्रतिपक्षगं (अगोकुलं गोकुलविरुद्धम्) अद्भुताकुलं सर्वमञ्जसा अध्यादत् पुनरन्वयः।(टि). (iii) यद्वा। यो देवः अद्भुताकुलं विश्वं सर्वं अगोकुलं गोकुलविरोधितृणावर्तादिकं। अध्यात् अधि आधिक्येन आसमंतात् अत् संहर्ता यः तस्मात्। आत् अकारशब्दवाच्यात् कृष्णात्। गोकुलं अधि आधिक्येन। ववृधे अवर्धत। तृणावर्तादिवैरिपराभूतं नाभूदित्यर्थः।(या). (iv) यः = हरिः; अद्भुताकुलं = अनिर्वचनीयत्वेन आकुलं; अगोकुलं = गोशत्रुसमूहं; विश्वं = दैत्यसमूहं; अध्यात् = हतवान्; आत् = अकारवाच्यात् हरेः; गोकुलं = गोसमूहं; अधिववृधे = आधिक्येन वृद्धिंगतम्। [(वि) Sanskrit version of original in Kannada]. All this means that Gokula prospered because of the presence of Lord Kṛṣṇa who destroyed all demons who

wanted to destroy Gokula. The third quarter **तत्र च पूतनिकायाः वधं अकरोत्** states Lord's killing Pūtanā. According to या. the fourth quarter states that the Lord cannot be said to have incurred स्त्रीहत्यापाप or sin of killing a woman : **तत्र** गोकुले। **च** शब्दः कर्मान्तरसमुच्चयार्थः। नाम्ना **पूतनिकायाः** राक्षस्याः वधमकरोत्। स्त्रीहत्यया पापं स्यादित्यत उक्तम्। यन्निजाः यद्भक्ताः। **पूतनिकायाः पूतः** शुद्धः कर्मवशात् **निः** नीचः **कायो** येषां ते तथोक्ताः कर्मवशात् नीचयोनिं प्राप्ताः यद्भक्ताः अपि शुद्धाः भवन्ति इति शेषः तस्य पापमसंभावितमेवेति भावः। अनेन पूतनिकाविष्टोर्वश्याः शापमोचनेन शुद्धिः सूचितेति ज्ञातव्यम्।(या). The Lord purifies His devotees, when they get birth in lower species because of their evil deeds. Such a purifier cannot contact any sin. Here it is clarified that the soul of Urvaśī in the body of Pūtanā got purified, whereas that of Tāṭakā went to hell. The interpretation of others is on similar lines : (i) जघान पूतनां तत्र यस्य भक्ताः स्वभावतः। शापतो नीचकायाश्च पूतकाया भवन्ति हि ॥ पूर्वं, पुंसां समूहो वा यद्भक्तानां विशुद्ध्यति (टी) (ii) स कः **यन्निजाः सुपूतनिकायाः** यन्निजाः यस्य निजाः यन्निजाः यस्य स्वभावतो भक्ताः शापतो निर्नीचः (निकृष्टः-ना) **कायो** देहो राक्षसादिर्येषां ते तथोक्ताः नीचकायाः पूर्वं पश्चाद्भगवदनुग्रहेण सुपूताः पूतकाया इति पूतनिकाया भवन्ति। हि प्रसिद्धमेतत्। 'लेभे गतिं धात्र्युचितामि'त्यादिना पूतनाकंसनरकशिशुपालादिनिष्ठस्वभावभक्तानामुर्वश्यादीनां सद्गत्युक्तेः। अनेन भक्तानुकम्पित्वं भगवतो वर्णितम्। अथवा **यन्निजाः** यस्य निजाः यद्भक्ताः **सुपूतनिकायाः** सुपूतः निकायः समूहो येषां ते तथोक्ताः। न च निकायशब्दस्य 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' [३.३.४१] इति निवासाद्यर्थे साधितत्वात्कथं समूहार्थत्वमिति वाच्यम्। 'प्रयोगतोऽनुगन्तव्याः शब्दानां शक्तय' इति वचनात् समूहार्थत्वमपि द्रष्टव्यम्।(टि). [Note सुपूतनिकायाः = पवित्रितदेहाः। 'निकायः = The body' (V.S. Apte) (ब)]. The म.ता.नि. narrates (अ.१२) : सा पूतना नाम निजस्वरूपमाच्छाद्य रात्रौ शुभरूपवच्च ॥ विवेश नन्दस्य गृहं बृहद्वनप्रान्ते हि मार्गे रचितं प्रयाणे ॥८३-४॥ ... तया प्रदत्तं स्तनमीशितासुभिः पपौ

सहैवाशु जनार्दनः प्रभुः ॥८६॥ ... सा ताटका चोर्वशीसंप्रविष्टा कृष्णावध्यानान्निरयं संजगाम ॥ सा तूर्वशी कृष्णभुक्तस्तनेन पूता स्वर्गं प्रययौ तत्क्षणेन ॥८७॥ **[पादान्त्ययमक]**

8) (पदच्छेदः) **अधुनोत्। शकटं। लोली। पादाङ्गुष्ठेन। वातपेशशकटं। (टंलो) लोली। अतनोत्। रक्षां। अस्य। स्वाज्ञानात्। गोपिका। सदा। ईरक्षामस्य ॥**

This refers to the destruction of Śakaṭāsura by Lord Kṛṣṇa. Śakaṭāsura had come in the form of a cart and Lord Kṛṣṇa went under it and just shook His body and kicked the cart by His toe. That blow was enough to kill the demon who had taken the form of the cart. According to या. there is nothing to wonder in this feat of Child Kṛṣṇa. Because He is **वातपेशशकटं लोली**, which is interpreted in three ways : 1) Sleeper on the bed of Śeṣa; 2) Prompter of Śeṣa to become the bed; and 3) Controller of Sun's chariot. ***Read*** : प्रळये शेषशायित्वादिगुणकस्य नेदं चित्रमित्याशयेनाह **वातपेशेति। वातो** वायुः तं पिबन्तीति वातपाः तेषामीशः **शेषः** तल्लक्षणं शं सुखकरं **कटं** आस्तरणं द्वितीयासप्तम्यर्थे तस्मिन्। **लोली** शयनवानित्यर्थः। अथवा **वातपेशं शेषं शकटाय** सुखास्तरणाय **लोलयति** प्रेरयतीति वातपेशशकटं **लोली**। तत्र मुमागमः छान्दसो बोध्यः। यद्वा वाति प्रवर्तयति लोकं **स्वोदयेनेति** वा सदागमनशील इति वा वः। स चासौ आतपेशः सूर्यः **तस्य** शकटं शकटपदोपलक्षितं रथं लोलयतीति तथोक्तः।(या) This interpretation is slightly different from the explanation of **टी.** and टि. (i) नैतच्चित्रं यतो विष्णुर्विनाश्य सकलं जगत्। शेतेऽनन्तं **समादाय** तद्भोगे लीन एव हि ॥ वातं पिबन्ति ये तेषामीशः शेषः **शमात्मकः**। कटो ह्यास्तरणायासौ रमयत्येव तं हरिः ॥ आतपेशोऽथवा सूर्यस्तद्रथं लोलयत्यसौ ॥ (टी). (ii) टि. first interprets **शकट (श+कट)** as destroyer (कट) of joy (श) and then explains holding **लोली** = लः+अ+ली। अधुनोदिति क्रियापदश्रवणात् कर्तृपदमध्याहर्तव्यम्। भगवान् कृष्णः पदाङ्गुष्ठेन शकटं प्रसिद्धमधुनोत्। धूञ् कम्पने।

पातयामासेत्यर्थः। न केवलमेतावत्, शकटं शं सुखं कटते आवृणोति। कटे वर्षावरणयोरिति व्याख्यानात्। जीवनसुखनिवारकं एवंभूतं कामरूपधरं तद्रक्षो **बभञ्ज**। ह नैतच्चित्रम्। **यतोऽली अश्चासौ** लीचेत्यली **सर्वमस्मिन्** लापयति **सर्वं** यस्मिन्निति वा ली सर्वसंहर्ता अकारवाच्यो विष्णुः सकलं जगत् **विनाश्य** स्वं अनन्तं स्वास्तरणरूपं **शेषं** आदाय तद्भोगे लीन एव श्लिष्ट **एव** शेते। तात्पर्यकथनमेतत्। **लः** (अली) ला आदाने लाति स्वीकरोति स्वास्तरणरूपमनन्तमिति लः। शयनार्थमिति शेषः। कीदृशः **लः अः ली** ली श्लेषण इति धातोः लीनातीति **ली** लीनः शेषभोगे श्लिष्ट इत्यर्थः। **लः लीति** वा पदच्छेदः। पुनः कीदृशः **वातपेशशकटं लोली**। वातान् **पिबन्ति** इति वातपाः पिबतेः 'आतोऽनुपसर्गे कः' (३.२.३) इति **कप्रत्ययः**। 'आतो लोप इटि च' [६.४.६४] इत्याकारलोपः। वातपानां **नागानामीशः** स्वामी **शेषो वातपेशः स चासौ** शं **शमात्मकश्चासौ कटश्च आस्तरणरूपश्च स** तथा तं **लोलयति समयतीति** लोली तन्नियामक इत्यर्थः। **वा** इत्यथवा आतपेशशकटं लोली **आतपानां** मनुष्यदृश्यतेजसामीशः सूर्यः **तस्य** शकटं तद्रथं लोलयति तद्रथनियामकः। 'उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेत वा उ।' (ऋ) 'रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः' इति **श्रुतिः**। (यजुर्वेदे). (टि) (iii) भ. holds **लः+अली** and also as **वा+आतपेशशकटं+लोली : लः अलीति वा पदच्छेदः**। लाति उपादत्ते इति लः। शेषभोगे अली अलीनोऽव्यक्तः सन्नेव वर्तत इत्यर्थः। अथवा **वा, आतपेशशकटं, लोलीति छेदः**। वाशब्द एवार्थे। तस्य पादाङ्गुष्ठेनैवेति पूर्वेणैव योजना। आतपेशः **सूर्यस्तस्य** शकटं रथं लोलयतीति **तथोक्तः**। तथा च कालचक्रे **समारोप्य सूर्यरथभ्रामकस्य** हरेर्नैतच्छकटनिपातनं **चित्रमिति** भावः।(भ) (iv). ना explains somewhat differently : **यो** देवः **वातपेशशकटं लोली** वातं **पिबन्तीति** वातपाः **सर्पाः तेषामीशः शेषः** स एव शः सुखरूपो **मुक्तः कटः** मंचकः। तं **लोलयति** आन्दोलयति तत्र शयानः सन् तत्राङ्गपरिवर्तनेन तमपि चञ्चलीकरोति पंचाशत्कोटिभूमंडलमपि यच्छिरसि सर्षपायति सोऽपि यदङ्गपरिवर्तनादिना न **सोढुं** समर्थस्तस्य शकटलोलनं नाद्भुतमित्यर्थः।(ना). The second line tells the ignorance of Yaśodā about her Son's infinite greatness, due to which she arranged rituals for His protection from evil spirits : (i) अकाराख्यस्य वै विष्णो रक्षां सा गोपिकाऽकरोत्।

अज्ञानाद्धि स्वसंबन्धा(द्वा)दीरक्षामस्य सर्वदा ॥ ईरः क्षामः कृशो यस्मादीरक्षामस्ततो हरिः। स्वः स्वतन्त्रस्तदज्ञानाद्गोपी तं रक्षतीति वा॥ ईरक्षोऽयमिमां लक्ष्मीं सर्वदा रक्षति प्रभुः। अमो ह्यमितसामर्थ्यात्तस्य रक्षाऽन्यतः कुतः ॥ (टी). (ii) **अस्य** अकाराख्यविष्णोः **गोपिका** यशोदा **रक्षा** ब्राह्मणमुखेन 'अव्यादजोऽङ्घ्रिमि' त्यादिरूपाम् **अतनोत्** अकरोत्। किं भीतत्वात्। न। **स्वाज्ञानात्** स्वसंबद्धाज्ञानात् स्वः स्वतन्त्रः अयं विष्णुः इत्यज्ञानान्निमित्ताद्वा। कथंभूतस्यास्य। **सदा** सर्वदा **ईरक्षामस्य** ईरः मुख्यवायुः क्षामः कृशः नीचो यस्मात्स तथा तस्य। सर्वान्रक्षति सूत्रात्मा वायुस्तमपि रक्षतीत्यर्थः। 'अपाङ्प्राङेति स्वधया गृभीत' इति मन्त्रमुदाहृत्य (ऐतरेय) उपनिषदा तथा प्राणनियामकत्वेन व्याख्यातत्वात्प्रमितोऽयमर्थः। वा इत्यथवा ईं लक्ष्मीं रक्षतीति **ईरक्षः** सदा नित्यमुक्तत्वेन तत्स्थापकः। 'मम योनिरप्स्वन्तः समुद्र' इति श्रुतेः। स चासौ अमश्च अमितसामर्थ्यश्च न विद्यते मा मितिर्मर्यादा देशतः कालतः गुणतश्च यस्य सोऽमः। तथा तस्य ईरक्षामस्य रक्षाऽन्यतः कुतः तस्मात्स्वाज्ञानमेव भगवद्रक्षाकरणे निमित्तमित्यर्थः।(टि). (iii) ... तथा च वायोरप्युत्तमस्य रमारक्षकस्य कृष्णस्य रक्षाकरणमज्ञानमूलकमेवेति भावः।(या). [Note also : सदा ईरक्षामस्य कदापि कुतोऽपि भयविधुरस्य। ईर गतौ कम्पने च कम्पेन भयस्योपलक्षणम्।(ब) Lord Kṛṣṇa is always devoid of fear.] The म.ता.नि. narrates (अ.१२) : तदा शयानः शकटस्य सोऽधः पदाक्षिपत्तं दितिजं निहन्तुम्। अनः समाविश्य दितेः सुतोऽसौ स्थितः प्रतीपाय हरेः सुपापः॥ क्षिप्तोऽनसिस्थः शकटाक्षनामा स विष्णुनेत्वा सहितः पपात। ममार चाशु प्रतिभग्नगात्रो व्यत्यस्तचक्राक्षमभूदनश्च॥ सा संभ्रमात्तं प्रतिगृह्य शङ्कया कृष्णं यशोदा द्विजवर्यसूक्तिभिः। संस्नापयामास नदीतटात्तदा समागता नन्दवचोभितर्जिता॥ (९०-९२). **[पादान्त्ययमक]**

9) (पदच्छेदः) **मुखलालनलोला। तन्मुखगं। जगत्। अचष्ट। सालनलोलातत्। न। अध्यैत्। मायां। अस्य। जगत्प्रभोः। स्व(स्वा)धिकततमायामस्य॥**

This refers to Child Kṛṣṇa showing the entire universe in his mouth to mother Yaśodā. 1) **मुखलालन्-लोला** - Attached or engaged in kissing the mouth. मुखस्य

लालने चुम्बनादिरूपे लोला आसक्ता सती।(या). 2) **सालनलोलातत्** - [सालन = सारण = having protector; लोल = mobile; अतत् = अलोल = immobile] (i) रलयोरभेदः। सालनं सारणं = सरक्षकं यल्लोलं = चरं अतत् = अचरं च।(ब) (ii) सालनं सारणं - रलयोः अभेदात्। नणयोः अभेदात्। स+अरणं = संरक्षकं + लोलं [चेष्टमानं]। संरक्षकलोलं+अ+तत् = स्वतन्त्रचेष्टारहितं।(वि). (iii) सा ~~गोपिका यशोदा~~ **सालनलोलातत्** सालनं सारणं रलयोरभेदात्। सपालकं ब्रह्मादिलोकपाल-सहितं तच्च तल्लोलं चलत् चञ्चलं एकप्रकारेणानवस्थितं अतश्च तस्माद्धरेरन्यत् सर्वदा तद्व्यतिरिक्तं एवं भूतं **जगत्**।(टि) [अतत् = distinct from the Lord] (iv) रलयोर्नणयोरभेदात् सालनं सारणं सरक्षकमिति यावत्। तच्च तत् लोलं चलं चेष्टमानमिति यावत् तच्च तत् अतच्च तद्व्यतिरिक्तं तत्तथोक्तं। अनेन जगतो भगवदात्मकत्वात् तत्र जगद्दर्शनं न चित्रमिति शंका निरस्तेति ज्ञातव्यम्। भेदस्यान्यत्र साधितत्वादिति भावः।(या). 3) **जगत्प्रभोः अस्य मायां न अध्यैत्** - She did not understand Lord's greatness. सा गोपिका **अस्य** कृष्णस्य **जगत्प्रभोः** जगदेकस्वामिनो **मायां** महिमानं सामर्थ्यं **नाध्यैत्** नाध्यगच्छत् नाज्ञासीदित्यर्थः। एवं विश्वरूपदर्शनेऽपि तन्महिमानं न सस्मारेति वा। तन्मायामोहितत्वात्। तथा चोक्तं 'प्रायो ज्ञातात्मतत्त्वां पुनरपि भगवानावृणोदात्मशक्त्ये'ति। (ता.नि.१३-४). (टि) 4) **स्वाधिक+तततम+आयामस्य** - This qualifies अस्य=कृष्णस्य. He is pervading the entire universe fully and perfectly. (i) किंभूतस्य **स्वधिकतततमायामस्य** अर्भकस्य बालकस्य सतोऽपि स्वधिकः अत्युत्तमः तततमः अतिशयेन ततः अतिव्याप्तः आयामो विस्तारो यस्य स तथोक्तस्तस्य। 'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना' (गीता.९.४) इत्यादेः।(टि). या. reads **स्वाधिकतततमायामस्य**. It understands जगत्प्रभु (जगत्+प्र+भु) as जगदुत्पत्त्यादिकर्तृ and आयाम as गुणक्रियारूपविस्तार. *Read* : **जगत्प्रभोः** जगत् प्रकर्षेण भावयतीति व्युत्पत्त्या जगदुत्पत्त्यादिकर्तुः। **स्वाधिकतततमायामस्य** सु सुष्ठु आ अधिकः अत्युत्तमः अतिशयेन ततः तततमः व्याप्तः आयामः गुणक्रियारूपविस्तारो यस्य स तथोक्तः तस्य कृष्णस्य। **मायां** महिमानं **नाध्यैत्** नाध्यगच्छत्। अनयाऽज्ञातं जगदुत्पत्त्यादिकर्तृत्वरूपं नियामकतयान्तर्बहिर्विस्तृतावयवत्वादि-रूपं च माहात्म्यान्तरमस्तीति भावः।(या). ब. splits **स्वधिक+तत+तमा**

**+आयाम** and understands तमा as ignorance or **illusion** : स्वधिकं ततो यस्तमाया **आयामः** स यस्य। तमा = अज्ञानं **भगवन्मायेति** यावत्। 'तमु ग्लानौ' **पचाद्यचि** 'तमा' अपि **इति** अमर**सुधा।(ब)**. It means that Lord's **illusion** is all-pervasive **and it** has spread fully and **completely** everywhere. **Due to** this all-pervasive illusion Yaśodā did not **understand** Lord's greatness. The म.ता.नि. narrates : **स** प्राकृतं शिशुमात्मानमुच्चैर्विजानन्त्या **मातुरादर्शनाय।** विजृम्भमाणोऽखिलमात्मसंस्थं प्रदर्शयामास कदाचिदीशः ॥ साण्डं महाभूतमनोऽभिमानमहत्प्रकृत्यावृत-मब्जादिभिः। सुरैः शिवेतैर्नरदैत्यसंघैर्युतं ददर्शास्य तनौ यशोदा ॥ न्यमीलयच्चाक्षिणी भीतभीता **जुगूह** चात्मानमथो रमेशः। **वपुः** स्वकीयं सुखचित्स्वरूपं पूर्णं सत्सु ज्ञापयंस्तद्व्यदर्शयत् ॥ (१२-११३-५) स कदाचिच्छिशुभावं कुर्वन्त्या मातुरात्मनो भूयः। अपनेतुं **परमेशो** मृदं जघासेक्षतां वयस्यानाम् ॥ मात्रोपालब्ध ईशो मुखविकृतिमकर्नाम्बमृद्भक्षिताहं पश्येत्यास्यान्तरे तु प्रकृतिविकृतियुक् सा जगत् पर्यपश्यत्। इत्थं देवोऽप्यचिन्त्यामपरदुरधिगां शक्तिमुच्चां प्रदर्श्य प्रायो ज्ञातात्मतत्त्वां पुनरपि भगवानावृणोदात्मशक्त्या ॥ (१३.४-५) **[पादान्त्ययमक]**

10) (पदच्छेदः) **तस्य। सुशर्माण्यकरः। (सुशर्माणि। अकरः।) दरिणः। गर्गः। सदुक्तिकर्माणि। अकरोत्। अवदत्। नामानमयम्। (नामानं। अयं।) (नाम। अनमयं।) जगदादिं। वासुदेवनामानं। अयं॥**

This refers to *Jātakarma, Nāmakaraṇa* and other ceremonies performed on Child Kṛṣṇa by Gargācārya, the *purohita* or priest of Yādavas. **तस्य** = कृष्णस्य; **दरिणः** = दरः अस्यास्तीति दरी तस्य शंखपाणेः।(Conch-bearer.) 1) **सुशर्माण्यकरः** is variously interpreted. a) I. **सुशर्म+अण्य+कर** - (i) सु सुष्ठु शर्म सुखं येषां ते सुशर्माणः सुसुखिनः तैरण्यः प्राप्यः अण् गताविति धातोः अण्यतेऽसौ अण्यः सुशर्माण्यः सुसुखिप्राप्यः एवंभूतो विष्णुः करे यस्य तत्प्रसादेन सुशर्माण्यकरः।(टि). (ii) सु समीचीनं शर्म सुखं येषां ते सुशर्माणः मुक्ताः, तैरण्यः प्राप्यः विष्णुः करे यस्य स तथोक्तः विष्ण्वर्चक इति यावत्।(या). (iii) सुशर्माण्यो मुक्तप्राप्यो विष्णुः करे यस्य।(ब). Gargācārya was a worshipper

of Lord Viṣṇu, who is approached by liberated and hence blissful, souls. By His grace, he had Him in his hands. b) अथवा सुशर्मा सुसुखी विष्णुरण्यः प्राप्यः करेण कर्मणा ज्ञानपूर्वेण यस्य सः।(टि). Gargācārya was approaching (= worshipping) Lord Viṣṇu through rituals preceded by right knowledge. c) (i) अथवा सुशर्मभिः सुक्षत्रिययादवैः अण्यः प्राप्यः करः पूजारूपो यस्य स तथा यादवपूज्यः यादवपुरोहित इत्यर्थः। 'तदुक्तं गर्गः शूरसुतोक्त्या व्रजमायात्सात्वतां पुरोधाः सः' [ता.नि.१३.२] इति।(टि). (ii) यद्वा सुशर्मभिर्यादवैः अण्यः प्राप्यः करो बलिर्यस्य स तथोक्तः। यादवानां पुरोहितः इति यावत्।(या) Gargācārya was receiving offerings from Yādavas as he was their family-priest. II. **सुशर्माणि+अ+करः** - अथवा सुशर्माणि च सुनामानि च नारायणादीनि अणानि कर्माणि च भूम्युद्धरणादीनि यस्य सः सुशर्माणी स चासावश्च अकारवाच्यश्च सः सुशर्माण्यः करे कर्मणि उद्देश्यो यस्य सः।(टि) Gargācārya was performing all rituals directed towards Lord Viṣṇu Who possesses auspicious names (सुशर्म), performs great deeds (अण) and is expressed by the term 'अ'. III. ना. gives two more meanings : 1) Gargācārya held Child Kṛṣṇa in his hands : सुशर्मणा पूर्णसुखेन विष्णुनाऽण्यौ प्राप्यौ अण् गतौ करौ हस्तौ यस्येत्यर्थः। स्वकरयुगेन बालकं धृतवानित्यर्थः।(ना) 2) Gargācārya performed auspicious ceremonies bringing मोक्ष to him and he had in his hand Lord Viṣṇu expressed by 'अ'कार : सुशर्माणि कर्माणीति वा। तत्कर्मकर्तुः स्वस्य मोक्षप्राप्तिर्भवतीत्यर्थः। अः विष्णुः करे यस्येत्यकरः इति।(ना). 2) **नामानमयम्** is also interpreted differently. I. **नामानम्+अयम्।** नामानं न विद्यते आ समन्तात् साकल्येनेति यावत् प्रतिपादकं मानं प्रमाणं यस्य स तथोक्तः तं। पुनः कथम्भूतम्। **अयं** अयति प्रेरयतीत्ययः तं जगत्प्रेरकम्।(या). The Lord cannot be known fully by any means of knowledge and he is the Prompter of the world. II. **न+अमानम्+अयम्** - न विद्यतेऽमानमज्ञानं यस्मात्तम्। एति सुखमस्मा-दित्ययस्तं च। 'अयः शुभावहो विधिः' इत्यमरः।(ब). The Lord

removes ignorance and grants bliss. III. **नामानमयम्** - मननं मानं मनसा चिन्तनं ध्यानमिति यावत्। न मानं अमानं अध्यानं बहिश्चित्तता। तेन मा ज्ञानं यस्य सोऽमानमः न अमानमः नामानमः। द्वे नञौ प्रकृतमर्थं गमयत इति हेतोः ध्यानैकगम्यः। यच्छति नियच्छति जगदिति **यः जगन्नियामकः**। नामानमश्चासौ यश्चेति नामानमयः तं तथा।(टि). The Lord can be reached only by मान(= ध्यान) or meditation and He is य or Controller of the world. 3) **जगदादिम्** is significant. (i) जगतः आदिं कारणं।(टि) (ii) जगत्कर्तारं।(या) (iii) जगदादिमित्युक्त्या वसुदेवापत्यत्वनिमित्तो न वासुदेवशब्दोऽस्य किं तु सर्गाद्यकाले वासुदेवात्मकत्वादित्युक्तं भवति।(ना). The Lord is the Creator of the world and hence He cannot be believed to be the son of Vasudeva. 4) **अयम्** is also meaningful. a) अयति प्रेरयतीत्ययः तं जगत्प्रेरकम्।(या). Motivater of the world. b) एति याति वा शरीरमिति यः। ... न यः जनिमानिति अयः तम्।(टि) The Lord is Unborn. 5) **अवदत्** - (i) उक्तवान्। तदुक्तं 'अजायमानो बहुधा विजायते।' 'वसुदेवसुतो नाऽयं नायं गर्भेऽवसत्प्रभुः। नायं दशरथाज्जातो न चापि जमदग्नितः। नित्यानन्दस्वरूपोऽयं क्रीडते नित्यदर्शन' इति।(टि). (ii) गर्गः जातकर्म-नामकरणादीन् संस्कारान् कृत्वा उक्तगुणहर्यवताररूपं कृष्णं नन्दादीन् प्रत्युपदिष्टवानित्यर्थः।(या). [Note : (i) **अनमयं** नास्ति नमः नमनं यस्य सः अनमः नमतीति नमः न नमः अनम इति वा। अनमश्चासौ यः यमनश्च स तथा।(त). The Lord has none to bow down and is the Controller of all. (ii) **अनमयं** जगच्चेष्टनादिव्यापारप्रचुरम्। अनमाः अनम्याः दुर्धर्षा अपि दैत्यादयस्तेषां यन्तारं वा। अनमं नमनानिच्छुजीवं याति प्राप्नोतीति वा कमपि नमयतीत्यर्थः। **अनं** चेष्टकं **अयं** शुभं मङ्गलरूपं वा। अयः शुभावहो विधिरित्यभिधानात्।(ना). (i) The Lord is the Motivater of the world; (ii) He punishes the demons; (iii) He bends those unwilling to bend; (iv) He is the Motivater and Auspicious.] The म.ता.नि. narrates (अ.१३) : गर्गः शूरसुतोक्त्या व्रजमायात् सात्वतां पुरोधाः सः। चक्रे क्षत्रिययोग्यान् संस्कारान् कृष्णरोहिणीसून्वोः ॥ ऊचे नन्द सुतोऽयं तव विष्णोर्नावमो गुणैः सर्वैः। सर्वे चैतत्त्राताः सुखमाप्स्यन्त्युन्नतं भवत्पूर्वाः ॥ (१-२) [**पादान्त्ययमक**]

11) (पदच्छेदः) तस्य। सखा। बलनामा। ज्येष्ठः। भ्राता। अथ। यत्। निजाबलना मा। (अमा) यस्य। च। पर्यङ्कः। अयं पूर्वतनः। विष्णुं। अजसपर्य कोऽयम्। (कः। अयं)॥

This verse refers to factual relation between Balarāma and Kṛṣṇa. It is true that Balarāma is considered as the elder brother of Kṛṣṇa. But is it the real relation between the two ? This verse clarifies the actual fact and shows that Balarāma cannot be elder to Kṛṣṇa. Secondly, Balarāma is not a helping friend bearing equality with Kṛṣṇa : (i) ... सखित्वं तत्प्रियत्वान्नो समत्वतः। अवताराग्रजत्वात्तु ज्येष्ठत्वं नोत्तमत्वतः ॥(टी) (ii) कृष्णसखत्वं नोपकर्तृत्वेन किं तु तत्प्रियत्वेन तत्प्रीतिपात्रत्वेन। तथा ज्येष्ठभ्रातृत्वं च नोत्तमगुणत्वेन किंत्ववताराग्रजत्वेनावगन्तव्यम्।(टि). (iii) इदं सखित्वं ज्येष्ठत्वं च स्वरूपतस्समत्वोत्तमत्वाभ्यां न, किन्त्ववतारे प्रियत्वं पूर्वजत्वाभ्यामेवेत्याशयेन कृष्णबलयोः स्वरूपस्थितिमाह **यन्निजेति**।(या). The verse mentions three reasons to prove that Balarāma cannot be equal as a friend and elder as a brother, to Kṛṣṇa : (1) **यन्निजाबलनामा** a) **मा** रमा। **यन्निजाबलना** यत् यस्य कृष्णस्य निजाबलना स्वाभाविकावरणरूपा "लक्ष्मीधराभ्यामाश्लिष्ट" इति वचनात्। अत्र बकारस्य वत्वं लस्य रत्वं च तयोरभेदविवक्षया।(या). Goddess Lakṣmī is always embracing Lord Viṣṇu (Kṛṣṇa) and is thus covering His body. b) (i) निजा स्वभावसिद्धा बलना बस्य लत्वं ललना भार्येति वा।(या). (ii) यन्निजा बलना = वबयोरभेदे, वकारलकारयोः अभेदे यन्निजा ललना = यत्+निजा+ललना = लक्ष्मीः यस्य निजा भार्या इत्यर्थः।(वि). Goddess Lakṣmī is His consort.c) यन्निजा = यद्दाराः मा = **रमा** जगतो बलना = प्राणप्रदा। बल प्राणने।(ब) Goddess Lakṣmī, His consort gives strength to the whole world. d) (i) **यन्निजावरना मा** बवयो रलयोश्च सावर्ण्यात्। मा लक्ष्मीः यस्य (शेषस्य-त) **निजा** चासौ आवरणा आव्रियते अनेनेति आवरणा। ङीवभावच्छान्दसः। यस्य यवनिकारूपेत्यर्थः। तथोक्तम्। 'माया यवनिकाच्छन्ने'ति। कीदृशी **मा अमा** न विद्यते मा मितिर्यस्याः सा अनन्तधा। अनन्तरूपिणी सती

भगवत्परिचारिकेत्यर्थः। तदुक्तम् **'श्रीर्यत्र रूपिण्युरुगायपादयोः** करोति मानं बहुधा विभूतिभिः।' 'रमैव बहुरूपिणी'ति च।(टि). (ii) **यस्य** निजावरणरूपा स्वाभाविकपरिवाररूपा।(भ). (iii) **मा लक्ष्मीः प्रकृतिर्यदीयस्वरूपस्यावरणं** यया सा।(ना). **Goddess Lakṣmī serves as a cover to Lord** Viṣṇu, Whom She serves **with** Her **infinite** forms. 2) **यस्य च पर्यङ्कोऽयं** - अयं बलनामा **ज्येष्ठो भ्राता पूर्वतनः** मूलरूपी शेषः। **यस्य च पर्यङ्को** मञ्चः। न हि स्वयं यस्य पर्यङ्कत्वेन **मूलरूपे** परिचारकः स एव तदवतार**कृष्णापेक्षया शेषावतारो** बलस्त**स्मादुत्तमो** भवितुमर्हति। कृष्णस्य परब्रह्मत्वात्। **स्वस्य शेषत्वात्। शेषब्रह्मणोश्चानन्ता**-नन्तगुणतस्तारतम्यवत्वात् तारतम्यस्य च **स्वाभाविकत्वेन** कदाप्यनपायात्। तदुक्तम् 'न ते विष्णो जायमानो न जातो देव महिम्नः परमन्तमाप' इत्यादौ। यस्य च पर्यङ्कोऽयं **शेषः, सखा बलनामा।** यदावरणा च रमा। सोऽयं कृष्णः क इति च **जिज्ञासायामाह। यं विष्णुं** वदन्तीति शेषः।(टि). Balarāma in his original form of Śeṣa serves Lord Viṣṇu as His bed. Hence he cannot be equal to Him; he should be only inferior to Him. 3) a) **अजसपर्य कोऽयम् - अथ** तस्मात्। अजसपर्यं अजस्य ब्रह्मणः सपर्या पूजा यस्य स तथोक्तः। तं ब्रह्मपूजितं। **विष्णुं** विष्णुस्वरूपं कृष्णं प्रति। **अयं** बलः। **कः** किंशब्द आक्षेपे नोत्तमो नापि **सम इत्यर्थः। तस्मादवतारप्रयुक्तमेव** ज्येष्ठत्वादिकमिति लभ्यत इति **भावः**।(या). **Lord Viṣṇu** is worshipped by even Brahmā. Hence **how** can Balarāma be equal or elder to Him ? Ever not. b) अजेन सपर्यते स तथा अथवा अजात्सपर्या पूजा यस्य स तथा, तं ब्रह्मार्चितं। पुनः कीदृशम्। **कोऽयं** ब्रह्माणं वायुं वाऽवति **रक्षति को** ब्रह्मा सूत्रात्मा वायुश्च ऊयते कन्थायां सूत्राणीव ग्रथ्यते यस्मिन्निति वा **कौः** स चासौ यच्छतीति यश्च स तथा तम्। ब्रह्मवाय्वोः रक्षकं तदाधारं वा। पूर्वव्याख्याने अवतिरूपता उत्तरव्याख्याने ऊयतिरूपता दृष्टव्या। फलितमाह। **यमिति।** स्वामिनं तद्रक्षकत्वेन तदाधारत्वेन च।(टि). Lord Viṣṇu is both the Protector and Supporter of even Brahmā. The म.ता.नि. narrates (अ.१२) : यदा स मासद्वितयी बभूव तदा रोहिण्यां बलदेवोऽभिजातः। बली गुणाढ्यः सर्ववेदी य एव सेवाखिन्नो लक्ष्मणोऽग्रे हरेर्भूत् ॥ (१०६)... यदा त्रिमासः स बभूव देवस्तदाविरासीत् पुरुषोत्तमोऽजः।

तौ कृष्णशेषावाप्तुकामौ सुतौ हि तपश्चक्राते देवकीशूरपुत्रौ ॥(११०) [पादान्त्ययमक]

12) (पदच्छेदः) **तेन। हतः। वातरयः। तृणचक्रः। नाम। दितिसुतः। अवातरयः। हरमाणः। बालतमं। स्वात्मानं। कण्ठरोधिना। अबालतमम् ॥**

This verse refers to Kṛṣṇa's killing demon Tṛṇāvarta. 1 **वातरयः** and 2 **अवातरयः** qualify the demon : 1) वातस्य रय इव रयो यस्य स तथा वायुवेग इत्यर्थः।(टि). He came with the speed of the wind, to carry away Child Kṛṣṇa. But he was made 2) अवातरयः = श्वासरूपवातवेगरहितस्सन्।(या). He was made to stay without breath. That is, he was (हत=) killed by (तेन=कृष्णेन) Kṛṣṇa. Then Kṛṣṇa had taken the form of a little child (बालतम). In fact, He is **अबालतम**. (i) **अबाडतमं** न विद्यते वाट् वाहको यस्य स अवाट्। अता व्याप्ता मा रमा (मितिः परिमाणं) यस्य स अतमः। अवाट् चासावतमश्च अवाडतमः तं बस्य वत्वं लस्य डत्वं च पूर्ववत्।(या). (ii) **अबालतमम्** वहतीति वाट् न विद्यते वाट् स्वप्रसादेन विना स्वसामर्थ्येनैव वाहको यस्य सोऽवाट् वाहकरहितः। **अता** (अत सातत्यगमन इति धातोः-भ।) व्याप्ता **मा** मानं यस्य सोऽतमः। अवाट् चासावतमश्चावाडतमः। डलयोरभेदात् ल इति श्रुतिः। तम्। गरुडादीनां वाहकत्वं तु तत्प्रसादेनैवेति भावः। [अवाट्+अत+म] (टि). Lord Kṛṣṇa is अवाट्; He cannot be carried away by anyone without His grace. He is pervaded (अता) = joined with Goddess Lakṣmī (मा). His measure (मा) or existence is all-pervasive (अत) (iii) न ताम्यति ग्लायतीत्यतमः। तमु ग्लानाविति धातोः। तेन दैत्येन दुर्वाह्यः भयकम्पादिग्लानिरहितः अवाट् चासावतमश्चेति **अबालतमः** तम्। वबयोर्डलयोश्चैक्यात् 'अग्निमीळ' इत्यादिवत्।(ना). Lord Kṛṣṇa cannot be carried away (अवाट्) and He is devoid of fear and tremor (अतम). (iv) अवालतमं = सर्वज्ञम्। 'वालः = Ignorant, unwise (V.S.Apte)' (ब). Lord Kṛṣṇa is Omniscient. 2) **स्वात्मानम्** can refer to both 1) Tṛṇāvarta

and 2) Kṛṣṇa. 1) **स्वात्मानं** द्वितीया षष्ट्यर्थे स्वात्मनः। **कण्ठरोधिना** कण्ठगश्वासरोधिनेत्यर्थः। तेन कृष्णेन। ... हतः।(या) Lord Kṛṣṇa killed the demon by stopping his (स्वात्मनः) breath. 2) स्वात्मानमित्यस्य द्वितीयान्तस्यैवात्र संबन्धः। अत्र स्वशब्देन हननकर्ता कृष्णः परामृश्यते। स्वतन्त्रात्मानमिति वार्थः। तथा च यतो हरमाणः (उन्नीतवान्) ततो हत इत्यर्थः।(या). Lord Kṛṣṇa is Himself Independent. As He was carried away by the demon the latter was killed. The म.ता.नि. narrates (अ.१२): कदाचित्तं लालयन्ती यशोदा वोढुं नाशक्नोद्भूरिभाराधिकार्ता। निधाय तं भूमितले स्वकर्म यदा चक्रे दैत्य आगात्सुघोरः॥ तृणावर्तो नामतः कंसभृत्यः स्रष्ट्वात्युग्रं चक्रवातं शिशुं तम्। आदायाया – (गा)दन्तरिक्षं स तेन शस्तः कण्ठग्राहसंरुद्धवायुः॥ पपात कृष्णेन हतः शिलातले तृणावर्तः पर्वतोदग्रदेहः। सुविस्मयं चापुरथो जनास्ते तृणावर्तं वीक्ष्य संचूर्णिताङ्गम्॥ (११६-८). [पादान्त्ययमक]

13) (पदच्छेदः) **सः। अवनिमध्ये। रङ्गन्। अरिदरयुक्। बालरूपं। (वाट्। अरूपं।) अधि। आ। ईरं। गन्। अमुषत्। नवनीतं। अदः। स्व(स)गोकुले। गोपिकासुनवनीतमदः। (गोपिकासुनवनी। तमदः।)**

This verse refers to नवनीतचौर्य or stealing of butter by Child Kṛṣṇa in several homes at Gokula. 1) **अरिदरयुक्** = चक्रशङ्खपाणिः।(टि). Lord Viṣṇu the Bearer of disc and conch. 2) **अवनिमध्ये** = गृहप्रदेशमध्ये।(या). In the house. 3) **बालरूपमध्येरंगन्** = **बालरूपं+अधि+आ+ईरं+गन्**। (i) तथा च **बालरूपं ईरम्** वायुं। **अधि** अधिरुह्य। **आ** समन्तात्। **गन्** गच्छन्।(या). (ii) यः **बालरूपं** सूत्रात्मना स्वपुत्रम् **ईरं** मुख्यप्राणं **अधि** अधिरूढः **आ** समन्तात् सर्वत्र यथेष्टं गच्छतीति **गन्** गमेर्विशः क्वापि अनुनासिकलोपः 'मो नो धातोः'। [८.२.६४.] इति मस्य नः 'वरदो वायुवाहन' इत्युक्तत्वात्।(ना). Riding on child wind-god. 4) **अमुषत्+नवनीतं+अदः** - Here **अदः** is significant. The pronoun अदस् is used to refer to a thing that is not near. Here it indicates that the butter had been kept on the rope-sling hanging pretty high. दूरस्थितं शिक्योपरिगभाण्डे

विद्यमानमिति यावत्।(या) 5) **सगोकुले** is read as **स्वगोकुले** also : **स्वगोकुले** स्वाधीने गोकुले स्वसेवार्थमवतीर्णो(र्णे) वा गोकुले।(टि). Gokula is in His possession or He had descended in Gokula to receive service from its residents. 6) **गोपिकासुनवनीतमदः** is split up and explained variously : I. **गोपिका+सु+नवनी+इत+मदः** a) नूयते स्तूयतेऽनया सा नवनी स्तुतिः। णु स्तुतौ इति धातोः करणे ल्युट् टित्वान् ङीप्। शोभना चासौ नवनी च सुनवनी गोपिकानां सुनवनी गोपिकासुनवनी तया इतः प्राप्तः मदः हर्षो यस्य स तथा। मदी हर्षे इति धातोः।(टि). Lord Kṛṣṇa was delighted to listen to the praises sung by gopikās in Gokula. b) अथवा गां स्वर्गं पान्तीति गोपाः स्वर्गपालाः ब्रह्मादयः तेषां पङ्क्तयो गोपिकाः। तत्समूहा इति यावत्। तासां नवनी तया इतः मदो यस्य स तथा। यदुक्तं 'गोपिकाभिः, सुरैरपि। नित्यं प्राप्तपरानन्दो नवनी स्तुतिरात्मनः' इति।(टि). Lord Kṛṣṇa is delighted by the eulogies of rows of gods protecting the heaven. II. **गोपिकासुनवनी+इतमदः** - एवं निहितनवनीतमोषणेऽपि **गोपिकासुनवनी गोपिकानां सु** शोभनं **नवनं** स्तवनमस्यास्तीति तथोक्तः गोपिकाभिः स्तुत एवासीदिति भावः। नित्यप्राप्तपरमानन्दस्य नवनीतमोषणादिकं केवललीला-रूपमेवेति भावेनोक्तम्। **इतमदः** इति। इतः नित्यं प्राप्तो मदः सुखं यस्यासाविति।(भ). Lord Kṛṣṇa is extolled well by gopikās and He is always blissful. III. **गोपिकासुनव+नीत+मदः** a) **गोपिकासु नवः** अभिनवः **नीतः** प्रापितः **मदः** कामोन्मादो येनेत्यर्थः।(ना) Lord Kṛṣṇa aroused fresh passion in gopikās. b) **गोपिकानां** सुशोभनो **नवः** स्तवः तेन **नीतः** प्राप्तः **मदः** सुखं यस्य स तथा।(या) Lord Kṛṣṇa got delighted by the excellent eulogies of gopikās. c) अथवा **गोपिकासु नवेन** नूतनेन चौर्येण उत्पादितः **मदः** अनुग्रहसुखं आग्रहो वा यस्मात्स इति वा।(या) Lord Kṛṣṇa created happiness or attachment in gopikās by His new sport of stealing. IV. **गोपिकासुनवनी+तमदः।** गोपिकानां शोभनं नवनं स्तवनं यस्मिन्निति **गोपिकासुनवनीति** भिन्नं पदम्। गोपीभिः स्तूयमान इत्यर्थः। तमं ग्लानिं द्यति नाशयतीति **तमदः** नवं स्तवं नयन्तीति **नवन्यः** सेनानीशब्दवत्। तेषा **तमदो** ग्लानिहर्तेत्येकं वा

पदम्। तः ततः मदो यस्येति वा। पूर्णानन्द इत्यर्थः। (ना). Lord Kṛṣṇa was extolled by gopikās whose fatigue or sorrow was removed by Him. His bliss is all-pervasive; He is Blissful. The म.ता.नि. narrates (अ.१३) : कदाचिदीश्वरः स्तनं पिबन्यशोदया पयः। सृतं निधातुमुज्झितो बभञ्ज दध्यमत्रकम्॥ स मथ्यमानदध्युरुप्रजातमिन्दुसन्निभम्। नवं हि नीतमाददे रहो जघास चेशिता॥ (७-८) [पादान्त्ययमक]

14) (पदच्छेदः) **तन्माता। कोपं। इता। तं। अनुससार। आत्मवादवाकोपमिता। जगृहे। सा। अ (आ) नमनं। तं। देवं। तच्चिन्तया। एव। सानं। अनन्तं॥**

This verse **refers to Yaśodā's anger on knowing** Kṛṣṇa's stealing **butter. She pursued and caught** Him. But this was possible only because of His own will and not because of her superior strength : **तच्चिन्तयैव** 'इयं मां गृह्णात्विति तदिच्छयैव' न स्वप्रयत्नेन **जगृहे** जग्राह।(या). The words are easy to comprehend. 1) **तन्माता कोपमिता तमनुससार।** His mother getting angry pursued Him. She ran after Him to catch Him. 2) **आत्मवादवाकोपमिता** आत्मवादवाकः परमात्मप्रतिपादकवाक्यं वेदः (आत्मनोवाकः वेदः) तत्सदृशी। यथा वेदवाक्यं आपातप्रतीतं कर्मादिकं परित्यज्य मुख्यतः परमात्मानमेवानुगच्छति तथा **यशोदापि** इतरत् गृहकृत्यं **परित्यज्य** तमेवान्वगच्छदिति भावः।(या). Yaśoda acted like Vedas. They primarily describe Him leaving aside all their apparent meanings like laying down rituals & c. She too ran after Him keeping aside all the house-hold chores. *Read* also : अज्ञैः कृष्णेऽतिदोषोक्तौ **कोपं इता** तेषु सकोपा **तन्माता** तस्य कृष्णस्य माता यशोदा **तं** हरिं अनुससार। किमर्थं दोषराहित्यख्यापनाय हि। स्वस्येति शेषः। सा गोपिका यशोदा पुरतो गच्छन्तं हरिं **जगृहे** जग्राह। किंभूता **आत्मवादवाकोपमिता।** कर्मादिवादांस्तु परित्यज्यात्मनः परमात्मनः वादः शक्तितात्पर्याभ्यां प्रतिपादनं यया सा आत्मवादा सा चासौ वाका वाचा आत्मवादवाका **तया** उपमिता उपमेयभावं

प्राप्ता। अथवा **आत्मवादवाका उपमिता** इति द्वे पदे वाचेति **चकारस्थाने** ककारः ककारस्य चप्रतीकत्वात्। विग्रहस्तावत्पूर्ववदेव। तया उपमिता। कोऽर्थः। यथा श्रुतिः कर्मादिप्रतिपादनेनालंबुद्धिमप्राप्य स्वस्यालंबुद्धिसंपादकं हरिं विषयमवलम्ब्य कृतार्था भवति। 'सर्वे वेदा यत्पदमामनन्ति' 'तमेवैकं जानथ आत्मानम्। अन्या वाचो विमुञ्चथामृतस्यैष सेतुरि'ति। तथा यशोदा स्वसुतविषयेऽतिदोषोक्तौ अज्ञान्संबोधयन्ती एकवारं द्विवारं क्षन्तव्यमिति। अनन्तरं ~~कियद्वारं क्षन्तव्यं त्वया न तर्ज्यतेऽतोऽनयमयं~~ करोति त्वया एकवारं तर्जनीयः अनन्तरं कथं करिष्यति त्वमेवावलोकयेति स्वस्य प्रोत्साहने कृते तं तर्जयितुं प्रवृत्ता तं धावन्तं ग्रहीतुमसमर्था अनन्तरं पुत्रस्य मातृवश्यतां दर्शयितुं स्वयमेव स्थितं जग्राहेत्यर्थः।(टि). All this means that when complaints against Kṛṣṇa came to her, blaming her for His misdeeds, she ran after him to reprimand Him and prove her innocence. She could catch Him only when He wished to show His obedience to His mother. 1) **आ(अ)नमनं**, 2) **देवं**, 3) **सानं** and 4) **अनन्तम्** qualify तं (=कृष्णं). (1) a) **आनमनं** - (i) आ समन्तान्नम्यते शब्द्यते वेदैरित्यानमनस्तम्। निखिला वेदा नमन्ति निखिलवेदप्रतिपाद्यम्।(टि). Lord Kṛṣṇa is expounded by all Vedas. (ii) मातृभक्त्या आ ईषत् नमनं यस्य स तथा तमिति वा।(या). He bent down out of devotion to His mother. b) **अनमनं** (i) न विद्यते नमनं नीचीभवनं यस्य स तथा तम्। दोषी नीचो भवति तथा अल्पगुणश्च। भगवाँस्तु निर्दोषः तथानन्तसद्गुणश्चेति तात्पर्यार्थः।(टि). A defaulter hangs his head down. Lord Kṛṣṇa is absolutely devoid of any kind of fault and hence He never bends down His head. (ii) अ) न विद्यते नमनं प्रह्वीभवनं यस्य स तथा तमिति।(या). Lord Kṛṣṇa does not bow down to anybody, any time. आ) अनमनमित्यस्य व्याख्यानान्तरं अन्यान-मनमिति स्वाधीनमित्यर्थः। तस्य तात्पर्यमीश्वरमिति। न हीश्वरः **पराधीनो** भवति ईश्वरत्वव्याहतेः।(टि). Lord Kṛṣṇa is Independent and Overlord. 2) देवं क्रीडादिगुणविशिष्टम्।(या). Lord Kṛṣṇa is full of auspicious qualities like *krīḍā* or sport. (क्रीडा-विजिगीषा-द्युति-स्तुति-मोद-कान्ति-गति). 3) **सानम्** इत्यस्य व्याख्या

जगद्व्यापारसहितमिति। अननं चेष्टनं आनः जगद्व्यापार इति यावत्। तेन सहितम्।(टि). जगद्व्यापारसहितं (सचेष्टं धावन्तं)।(या). Lord Kṛṣṇa was performing His functions connected with the world, while running followed by Yaśodā. (4) **अनन्तम्** देशतः कालतो गुणतश्च, तद्व्याख्यानं वा अनन्तसद्गुणमिति। देश-कालाभ्यां व्याप्तेरपि गुणत्वात्।(टि) गच्छन्तं। अपरिच्छिन्नं वा।(या). Lord Kṛṣṇa is All- Infinite. He has no limitations of time, space or qualities. म.ता.नि. narrates (अ.१३) : अथात्तयष्टिमीक्ष्य तां स्वमातरं जगद्गुरुः। स पुप्लुवे तमन्वगान्मनोविदूरमङ्गना॥ पुनः समीक्ष्य तच्छ्रमं जगाम तत्करग्रहम्। प्रभुः स्वभक्तवश्यतां प्रकाशयन्नुरुक्रमः॥ (१४-१५) **[पादान्त्ययमक]**

15) (पदच्छेदः) **अथ। सा। अन्तः। इता। अमानं। (अन्तरितामानं) विष्णुं विश्वोद्भवं। सदान्तरितामानं। अनयत्। दामोदरतां। यः। अरमयत्। सुन्दरीं। निजामोदरतां॥**

This refers to Yaśodā's binding Kṛṣṇa with a rope and making Him known as 'Dāmodara' [one whose belly (उदर) is bound by a rope (दामन्)]. But one should not forget that it happened only because of His own will : तच्चिन्तयैवेत्यनुवर्तनीयम्। तदिच्छयैव भगवदिच्छयैव ... दाम्ना बबन्धेत्यर्थः। ... स्वेच्छयैव स्वस्येच्छयैव दामोदरशब्दनिरुक्तये क्रीडार्थे व्यापकत्वाद्बन्धायोग्यत्वं प्रदर्श्य अनन्तरं एकवत्सपाशकान्तरं भगवान् प्राप्तोऽभूदिति तात्पर्यार्थः। तदुक्तं भगवताऽऽचार्येण 'समस्तदामसंचयः सुसंधितोप्यपूर्णताम्। ययावनन्तविग्रहे शिशुत्वसंप्रदर्शके' इति। तथा 'स (एव) एकवत्सपाशकान्तरं गतोऽखिलंभरः' (ता.नि.१३-१७) इति।(टि) बन्धायोग्यस्यापि यद्बन्धनं तत्तदिच्छयैवेति भावः।(या). The verse contains words 1) **विष्णुं** 2) **विश्वोद्भवं** 3) **सदान्तरितामानं** and 4) **योऽरमयत्सुन्दरीं निजामोदरताम्** which indicate that He can never be bound. 1) **विष्णुं** - He is व्याप्त or All-pervasive. How can anybody bind the All-pervasive Lord ? ***Read*** : (i) व्याप्तं पूर्णबलं सर्वप्रणेतारं च सर्वदा ॥(टी). (ii) वेवेष्टीति विष्णुः विष्लृ व्याप्ताविति धातोः व्याप्तः तम्। अनेन बन्धायोग्यत्वमुक्तम्। न हि व्याप्तो

बन्धयोग्यः व्याहतेः। वर्णविभक्त्यापि अर्थान्तरमाह। पूर्णबलं सर्वप्रणेतारं च सर्वदेति। विर्विशिष्टः षः प्राणो बलं यस्य तथा। विर्विशिष्टः प्राणो विशिष्टव्यापारो यस्य। अन चेष्टायामिति धातोः। 'णकारो बलं षकारः प्राण आत्मे'ति श्रुतेः। अथवा षकार एव प्राणवाची तथा श्रुतेः। षश्च णश्च षणौ विशिष्टौ षणावस्य तच्छीलो विष्णुः षकारस्थाकारलोपः (स्तथात्व-कारणौ यो) निरुक्तत्वात्। णकारस्थालोपस्तु उस्यार्धधातुकत्वेन 'अतो लोप' [६-४-४८] इत्यनेन भविष्यति। एवं व्याख्यानेऽपि बन्धायोग्यत्वमुक्तं भवति। न हि पूर्णबलो बन्धयोग्यः। नापि सर्वनियामकः। व्याहतेरेव।(टि) Accordingly the term विष्णु also means पूर्णबल or Omnipotent. As Omnipotent, Lord Kṛṣṇa can never be bound by anybody. 2) **विश्वोद्भवम्** - Lord Kṛṣṇa is the cause of the very origin &c. of this entire universe. As such He cannot be bound at all : उद्भवशब्देन स्थित्यादिकमपि लक्ष्यते। अस्योद्भवादिकर्तारं। विश्वस्योद्भवो यस्मादिति विग्रहः। अनेनापि बन्धायोग्यत्वमुक्तं भवति। न हि बन्धभाजि संसारमोचकत्वं घटते।(टि). 3) **सदान्तरितामानम्** - He has always in his belly Brahmā, Lakṣmī and Vāyu. How can such Lord Kṛṣṇa be at all bound ? **आ** च ब्रह्मा च (आकारस्तु प्रजापतिः) **मा** च लक्ष्मीश्च **अनश्च** प्राणश्च ते आमानाः **सदा अन्तरिताः** उदरे स्थिताः आमाना यस्य सोऽन्तरितामानः तम्। अनेन प्रकृतिमहदहंकारादिसर्वावरणसहितं जगत् उदरे तिष्ठतीत्युक्तं भवति। तेनापि बन्धायोग्यत्वमुक्तम्।(टि). Or, there is concealed in Lord's belly entire Universe upto Lakṣmī and Vāyu. अथवा **मा** च **अनश्च** मानौ मानाभ्यां आ आमानं आरमाप्राणं। **सदान्तरितं आमानं** विश्वं यस्य स तथा तमिति।(टि). या. gives five interpretations of **अन्तरितामानं** occurring at two places in the verse, all suggesting His बन्धायोग्यत्व : (i) अन्तः इतं प्राप्तं आसमन्तात् सर्वस्मिन् विषय इति यावत् मानं ज्ञानं यस्य स तथा तम्। He is Omniscient. (ii) अन्तः इताः गताः अमानाः अभिमानरहिताः मुक्ताः यस्य स तथा तम्। He is reached by liberated souls. (iii) अन्तः उदरे इताः प्राप्ताः अः ब्रह्मा च मा रमा च अनः प्राणश्च यस्य स तथोक्तस्तमित्यर्थः। He has in His belly Brahmā, Lakṣmī and Vāyu. (iv) अन्तः इतं गतं अमानं

अपरिमितं जगज्ञातं यस्य स तथा तम्। He has in His belly the unlimited world. (v) अन्तरितं व्यवहितं **अमानं** अज्ञानं यस्य स तथा तम्। [अन्तरितं अमानं = अज्ञानं यस्य **सर्वज्ञ** इत्यर्थः।(ब)] He is bereft of any type of ignorance. तथा च बन्धायोग्यमित्यर्थो लभ्यते। एतदुपपादनायैव प्राचीनविशेषणानि।(या) [Note also : 1. अन्तरितं व्यवहितं **आ** सम्यक् **मानं** परिमाणं यस्येति तम्।(त). He is Infinite. 2. अथवा अन्तः। इता। मानम्। इति पदच्छेदः। ~~अन्तः सर्वान्तः~~ प्रेरकेण दामान्तःस्थितेन वा। दामबद्धेनेति वा। अनेन कृष्णेन मानं इता प्राप्ता। सुतानां मातृवश्यताधर्मप्रदर्शनाय बन्धायोग्येऽपि यदा यशोदया बद्धस्तदा तेन सीमानं प्राप्तेत्यर्थः।(भ) As the Prompter of all, the Lord is indwelling in the rope too. In other words, He is bound by the rope existing into it. Thus He became limited by the rope. Hence when He was bound by Yaśodā, He showed obedience to His mother and became measured by the rope. (4) **योऽरमयत्सुन्दरीं निजामोदरताम्** - He delighted His beloved wife Lakṣmī who is always engrossed in Her inherent joy. That is, He binds Her with Her inherent qualities like knowledge and bliss. 1) **निजा+मोद+रताम्** (वि) 2) **यो निजां सुन्दरीं** प्रियां लक्ष्मीं **अरमयत्।** स्वगुणैर्ज्ञानानन्दादिभिर्बध्नाति। **कां** निजां यां **निजामोदरतां** अरमयत्। गुणैस्त्रेधा देवदानवमानवान् बध्नाति। सार्वकालिके लङ्। नेनिजतीति **निजाः शुद्धाः** सात्त्विकाः ब्रह्मादयो देवाः। णिजिर् शौचे इति धातोः। मा न **विद्यते** सम्यक् ज्ञानं येषां ते **अमाः** मिथ्याज्ञानिनो दैत्याः उदरं संशयो येषां ते **उदराः** अर्श आद्यच्। 'उदरं संशयः प्रोक्त' इति वचनात्। **मिश्रज्ञानिनः** निजाश्च अमाश्च उदराश्च निजामोदराः तेषां समूहो निजामोदरता योगविभागात्तल्। तामरमयत्। श्रीरूपेण सत्त्वगुणेन ब्रह्मादिसात्त्विकान् बबन्ध। तदुक्तं 'श्रीर्देवबन्धिका प्रोक्ते'त्यादौ।(टि). It means : The Lord delighted Goddess Lakṣmī who binds pure souls like gods with *Sattva-guṇa,* human beings with *Rajo-guṇa* and demons with *Tamo-guṇa.* अथवा **या निजा 'मा उदरताम्। अरमयत्** तां सुन्दरीं यो रमयति। **उदरतां** उद्गता अरेभ्यो दोषेभ्य इति

उदराः ब्रह्मादयः। तथा उद्गता अरान् दोषान् ते उदराः दोषिणो दैत्यादयः। तथा उदरे कर्मणि रताः **उदराः** मध्यमाः। उदराश्च उदराश्च उदराश्च उदरास्तेषां समूहो **उदरता** ताम्। देवमानुषदानवान् अरमयत् सत्त्वादिगुणैरिति शेषः। तदुक्तं 'सत्त्वं सुखे संजयति रजः कर्मणि भारत। ज्ञानमावृत्य तु तमः प्रमादे संजयत्युते'त्यादौ। **एवंभूतामपि सुन्दरीं योऽरमयत्** स्वगुणैर्बबन्ध स कथं दाम्ना बध्यते इति **भावः**।(टि). Here उदर is interpreted to mean 1. gods without (उद्) defects (अर); 2. demons possessing (उद्) defects (अर); and 3. human beings of mixed nature who are attached to (रत) actions (उदर). They are connected with *Sattva* and other *guṇas* by Goddess Lakṣmī and She is bound by Lord's *guṇas* i.e. becomes delighted by His *guṇas*. 3) **यः** कृष्णः। **निजामोदरतां** निजः स्वरूपभूतः आमोदः पूर्ण सुखं इतरगुणोपलक्षणमेतत् तस्मिन् रतां स्निग्धाम्। सुन्दरीं दुर्गां। सदेत्यावर्तते। **सदा अरमयत्**। नित्यमुक्तामकरोत्।(या). The Lord made Durgā ever-free, who is engrossed in her own bliss. Note : **योऽरमयदिति**। अमरयदिति पाठे नित्यमुक्तामकरो-दित्यर्थः।(ना). That is, there is an alternative reading as **अमरयत् for अरमयत् and अमरयत्** = made immortal. The म.ता.नि. verses have been quoted by टि. above. [पादान्त्ययमक]

16) (पदच्छेदः) **चक्रे। सः। अर्जुननाशं। प्राप्नोति। यत्स्मृतिः। सदार्जुनना। शम्। तौ। च। गतौ। निजं। ओकः। तेन। एव। नुतेन यत्। निजा (जः। अ) निजमोकः॥**

This verse refers to the deliverance of two Gandharvas named Nalakūbara and Maṇigrīva, who had been reduced to the form of two Arjuna-trees due to Nārada's curse. Here first अर्जुननाशं means अर्जुननामकयोः वृक्षयोः नाशम्। Lord Kṛṣṇa brought about the destruction of two trees by name Arjuna. Second अर्जुननाशं = अर्जुनना+शं. Where अर्जुन = pure; ना = man and शं = happiness. (a) **यत्स्मृतिः** यस्य स्मरणवान्। **अर्जुनना** अर्जुनः

धवलः शुद्धः स चासौ ना पुमांश्च स तथा। शुद्धो भूत्वेति यावत्। सदा। शं नित्यसुखं मोक्षं चाप्नोति।(या). By remembering Lord Kṛṣṇa, the pure soul gets eternal bliss. (b) **यत्स्मृतिः** यस्य कृष्णस्य स्मृतिः स्मरणं यस्य स यत्स्मृतिः। यत्स्मर्ता। **अर्जुनना** अर्जुनश्च धवलश्चासौ ना पुमांश्च अर्जुनना सात्विको जीवः **शं** शुद्धं सुखं स्वरूपसुखं प्राप्नोति। आवरणनाशेन व्यक्तमनुभवति। संसारेऽपि सुषुप्तौ स्वरूपसुखाविर्भावेन तदनुभवस्य विद्यमानत्वेऽपि नाखण्डितोऽनुभवः। पुनरा-वरणशक्त्युद्बोधकभगवदिच्छया तिरोभावसद्भावात् न तथाऽयं मोक्षीयोऽनुभव इत्याह। **सदेति**। अखण्डितमित्यर्थः।(टि). His remembrance brings forth to a soul inherent joy permanently. It is true that such a joy is experienced in *Suṣupti* or deep-sleep state. But that is only a temporary experience. It is stated that both Nalakūbara and Maṇigrīva residing in those trees were always remembering Lord Kṛṣṇa. *Read* : (i) तौ च तद्वृक्षगौ च यौ देवौ नलकूबरमणिग्रीवौ नारदस्य प्रसादतः एष्यत्कृष्णपदस्पर्शस्मरणौ। शापकालापेक्षया एष्यन् भविष्यन् कृष्णः तस्य पदस्पर्शस्य स्मरणं ययोस्तौ तथा तं कृष्णं उपलभ्य आवरकवृक्षशरीरपातानन्तरं साक्षात्कृत्य **नुतेन तेनैव** नुतिजनिततत्प्रसादेनैव **निजं ओकः** स्वं स्थानं स्वः **गतौ**। **च** शब्दात्तत्र तयोराविष्टौ यौ दुष्टौ द्वेषिणौ दैत्यौ धुनिचमू तौ च **निजं ओकः** स्थानं निरयं पुनरयनवर्जितं अनावृत्ति तमः गतौ।(टि) (ii) तौ वृक्षशरीरौ नळकूबरमणिग्रीवनामानौ सुरौ। **नुतेन** स्वकर्तृकस्तुनिविषयेण। **तेनैव** कृष्णेनैव। न स्वप्रयत्नेनेत्यर्थः श्रीकृष्णानुग्रहेणैव शापमोक्षं प्राप्तौ। **निजं** ओकः स्वकीयं स्थानं स्वर्गस्थानं गतौ प्राप्तौ। **च** शब्दात् तौ तदाविष्टौ धुनिचमुनामानौ दुष्टौ तावपि निजं स्वमोकः स्थानं तमोलक्षणं गताविति सूचयति।(या) Because of their constantly remembering Kṛṣṇa, they two were delivered from the tree-bodies. They began to sing His glories. Thereby they could go to their abodes in heaven. The word **च** indicates that just as Nalakūbara and Maṇigrīva went to heaven, two demons by name Dhuni and Camu residing in the same trees were sent to eternal hells befitting them. Now the question

arises : 'How is it that even though residing together in the same trees, the two viz. Nalakūbara and Maṇigrīva went to heaven and the other two Dhuni and Camu went to hell ?' The answer is simple. **'यन्निजानिजमोकः।'** The Lord grants release according to the nature of the souls : (i) कुत एतदुभयमित्यतो भगवत्स्वभाव एतादृश इत्याह यन्निजेति। यत् यस्मात्। निजानिजमोकः निजानिजयोः भक्तद्वेषिणोः मोकः मोचनं स्वस्वयोग्यं भवतीति शेषः। तेनेत्यन्वयः। (कृष्णेनैव न स्वप्रयत्नेनेत्यर्थः।)(या) (ii) निजो हरिभक्तः। अनिज-स्तद्द्वेषी। तयोर्मोको मोक्षस्तत्तद्योग्यो भवतीति यत् तत्तेनैव तत्क्रिययैव न यादृच्छिकमित्यर्थः।(भ) Another question may arise : 'How is it that the two Gandharvas, even though living with wicked demons, got liberation ?' The answer is the same : **यन्निजानिजमोकः।** यदि दैत्यौ तमः प्राप्तौ तर्हि तद्योगेन सापराधौ देवौ कथं स्वर्गं गतौ इत्याकाङ्क्षानिवृत्त्यर्थमाह। **यदिति। निजस्य** भक्तस्य **अनिजमोकः** अनिजादभक्तात् **मोको** मोचनमिति यावत् तत्तेनैवानादिभगवत्प्रसादेनैव न तु स्वसामर्थ्येन। कोऽर्थः। यद्यपि दुर्जनयोगेन भक्तः सापराधस्तथापि अनादियोग्यतां तन्निमित्तामनादिनीं भक्तिं निमित्तीकृत्यागन्तुकं द्वेषमविगणय्य भक्तवात्सल्याद्भक्तिफलमेव ददाति न द्वेषफलम्। द्वेषफलं तु द्वेषिण एव ददाति। तथोक्तम् 'अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति।(गी-९/३०-३१) दुर्जीवयोगेन तमःप्राप्तिरूपं नाशं न प्राप्नोति। सज्जीवयोगेन अनादिद्वेष्यपि मोक्षं न प्राप्नोति। तदप्युक्तम् 'तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥ (गी-१३/१९-२०)(टि). Even though a Lord's devotee lives in the company of the wicked, he does not become sinful deserving some kind of punishment. A person inherently good does not get completely converted to wickedness simply due to the association of the wicked. And the Lord always rewards the

inherent goodness ignoring the temporary badness. This is made sufficiently clear by Lord Kṛṣṇa Himself in the *Gītā*. [Note : **यन्निजः यस्य हरेर्भक्तः** नुतेन स्तुतेन तेनैव कृष्णेन तत्कृपयैव **अनिजमोकः** अनिजात् अस्वाभाविकात् तरुजन्मादितः मोको मोचनं यस्य स तथा भवतीत्यर्थः।(त)]. The म.ता.नि. states : धुनिश्चमुश्च तौ तरू समाश्रितौ निषूदितौ॥ तरुप्रभङ्गतोऽमुना तरू च शापसम्भवौ। पुरा हि नारदान्तिके दिगम्बरौ शशाप सः॥ धनेशपुत्रकौ द्रुतं तरुत्वमाप्नुतं त्विति। ततो हि तौ निजां तनुं हरेः प्रसादतः शुभौ। अवापतुः स्तुतिं विभोर्विधाय जग्मतुर्गृहम्॥(१३, २२-२४) [पादान्त्ययमक]

17) (पदच्छेदः) अथ। वृन्दावनवासं। गोपाः। चक्रुः। जगत्क्षिता।
**अवनवासं। तत्र। बकासुरमारः। शौरिः। अभूत्। नित्यसंश्रितासुरमारः॥**

This verse states the incidents of (i) settlement of residents of Gokula at Vṛndāvana, (ii) Kṛṣṇa's punishing serpent Kāliya and (iii) killing demon Bakāsura. **अथ** = गोकुलवासानन्तरं भगवतः वृन्दावने चिक्रीडिषया स्वरोमकूपेभ्यः सृष्टव्याघ्रसमबलवृकजनितस्वपीडानन्तरम्।(टि). After spending some years at Gokula, Lord Kṛṣṇa wished to sport at Vṛndāvana; and to force the residents of Gokula to leave the place, He created tiger-like wolves and being frightened by them, the people of Gokula left the place and went with Him and settled at Vṛndāvana. The म.ता.नि. states : वृन्दावनं यियासुः सन्नन्दसूनुर्बृहद्वने। ससर्ज रोमकूपेभ्यो वृकान् व्याघ्रसमान् बले॥ अनेककोटिसंघैस्तैः पीड्यमाना व्रजालयाः। ययुर्वृन्दावनं नित्यानन्दमादाय नन्दजम्।(१३, २६-२७). **जगत्क्षिता** is meaningful. (i) **जगत्क्षिता** सहार्थे तृतीया। जगत् क्षयति निवसति यस्मिन्स जगत्क्षित्। तेन जगत्क्षिता। क्षि निवासगत्योरिति धातोः। जगन्निवासेन कृष्णेन तथा तद्विशेषावेशवता रामेण सह।(टि). (ii) जगच्छ्रिता जगन्निवासेन कृष्णेन सह।(या). The whole world resides in Lord Kṛṣṇa. Hence He is जगन्निवास = abode of the world. They went with Him; means with Balarāma too. [क्षित् = A ruler

(V.S.Apte) जगत्क्षित् = Ruler of the world (ब)]. [Note **जगच्छ्रिता** according to या.] The **वृन्दावन** is explained fourfold : (i) अ) **वृन्दस्य** गोपगोपीगवां समूह**स्यावनं** रक्षणं यस्मिन् तत् तथा अव रक्षण इति धातोः।(टि). आ) गोपगोपीगवां **वृन्दस्य समूहस्य अवनं** रक्षणं यस्मात्तत्तथा तस्मिन् वृन्दावनसंज्ञे वने।(या). The place where cowherds and others are well protected. (ii) **वृन्देन** गोपगोपीसमूहेन **आ** समन्तात् **वन्यते** संभज्यते सेव्यते **यत्तत्तथा** वन संभक्ताविति धातोः।(टि). The place which is occupied all round by groups of cowherds and others. (iii) **वृन्दस्य** पूर्वोक्तस्य **आवनं** वर्णविपर्यासेन आनवं आ समन्तान्नवं (नूतनं) अंजसा वासार्थं तत्तथा।(टि). The place where cowherds and others settled newly [आवनं=आनवं] (iv) **वृन्दैर्ब्रह्मादिमुक्तामुक्तसमुदायै**-रावनः **आ** समन्ताद् **वन्यते** संसेव्यमानो हरिर्यत्र संनिहितस्तत्तथा।(टि). The place wherein Lord Kṛṣṇa, served by released souls like Brahmā, is residing. The term **अवनवासम्** is also explained variously : (i) **अस्य** अकारवाच्यस्य भगवतः कृष्णस्य **वने** वनशब्दिते उदके कालीयस्थाने कालीयह्रदे **वासः** विषोदकपानसन्नपशुसंरक्षणाय तस्मिन् प्रवेशलक्षणो यस्मिन् येनेति **वा** स तथा तत्। **यदि** वृन्दावनवासं **गोपाश्चक्रुस्तर्ह्येव** कालीयह्रदे पशुसंरक्षणार्थं कालीयोच्चाटनार्थं भगवतः प्रवेशः प्रसक्तीकृतः।(टि). The fact is, Lord Kṛṣṇa wanted to free the pond at Vṛndāvana from Kāliya. Hence He went there together with residents of Gokula. Otherwise He would not have got any occasion to visit Kāliya-pond and send him away. (ii) कृष्णसाहित्यात् न स वनवास इत्याह **अवनवासमिति**। न **वनवासः** **अवनवासः** तं स्वर्गतुल्यमिति भावः। तच्चोक्तं 'वृन्दावनं यदधिवासत आस सद्ध्र्यङ्माहेन्द्रसद्मसदृशं किमु तत्र पुर्यामि'ति॥(या). It was not वनवास or life in a forest. But because of the presence of Kṛṣṇa it was a heavenly living. (iii) न **वनवासः** **किन्तु** अवनः = हितः सुखकरश्च वासः। अवनम् - Gratifying, pleasing' (V.S.Apte) (ब). It was a gratifying life and not a forest-life with its hardships. There Lord Kṛṣṇa (**शौरिः**) killed

Bakāsura. **नित्यसंश्रितासुरमारः** qualifies **शौरिः**. a) **नित्यसंश्रितासु+ रमारः** - अस्यतीत्यसुः असुक्षेपण इति धातोः। स्वगमनेन जीवस्य देहवियोगं संपादयतीत्यर्थः। **नित्यं संश्रितः असुः मुख्यप्राणो** यं सः नित्यसंश्रितासुः। रमां रमयतीति **रमारः**। नित्यसंश्रितासुश्चासौ रमारश्च स तथा।(टि). Lord Kṛṣṇa is always resorted to by Vāyu and He delights Lakṣmī. (ii) **नित्यं** निरन्तरं **संश्रितः असुराणां मारः** मारणं यं तथाविधः। दैत्यहननं तस्य नित्यकर्मेति भावः।(भ). Kṛṣṇa is always engaged in destroying demons. (iii) **अमारः** स्वयं मरणरहितः। तत्र हेतुः **नित्यसंश्रितासुः** इति भिन्ने वा पदे। यत्त्यागो मरणपदार्थः स प्राणो यदुपजीवकः कथं तस्य मृतिः स्यादिति भावः।(भ). The Lord is immortal. Because, He is always resorted to by Vāyu or god of life-breath. Hence there is no death or separation from life-breath for the Lord. (iv) **असुश्च रमा** च असुरमे नित्यं **संश्रिते** च ते असुरमे च ते। रमयतीति **रः**। लोके मरणं मुख्यप्राणेन तमोभिमानिन्या दुर्गया च भवति तदुभयाश्रयस्य तदुभयरतिप्रदस्य कृष्णस्या-सुरमारकत्वं नाश्चर्यकरमिति भावः।(या). There is no wonder in Kṛṣṇa's killing Bakāsura. Because the two causes of death, viz, god Vāyu and Goddess Lakṣmī in the form of Durgā, always resort to Him and are delighted by Him. Hence He can bring life and death to anybody as per His own will. The म.ता.नि. narrates. (अ.१३) : 1. **बकासुरवध** ....... बकोऽपि कंसानुगोऽथ विभुमच्युतमाससाद ॥३०॥ ... तुण्डद्वयं यदुपतिः करपल्लवाभ्यां संगृह्य चाशु विददार ह पक्षिदैत्यम् ॥३२॥ 2. **कालियमर्दन** - दृष्ट्वा निजाश्रयजनस्य बहोः सुदुःखं कृष्णः स्वभक्तमपि नागममुं ममर्द ॥३९॥ तस्योन्नतेषु स फणेषु ननर्त कृष्णो ब्रह्मादिभिः कुसुमवर्षिभिरीड्यमानः। आर्तो मुखैरुरु वमन्रुधिरं स नागो नारायणं तमरणं मनसा जगाम ॥४०॥ ... यमसहोदरवारितोऽमुम्। उत्सार्य(त्सृज्य) निर्विषजलां यमुनां चकार ॥४२॥ **[पादान्त्ययमक]**

18) **(पदच्छेदः) अहनत्। वत्सतनूकं। यः। अपात्। लोकं। स्वयत्नवत्। सतनूकं। सः। अपात्। वत्सान्। अमरः। सहाग्रजः। गोपवत्सवत्। सानमरः॥**

This refers to Kṛṣṇa's protecting cows like any ordinary cowherd-boy and to His killing demon Vatsāsura who had taken the body of a calf. 1) **अहनद्वत्सतनूकम्** = He killed demons like Vatsāsura [वत्सस्य तनूरिव तनूर्यस्य स तथा। तं वत्सासुरं। उपलक्षणमेतत्। वत्सासुरादींश्च अहनत्।(टि)] 2) **सः अपात् वत्सान्** He protected calves. How did He protect? 3) **गोपवत्सवत्** - Like any cowherd-boy. गोपालानां वत्साः बालका इव ते यथा ते वत्सान् ररक्षुस्तथेत्यर्थः। वतिना 'प्रजायते हि यत्कुले यथा युगं यथा वयः। तथा प्रवर्तनं भवेद्दिवौकसां हि संभवे॥' (ता.नि.१३.९) 'स विप्रराजगोपकस्वरूप-कस्तदुद्भवाः। तदा तदा विचेष्टते क्रियाः सुरान्विशिक्षियन्। (ता.नि.१३.१२) इत्यन्तं चेष्टातात्पर्यकथनं सूचयति।(टि). A question may be asked : "Why say 'गोपवत्सवत्'? Why not गोपवत्स एव? What harm is there if Kṛṣṇa is stated to be a mere cowherd-boy?" The answer is "He is 1. **अमरः**; 2. **सानमरः**; and 3. **यः सतनूकं लोकं स्वयत्नवत् अपात्।**" 1) **अमरः** - गोपवत्स एवायं किं न स्यात्किं तद्वदित्युक्त्येत्यत उक्तम् **अमर** इति। अजर इत्यपि ग्राह्यम्। जरामरणशून्यस्य वत्सत्वमसंभव्येव अतो लोकदृष्टि-व्यपेक्षया तद्वदित्युक्तमिति भावः।(म). He is in fact bereft of death, old age and the like. Hence He cannot be considered as a mere cowherd-boy. He just acted like a cowherd-boy only for showing how human beings should act according to their status in life. 'Be a Roman in Rome'. 2) **सानमरः** - a) **अनश्च मा च अनमे ताभ्यां सहितः सानमो** रुद्रादिस्तं रमयतीति सानमरः।(टि) He delights Vāyu, Lakṣmī, Rudra and others. b) **अनः प्राणः मा रमा च** अनमे ताभ्यां सहितं **सानमं** जगत् तद्रमयतीति सानमरः।(या). He delights the world consisting of Vāyu and Lakṣmī. c) **सानमरः।** आनमनं आनमः तेन सहिताः सानमाः प्रणताः तान् रमयति सुखयतीति वा।(ना) He delights those who bow down to Him. 3) **यः सतनूकं लोकं स्वयत्नवत् अपात्।** (i) **यः लोकं** ब्रह्मादिमुक्तामुक्तसमुदायं **स्वयत्नवत्** सुष्ठु अयत्नः अप्रयत्नः अप्रयासः यत्र

यस्यां क्रियायां तद्यथा भवति तत्तथा, अयत्नतः। **अपात्** **ररक्ष**। कीदृशं लोकं **सतनूकं**। उश्च कश्च उकौ तनू नीचौ (हरेः सकाशादल्पौ। –त) च तौ उकौ च तनूकौ **ताभ्यां** **सहितं** सतनूकम्। **ब्रह्मरुद्रबहिर्भावेन** लोकशब्दस्य संकुचितार्थत्वनिरासार्थमिदमुक्तम्।(टि). Lord Kṛṣṇa protects the entire world including even Brahmā and Rudra, without any effort. It is simply a sport to Him. [Note : ब. interprets **अपात्** as 'devoured' quoting 'पा पाने' लुङ् । He devours the entire world.] The म.ता.नि. states (अ.१३) : दैत्यं स वत्सतनुमप्रमयः प्रगृह्य कंसानुगं हरवरादपरैरवध्यम्। प्रक्षिप्य वृक्षशिरसि न्यहनद्....॥३०॥ एवं स देववरवन्दितपादपद्मो गोपालकेषु विहरन् भुवि षष्ठमब्दम्। प्राप्तो गवामखिलपोऽपि स पालकोऽभूद्वृन्दावनान्तरगसान्द्रलतावितान ॥३३॥ **[पादान्त्ययमक]**

19) (पदच्छेदः) **सः। विभुः। श्रीमान्। अहिके। ननर्त। यस्य। श्रमानमा। मा। (न। हि। के।) अनहिके। अकरोत्। नद्युदकान्तं। कान्तं। नीत्वा। उरगं। सः। ना। आद्युदकान्तं। (नाद्युदकान्तं)॥**

This verse **refers to the** incident of *Kāliya-mardana*. **सः विभुः अहिके ननर्त. The term अहिके** referring to Kāliya is significant. To worldly sight, the serpent may be frightening by its huge size. But for Lord Kṛṣṇa, it is अहिक = a small, tiny serpent. (अल्पः अहिः अहिकः।टि). Further, there was no fatigue affecting Him due to the poison of the serpent. He remained **श्रीमान्** full of lustre and splendour as ever. [तथापि सः श्रीमान्। सर्पविषेण तस्य शरीरकान्तिर्नापगतेति भावः।(या)] Why ? Because He is **यस्यश्रमानमामानहिके.** (i) सः कः **यस्य अनहिके** । नहनं नहिः बन्धनं। द्वीपेन न विद्यते नहिर्यस्य तत् अनहि निर्मर्यादं **कं** उदकं यस्मिन् सोऽनहिकः प्रलयार्णवः तस्मिन्। अल्पो अहिः अहिकः न अहिकः **अनहिकः** महाहिः शेषः तस्मिन्। **यस्य** एतीति , यः 'एरच्'। तस्य शयानस्य भगवतो **मा शोमा श्रमानमा** श्रमेण जगत्संहरणेन निमित्तेन न नमतीति श्रमानमा जगत्संहरणेनापि यस्य श्रमो नास्ति। तत एव

शोभापगमोऽपि यस्य नास्तीत्यर्थः। तस्य भगवतः कृष्णस्य कालीयेन स्वभोगेन वेष्टने कृतेऽपि कथं श्रमः स्यात्। कथंतरां शोभापगमः स्यात्। कथंतमां च गात्रविक्षेपरूपनर्तनासंभवः स्यादिति भावः।(टि). (ii) **श्रमानमा न हि। श्रमेण** जगत्संहारादिश्रमेण **आ** ईषत् सम्यग्वा **नमा** प्रह्वीभूता **न हि**।(त). (iii) **के** प्रलयोदकेऽपि **श्रमानमा** श्रमेणानमति ग्लानिं प्राप्नोत्येतादृशी **न** भवति **हि** इति प्रसिद्धमित्यर्थः। ... यद्वा केऽपि पुरुषाः **यस्य श्रमानमामाः न हि**। आ **समन्तात् मा** शोभा **आमा** श्रमेणाऽऽनमा आनम्या आमा येभ्यस्ते। तथाविधाः न सन्ति। तस्यानेन **सर्पेण** किं कर्तव्यमिति भावः। **हिक** इत्येकं पदम्। हयतीति **हि** हिगतौ वृद्धौ चेति धातोः क्विपि हीति रूपम्। अनित्यमागमशासनमित्युक्तत्वात् 'ह्रस्वस्य पति कृति तुक्' [६.१.७१ पा.] इति तुगभावः। **हि** च तत् **कं** चेति **हिकं** तस्मिन्। वृद्धत्वेन सर्वतः प्रसृतं यत् कं तस्मिन् प्रलयोदक इत्यर्थः। (ना). (iv) प्रलयकाले सर्पशयनस्य नेदमाश्चर्यमित्याशयेनाह **यस्य श्रमेति। के** प्रलयोदके। 'अहिक' इत्यस्यावृत्तिः। अत्र क शब्दः शरीरपरः तस्मिन् शयानस्येति शेषः। तथा च प्रलयोदके अहिशरीरे शयानस्य **यस्य** श्रीकृष्णस्य। **मा** श्रीः शरीरकान्तिः। **श्रमानमा** श्रमेण सर्पविषजन्यश्रमेण आ ईषदपि नमा नम्रा। श्रमकृतैषत्संकोचवतीति यावत्। **न** न बभूव। **हि** इत्यनेन तत्र प्रमाणप्रसिद्धिं दर्शयति। तथा च प्रलयोदके अहिशरीरे शयानस्य यस्य श्रीकृष्णस्य शोभा न संकुचिता भवति तस्याहिमस्तके नर्तनमात्रेण शोभाऽनपगम इति किं वक्तव्यमिति भावः।(या). All this means that there cannot be any adverse effect of the act of dancing or of serpent's poison; because, firstly He performs the act of world destruction as a child's play without any effort or fatigue, and secondly He is known to lie down on great Śeṣa, the lord of serpents. Hence the dance on Kāliya's hood was an effortless and graceful sport for Him. The second line tells the result of *Kāliyamardana*. **अकरोन्नद्युकान्तं कान्तं** - He made the place nearby river Yamunā poisonless and comfortable to live in : (i) **सः ना** परः पुरुषः कृष्णः **नद्युदकान्तं** नद्याः यमुनायाः उदकमन्तं तत्समीपदेशं च नद्युकान्तं **कान्तं** निर्विषं अकरोत् चकार।(टि). (ii) **नद्युदकान्तं।** नद्युदेति लुप्तविभक्तिकं

पदम्। नद्युदं यामुनोदकं कालियविषदूषितं **कान्तं** मनोहरं सर्वसेव्यमकरोत् चकार। नद्युदं च तत् कान्तं चेति कर्मधारयो वा। बुद्ध्या विवेकेन पूर्ववदेवान्वयः।(भ) (iii) **सः ना** परमपुरुषः। नद्युदकान्तं शुद्धोदस्य मध्यप्रदेशं। **कान्तं** रमणीयं गोगणादिसेव्यमकरोत्।(ना). (iv) नद्याः यमुनायाः उदकस्य अन्तो नाशो विषेण दूषणं यस्मात्स तथा तं।(या). (v) नद्युदकस्य = यामुनप्रवाहस्य अन्त = प्रदेशं नदीभागमिति यावत्। अन्तः = A place or ground in general (V.S.Apte) (**ब**). All this means that Lord Kṛṣṇa, the Supreme Person made the entire region in the vicinity of river Yamunā absolutely free from Kāliya's poison, enabling living beings to live there with comfort and hapiness. The question is raised : 'How did the Lord achieve this ? What happened, then, to Kāliya ?' The answer is '**नीत्वोरगं सनाद्युदकान्तम्**' [नीत्वा+उरगं+सः+ना+आद्युदकान्तं] Lord Kṛṣṇa did not kill Kāliya but sent him to an island in the ocean. The word **आद्युदकान्तं** refers to the island named Ramaṇaka : (i) **आद्युदकान्तं** आदौ उदकं यस्य सः आद्युदकः स एवान्ते अपरपार्श्वे यस्य सः आद्युदकान्तः यस्योभयोः समुद्रोदकं यच्च मध्ये अत एव द्वीपशब्दवाच्यं 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' [६.३.९७ पा.] इति स्मरणात्। तं रमणकं प्रापयित्वेति भावः।(टि). (ii) **आद्युदकान्तं** प्रति आद्युदकः समुद्रस्तस्यान्ते विद्यमानं रमणकं द्वीपं प्रति।(त). (iii) समुद्रे आदिभागे स्थितस्योदकस्यान्तं अन्ते विद्यमानं रमण-काख्यं द्वीपमिति यावत्।(भ). (iv) **आद्युदकस्य** शुद्धोदकस्य मध्यं।(ना). (v) **आद्युदकान्तं** द्वीपं। आदौ अन्ते च उदकं यस्येति योगात् द्वीपमेव हि तादृशम्। तथा च समुद्रमध्यगतं रमणकाख्यद्वीपं प्रतीत्यर्थः।(या). सनाद्युदकान्तं is split up as सः+**नाद्युदकान्तं** also, without any difference in meaning : (i) नाद्युदकान्तं नादः घोषः अस्यास्तीति नादी समुद्रः तस्य उदकमध्यस्थद्वीपं प्रतीत्यर्थ इति वा।(या). (ii) नादः घोषः अस्यास्तीति नादी समुद्रः तस्य उदकमध्यस्थद्वीपं प्रति।(म). वि. reads both नाद्युदकान्तं (उरगं) आद्युदकान्तं (द्वीपप्रदेशं)। नादः अस्य अस्तीति = नादी = समुद्रः। तस्य उदकं। तस्य अन्तं - नाद्युदकान्तं - तम्। The serpent was of the region nearby the ocean.

आदौ च अन्ते च उदकं यस्य तत्। आद्युदकान्तं - तम्। It was sent to the island named Ramaṇaka, lying in the ocean. The म.ता.नि. verses have been quoted in the notes on verse 17. [पादान्त्ययमक]

20) (पदच्छेदः) हत्वा। धेनुकमूढं। बलात्। प्रलम्बं। च। खेट्। सधेनुकं। ऊढं। व्रजं। आवीत्। अमृताशः। पीत्वा। वह्निं। चरस्थिता(रा)दं। ऋताशः।

This verse refers to killing of Dhenukāsura as well as of Pralambāsura and to drinking of wild fire by Lrod Kṛṣṇa. Even though the killing of the two demons had been actually accomplished by Balarāma, here it is stated that that feat was possible for Balarāma because of the presence of Lord Kṛṣṇa in him. [(बलात्=बलाविष्टेन रूपेण। (टि). बलरामाविष्टरूपेण।(या). बलरामद्वारा।(ब.वि)] Here the adjective खेट् is significant. Dhenuka possessed the invincible might due to a boon from god Vināyaka. And खेट् means खस्य आकाशाभिमानिनो गणेशस्यापि ईट् ईश्वरः नियन्ता।(ना). Lord Kṛṣṇa is the Lord or Controller of even Vināyaka. Hence it was an easy task for Him to kill Dhenuka. *Read*: ननु विघ्नेश्वरवरेण दीर्घायुष्यवतो धेनुकस्य हननं कथं कृष्णेन कृतमित्यत उक्तं खेडिति। खेट् आकाशाभिमानिनः धेनुकवरदातुर्विनायकस्येश्वरः कृष्णः।(या). यो धेनुकस्याजेयतां ददौ तस्यापि खस्य आकाशाभिमानिनो विनायकस्यायमीष्टे।(ब). खेट् is also interpreted to mean Rudra, the presiding deity of खम् = मनस् = mind : खेट् खमिन्द्रियं मनः। खमाकाशं तदभिमानित्वात्। तच्छब्दाभ्यां खाभ्यां रुद्रगणपतिभ्यां इज्यतेऽसौ खेट्। तद्वरदाधिपः प्रलम्बधेनुकवरदाधिपः।(टि). This states that Rudra and Gaṇapati had given boons respectively to Pralamba and Dhenuka. Note : धेनुकमूढं = धेनुकश्चासौ मूढश्च तं। (टि) धेनुकाख्यं मूर्खं खरमिति यावत्।(या). The foolish Dhenuka had taken the form of a donkey. And

**सधेनुकमूढं** = (व्रजं) = **सधेनुकं** धेनुभिः सहितं। पुनः कीदृशं ऊढं स्वसंश्रितं स्वात्मानं शरणं प्राप्तम्। वह प्रापण इति धातोः।(टि). Vraja (Gokula) together with its wealth of cows had resorted to Lord Kṛṣṇa for protection. Hence it was His duty to protect it from the wild fire. The second line describes the ferocity of the wild-fire as **चरस्थितादम्**, meaning the fire was consuming both movables and immovables : चरं च स्थितं च चरस्थिते। ते अत्तीति चरस्थितात्। तं चरस्थितादम्।(टि). चराः मृगादयः स्थिताः स्थावराः वृक्षादयस्तदत्तारं वनवह्निम्।(भ) This wild-fire was drunk by Lord Kṛṣṇa who is **अमृताशः** and ऋताशः. It is true that He has nectar to drink and hence cannot have any thirst for fire. But it was His desire to protect Vraja by drinking the fire : **अमृताशः।** (आनन्दामृताशनोऽपि) **चरस्थिरादं** चराचरभक्षकं। वह्निं। **पीत्वा आवीत्** रक्षितवान्। ननु वह्निनाशः प्रकारान्तरेणापि कुतो न कृत इत्यत उक्तं **ऋताशः** सत्यसङ्कल्प इत्यर्थः।(या). [Note : या. reads चरस्थिरादम् instead of चरस्थितादम्। This is followed by ब. and वि. But there is no difference in meaning]. The term **ऊढं** (सधेनुकम्+ऊढं) is connected with **प्रलम्ब** by **या** – **ऊढं** बलरामेणारूढं। प्रलम्बं च। It means that Balarāma was riding on Pralamba during the play 'Rider and Carrier' [Winner to ride and loser to carry]. *Read:* आचेरुर्विविधाः क्रीडा वाह्यवाहकलक्षणाः। यत्रारोहन्ति जेतारो वहन्ति च पराजिताः ॥२१॥ उवाह कृष्णो भगवान् श्रीदामानं पराजितः। वृषभं भद्रसेनस्तु प्रलम्बो रोहिणीसुतम् ॥२४॥ (भागवत १०-१८) It should be noted that according to the *Bhāgavata* both Dhenuka and Pralamba were killed by Balarāma : (i) **स (बलः)** तं (धेनुकं) गृहीत्वा प्रपदोर्भ्रामयित्वैकपाणिना। चिक्षेप तृणराजाग्रे भ्रामणत्यक्त-जीवितम्॥ १०.१५.३२ (ii) दृष्ट्वा प्रलम्बं निहतं बलेन बलशालिना। गोपाः सुविस्मिता आसन् साधु साध्वितिवादिनः ॥ १०.१८.३० But टी.टि. ब and वि. state that Dhenuka was killed by Lord Kṛṣṇa and Pralamba by Balarāma : (i) प्रलम्बं धेनुकं मूर्खं

हत्वा तद्वरदाधिपः। बलाविष्टेन रूपेण स्वयं च सह धेनुभिः ॥ (टी). (ii) स्वयं धेनुकं हत्वा बलेन प्रलम्बं च घातयित्वेत्यर्थः।(टि). *'Dhenukanū Śrī Kṛṣṇaninda Satta'* (Kan) (वि)' *Kṛṣṇanu mūḍhanāda dhenukāsuranannu ....kondu'* (Kan) (ब). It is या. which makes it clear that Lord Kṛṣṇa by His presence in Balarāma killed both Dhenuka and Pralamba : कृष्णः ~~धेनुकमूढं धेनुकमस्थं मूर्ख~~ खरमिति यावत्। ऊढं बलरामेणारूढं। प्रलम्बं च। बलात् बलरामविष्टरूपेण। हत्वा।(या). *Read* : "Both Dhenukāsura as well as Pralambāsura were killed by Balarāma but here mentioned as done away by Lord Kṛṣṇa. It is correct because, it is only Paramātma in the form of शुक्लकेश आवेश in Balarāma did the job" (T.S.Raghavendran). The म.ता.नि. narrates (अ.१३) : विघ्नेशतो वरमवाप्य सुदुष्टदैत्यो दीर्घायुरुत्तमबलः कदनप्रियोऽभूत्। नित्योद्धतः स उत राममवेक्ष्य तालबृन्दात्फलानि गलयन्तमथाभ्यधावत् ॥ तस्य प्रहारमभिकाङ्क्षत आशु पृष्ठपादौ प्रगृह्य तृणराजशिरोऽहरत्सः। तस्मिन् हते खरतरे खररूपदैत्ये सर्वे खराश्च खरतालवनान्तरस्थाः ॥ प्रापुः खराःखरतराः खरराक्षसारिं कृष्णं बलेन सहितं निहताश्च तेन। सर्वान्निहत्य खररूपधरान् स दैत्यान् विघ्नेश्वरस्य वरतोऽन्यजनैरवध्यान् ॥ पक्वानि तालसुफलानि निजेषु चादाद्दुर्वारपौरुषगुणोद्धरितो रमेशः। पक्षद्वयेन विहरत्स्वथ गोपकेषु दैत्यः प्रलम्ब इति कंसविसृष्ट आगात् ॥ कृष्णस्य पक्षिषु जयत्सु स राममेत्य पापः पराजित उवाह तमुग्ररूपः। भीतेन रोहिणिसुतेन हरिः स्तुतोऽसौ स्वाविष्टतामुपदिदेश बलाभिपूर्त्यै ॥ तेनैव पूरितबलोऽम्बरचारिणं तं पापं प्रलम्बमुरुमुष्टिहतं चकार। तस्मिन् हते सुरगणा बलदेवनाम रामस्य चक्रुरतितृप्तियुता हरिश्च ॥ वह्निं पपौ पुनरपि प्रदहन्तमुच्चैः गोपांश्च गोगणमगण्यगुणार्णवोऽपात् ॥ (५२-५८) [पादान्त्ययमक]

21) (पदच्छेदः) गिरिणा। रक्षा। अपि। कृता। व्रजस्य। तेन। स्वरक्षरक्षापिकृता। शक्राय। व्यञ्जयता। स्वां। शक्तिं। विश्वं। आत्मना। अव्यं। (व्यञ्ज)जयता ॥

This verse refers to Lord Kṛṣṇa's raising mountain Govardhana to protect cowherds and cows

of Gokula when Indra began to punish them by pouring down heavy showers continuously for days together. तेन गिरिणा व्रजस्य रक्षा अपि कृता is the main sentence. स्वरक्षरक्षापिकृता qualifies तेन (कृष्णेन) = By Lord Kṛṣṇa : (i) स्वः आनन्दरूपश्चासौ अश्च अकारवाच्यश्च स्वरः। स्वराय क्षरन्ति क्षीरं यास्ताः स्वरक्षराः गावः। ताः क्षिण्वन्ति वारिधाराभिस्ते स्वरक्षरक्षाः मेघाः तेषामपिः 'उपसर्गे घोः किः' (३.३.९२) आपालकः स्वामी स्वरक्षरक्षापिः इन्द्रः तं करोतीति स्वरक्षरक्षापिकृत् तेन। गोनाशकसांवर्तकमेघपालकेन्द्रस्रष्टेत्यर्थः।(टि) (ii) स्वरः (स्वर् इत्यव्ययं स्वश्चासौ अश्च स्वरः स्वतन्त्रः) आनन्दरूपी कृष्णः तस्मै क्षीरं क्षरन्तीति स्वरक्षरा गावः तासां क्षयो येभ्यस्ते स्वरक्षरक्षाः मेघाः तान् आ समन्तात् पालयतीत्यापिरिन्द्रः तं करोतीति कृत् तेन इन्द्रस्य मेघपालकत्वप्रदेनेति यावत्।(या) (iii) स्वरः = अकारवाच्यः सुखरूपश्च भगवान् तस्मै क्षरन्ति क्षीरमिति स्वरक्षरा गावः तासां क्षयदानां मेघानामापालस्येन्द्रस्यापि कारणभूतेन।(ब). (iv) स्वेनैव रमते इति स्वरः भगवान्। स्वराय (क्षीरं) क्षरन्तीति स्वरक्षराः। स्वरक्षराणां क्षः क्षयः येभ्यः स्वरक्षरक्षाः मेघाः। तान् आपालयतीति स्वरक्षरक्षापिः इन्द्रः। तं करोतीति, कृन्ततीति = स्वरक्षरक्षापिकृत् - तेन।(वि). All this means that Lord Kṛṣṇa is the maker (कृत्) of Indra who is the Lord (आपिः) of clouds who torment (क्षः) cows which give (क्षर) milk to Him, who is स्वर meaning Blissful and expressed by अकार. It has also other meanings : a) स्वरक्षरक्षापिः इन्द्रः। तं कृन्तति तदीयाहंकारं छिनत्तीत्यर्थः इति वा।(ना) कृन्ततीति कृत् तेन। (वि). Lord Kṛṣṇa, removes Indra's arrogance. b) स्वरं स्वयमेव रमणीयं भगवन्तं क्षरति भक्तेभ्यो ददाति ज्ञानदानेन स्वरक्षरो वायुः। क्षरविनाशसंततदानयोरिति धातोः। क्षपयति नाशयति इति क्षापी रुद्रस्तौ करोतीति स तथा तेन।(टि). Lord Kṛṣṇa created (कृत्) Vāyu who makes (क्षर) devotees reach Him (स्वर) and also Rudra who is the destroyer (क्षापि). A question may arise – "How could such an Indra act against the Lord ?" The answer is "He had forgotten that Kṛṣṇa was the incarnation of the Lord." नन्विन्द्रेण कथं

स्वोपजीव्यभगवद्विरोधः कृत इति चेत् कृष्णे भगवदवतारत्वस्य तेन विस्मृतत्वात्।(या). Another question - "Why did Kṛṣṇa lift the mountain to protect them ? Was there no other way ?" The reply is given in the second line : **शक्राय व्यञ्जयता स्वां शक्तिं विश्वमात्मनाऽव्यञ्जयता।** Firstly, Indra was shown Lord's might. Secondly, His own people were shown His inherent capacity to protect the entire universe : (i) **शक्राय स्वां शक्तिं व्यञ्जयता** (1) स्वस्मरणार्थमेव इन्द्रयागे प्रवृत्तान् गोपान् छलेन गिरिमहे अवतार्य ततो यागविघ्नकरे कृष्णे कोपेनेन्द्रेण मेघैः संततं सप्तदिनं वर्षे कृतेऽपि निर्बाधं गोकुलमवगम्य मां स्मृत्वा शरणमागच्छत्विति बुद्ध्या गिरिणा व्रजरक्षा भगवता कृतेति भावः।(टि). (2) स्वां स्वकीयां शक्तिं भगवदवतारत्वस्मारकशक्तिं प्रकाशयतेत्यर्थः।(या). Kṛṣṇa reminded Indra that He is an incarnation of the Supreme Lord. (ii) **विश्वमात्मनाऽव्यञ्जयता** (विश्वम्+आत्मना+अव्यम्+जयता) 1) पुनः कथम्भूतेन **आत्मना स्वेन अव्यं** रक्ष्यं **विश्वं जयता** स्वभावेनैव विश्वजितेत्यर्थः। (टि). 2) प्रयोजनान्तरमाह **विश्वमित्यादिना।** अव्यमित्यस्य देहळीदीपन्यायेनोभयत्रसंबन्धः। तथा च। **आत्मना स्वेन।** **अव्यं** रक्ष्यं। **विश्वं** अव्यं (सत्) रक्ष्यं। **व्यञ्जयता** गोपान् प्रति विज्ञापयतेत्यर्थः। व्रजरक्षणेन सर्वजगद्रक्षणमपि मयैव क्रियत इति गोपानां ज्ञापितवानिति भावः।(या). Lord Kṛṣṇa wanted to show to His own people that entire universe exists under His protection. ब. splits up as विश्वम्+आत्मनाव्यं+जयता. It is explained : आत्मनैवेदं विश्वं नाव्यं वर्तते। आत्मरूपेणैव नावा तार्यमिति यावत् 'नाव्यं त्रिलिङ्गं नौ-तार्ये' इत्यमरः। The world (bondage) should be crossed over by the boat in the form of the Lord, i.e. by His grace only. जयति = सर्वतः प्रकृष्यत इति जयन् तेन। जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः। उत्कर्षप्राप्तिराद्योऽर्थः। (ब) Lord Kṛṣṇa is excellent in all ways. The म.ता.नि. narrates (अ.१३) : कृष्णोऽथ वीक्ष्य पुरुहूतमहप्रयत्नं गोपान्न्यवारयद-विस्मरणाय तस्य। मा मानुषोऽयमिति मामवगच्छतात्स इत्यव्ययोऽस्य विदधे महमङ्गमीशः ॥६२॥ इन्द्रोऽथ विस्मृतरथाङ्गधरावतारो मेघान् समादिशदुरूदकपूगवृष्ट्यै। ते प्रेरिताः सकलगोकुलनाशनाय धारा

वितेरुरुरुनागकरप्रकाराः ॥६४॥ ताभिर्निपीडितमुदीक्ष्य स कञ्जनाभः सर्वं व्रजं गिरिवरं प्रसभं दधार। वामेन कञ्जदलकोमलपाणिनैव तत्राखिलाः प्रविविशुः पशुपाः स्वगोभिः ॥६५॥ वृष्ट्वोरुवार्यथ निरन्तरसप्तरात्रं त्रातं निरीक्ष्य हरिणा व्रजमश्रमेण। शक्रोऽनुसंस्मृतसुरप्रवरावतारः पादाम्बुजं यदुपतेः शरणं जगाम ॥६६॥ **[पादान्त्ययमक]**

22) (पदच्छेदः) **रेमे। गोपीषु। अरिहा। सः। मन्मथाक्रान्तसुन्दरीपीषु।** अरिहा। **पूर्णानन्दैकतनुः। सः। विश्वरुक्पावनः। अपि। अ(आ)नन्दैकतनुः॥**

This verse refers to Lord Kṛṣṇa's giving pleasure of His company to lovely cowherdesses of Gokula, who were passionately attached to Him. Here first **अरिहा** (अरि+हा) is Lord Kṛṣṇa who killed His enemy by name Śaṅkhacūḍa, who had arrived to harass His beloved cowherdesses : **अरिहा** वेणुनादं श्रुत्वा भर्त्रादीन् विसृज्य रात्रावेव स्वसमीपमागतगोपीभीषकरुद्रवरोन्मत्तशंखचूडाख्यदुर्मतेः हन्ता।(टि). Second **अरिहा** = अलिहा = Without serving them with attachment as any passionate person approaching his beloved does. Because the Lord never serves others; on the other hand, He is served by others, one and all. (i) **अरिहा।** अलिहाऽसेवयैवेशः स्वयं सेव्योऽखिलैर्जनैः।(टी) (ii) कामिपुरुषवत् तस्य स्त्रीसेवया रमणं नेत्याह **अरिहेति।** अत्र रस्य लत्वं विवक्षितम्। यमकसंरक्षणार्थं तथोक्तम्। लिट् लेहनं सेवनं तदभावो अलिट् तेन अलिहा असेवनेन सेवां विनेति यावत्।(या). (iii) अरिहा = अलिहा असेवनेन निर्लिप्त इति यावत्। लरयोरभेदः। 'यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा' इति साहित्यदर्पणे न्याय उक्तः।(ब). A question may be asked: "How is it that He approached them without such usual attachment ?" Because, He is **पूर्णानन्दैकतनुः।** His body is fully filled with brim - full bliss. Thus, He is not in need of securing bliss from others including those cowherdesses : कुत इत्यत आह पूर्णेति। यतः इति शेषः। सः कृष्णः। यतः **पूर्णानन्दैकतनुः** पूर्णः

सर्वेभ्योऽधिकः आनन्द एव एका मुख्या तनुः शरीरं यस्य सः अवाप्तसमस्तकाम इति यावत्। अतोऽसेवयेति गम्यत इति भावः।(या). Next question is - तर्हि किमर्थं रेमे ? ("Why did He enjoy their company ?") The reply is – "It is not to receive pleasure; but only to give pleasure." Because the Lord is 1. **विश्वरुक्पावनः** and 2. **आ(अ)नन्दैकतनुः।** (1) (a) (i) अपि यद्यपि पूर्णानन्दैकतनुः **विश्वरुक्पावनः** विश्वेषां सर्वेषां भक्तानां कामाद्युपद्रवहन्ता।(या). (ii) विश्वाश्च ताः रुजश्च रोगाः तान् पावयति गमयतीति विश्वरुक्पावनः। कामादिरोगहा।(टि). He is the Remover of all diseases of His devotees. (b) यद्वा विश्वा संपूर्णा रुक् ज्ञानं प्रकाशश्च यस्य स तथा पावनः शोधकः भक्तानां नैर्मल्यकरः। (टि). The Omniscient Lord purifies the knowledge of His devotees. (2) (a) **आनन्दैकतनुः** आनन्दयतीत्यानन्दा तत्प्रदा एका मुख्या तनुरवतारो यस्य स तथा।(या). His incarnation as Kṛṣṇa is primarily to give pleasure to His devotees. *Read* : तथा च गोपिकानां भक्तत्वात् तासां कामाद्युपद्रवनाशायानन्दप्रदानाय च रमणं न स्वप्रयोजनायेति भावः।(या). (b) **अनन्दैकतनुः** अनं ज्ञानं गतिं च ददातीति अनन्दा द्वितीयाया अलुक् तादृशी एका मुख्या उत्तमा तनुर्यस्य स तथोक्तः।(टि). His incarnations are to give knowledge and prompt movement. (c) **अनन्दैकतनुः** नन्दः सुखं तद्विरुद्धं दुःखं अनन्दः तदैवैकं केवलं येषां ते अनन्दैकाः। ह्लादैकमयीं दोषैकदृक् पुरोभागीत्यादाविव केवलार्थस्यैकशब्दस्य 'पूर्वकालैक ...' [२.१.४९ पा.] इति सूत्रेणाग्रहणात् तस्य परनिपातः। उक्तं चैतत् टीकाकारैः सदागमैक विज्ञेयमिति व्याचक्षाणैः। तथा च केवलदुःखस्वभावा असुराः तनवः क्षीणा येनेत्यर्थः। अनन्देषु लोकेषु एके अन्ये विरोधिनस्तनवः क्षीणा यस्येत्यर्थः। 'अनन्दा नाम ते लोका अन्धेन तमसा वृताः' इत्युक्तेः।(ईशा.३) नन्दात् नन्दगोपात् एका केवला तनुः यस्येत्येतादृशो न भवतीत्यर्थः। तत्र केवलेति हेतुगर्भविशेषणम्। प्राकृतदेहवत्वे हि तदुत्पत्तिः स्यादिति भावः। अनं गतिं ज्ञानं वा ददातीत्येतादृशी तनुर्यस्येत्यप्याहुः।(ना). Here ना. gives four different meanings : (1) The Lord has extinguished demons who deserve only sorrow and misery; (2) He

has destroyed His enemies residing in sorrowful regions; (3) His body was not produced by Nandagopa; and (4) His body gives knowledge and prompts movement. The word **मन्मथाक्रान्तसुन्दरीपीषु** describes the cowherdesses who derived pleasure by the company of Lord Kṛṣṇa. (i) इः कामः पिः पाता यस्य तदिपि स्त्रीगुह्यं तदेव श्रीः (ई:?) संपत् यासाम् ताः ईप्यः मन्मथाक्रान्ताः कामाविष्टाश्च ताः सुंदर्यश्च ता ईप्यश्च तास्तथा तास्वित्यर्थः।(या). (ii) मन्मथेन कन्दर्पेण आक्रान्ताश्च ताः सुन्दर्यश्च ता इपियश्च मन्मथाक्रान्तसुन्दरीपियस्तासु अक्षतयोनिषु कन्यास्वित्यर्थः। कथमिदं लक्ष्यत इत्यत आह। स्त्रीगुह्यमीपि-शब्दोक्तमिति। शोभां पिबति पाति वा तदीपि। तच्चाक्षतयोनित्वेन। अन्यथा शोभापगतेः। तथा च ईपिना अक्षतगुह्येन ईः श्रीः शोभा यासां ताः ईपियः तासु च गोविन्दः पुरा वरदः रामात् द्विजत्वगमनादपि पूर्वमेवास्माकं तव सङ्गोऽस्त्विति वरदः रेमे।(टि). [मन्मथ = cupid; आक्रान्त = overpowered; सुन्दरी = beautiful maiden; ईपी = lovely due to maidenhood or virginity.] All this means that the lovely cowherdesses had been overpowered by intense passion and wanted to enjoy Kṛṣṇa's company. ना. gives two more meanings : (i) मन्मथेन कामेनाक्रान्ताश्च ता सुन्दर्यश्च मन्मथाक्रान्तसुन्दर्यः। तासु ईः महालक्ष्मीः तया प्यायिताः तदाविष्टा इत्यर्थः 'प्यायः पी' (६.१.२८) इति सूत्रेण प्यायतेः पीभावः। लक्ष्म्यावेशं विना भगवदङ्गसङ्गे नान्यस्त्रीणामधिकारः। अतस्तत्र रमावेश इति भावः।(ना). Those lovely cowherdesses had been affected by passion and Goddess Lakṣmī (ई) was indwelling (पी) in them. In fact, none can have the contact of Lord's body unless one is indwelt by Lakṣmī. (ii) यद्वा सुन्दरीं महालक्ष्मीं पात्यसौ सुन्दरीपः परमात्मा तमात्मानमिच्छन्तीति सुन्दरीप्यः तासु परमात्माङ्गसङ्गं कामयमानासु। सुन्दरीपमिच्छन्तीत्यत्र 'सुप् आत्मनः क्यच्' [३.१.८] इति क्यचि 'सनाद्यन्ता धातवः' [३.१.३२] इति धातुसंज्ञया सुन्दरीपीयतेः कर्तरि क्विपि च अतो 'लोपो व्योर्वलि' [६-१-७६] इति यलोपे सुन्दरीपीरिति दीर्घेकारान्तशब्दः। सह खेन वर्तत इति सखः तमिच्छन्तीति सखीरितिवत्। सुन्दरीत्यत्र

स्त्रियाः पुंवद्भावेऽपि तृतीयोऽतिशये (महाव्याकरण) इतीकारेण सवर्णदीर्घः। सुन्दर्या लक्ष्म्या वा प्यायितासु। सुन्दरीशब्देनैव निरूपपदेन लक्ष्मीरुक्ता।(ना) Here सुन्दरी = Lakṣmī; सुन्दरीप = Her protector; सुन्दरीप्यः = Those who long for His contact. So, the lovely cowherdesses were overpowered by passion and were longing the company of the Lord, the Protector of Goddess Lakṣmī. The म.ता.नि. narrates (अ.१३) : कात्यायनी-व्रतधराः स्वपतित्वहेतोः कन्या उवाह भगवानपराश्च गोपीः। अन्यैर्धृता अयुगबाणशराभिनुन्नाः प्राप्ता निशास्वरमयच्छशिराजितासु ॥७३॥ रुद्रप्रसाद-कृतरक्ष उतास्य सख्युर्भृत्यो बली खरतरोऽपि च शङ्खचूडः। ताः कालयन् भगवतस्तलताडनेन मृत्युं जगाम मणिमस्य जहार कृष्णः ॥७७॥ [पादान्त्ययमक]

23) (पदच्छेदः) **अथ। हतयोः। गलिकेश्योः। श्वफल्कजप्रापितः। पुरीं। गलिकेशी। ओः। भङ्क्त्वा। धनुः। आजवरं। जघान। तेन। एव। च। स्वयं। राजवरम्॥**

This verse refers to Lord Kṛṣṇa's killing two more demons viz. Ariṣṭa who had come in the form of a bull, and Keśin who attacked taking the body of a horse, His departure to Mathurā in the chariot driven by Akrūra, and His breaking Rudra's bow at Mathurā and killing Kaṁsa's soldiers. **अथ** = Then, वत्सासुरादिवधानन्तरम्।(टि). गलिकेश्योः refers to the two demons : (i) गलिश्च केशिश्च गलिकेशी तयोः गलिकेश्योः गलिकेशवतोरिति वक्तव्ये गलिकेश्योरिति व्यत्ययः तयोः कुत्सितत्वसूचनार्थः। 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायते। संबन्धेऽस्ति विवक्षायां भवन्ति मतुबादयः' इति वचनात्। ननु कयोः (ककं) प्रकृत्योर्व्यत्ययः 'अत इनिठनौ' [५.२.२५] इति इनेर्विधानात्। उच्यते 'केशाद्वोऽन्यतरस्याम्' [५.२.१०९] इति (दिनि ?) वस्य केशशब्दात् विशिष्य विधानात् पक्षे मतुपः प्राप्तेः कथंचिद्विरन्यतरस्यांग्रहणेन (न ?) प्राप्नोति। ननु (एवं ?) स्वं रसं गलशब्दस्य तु गलधातोः कृति निष्पन्नत्वात् 'एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ' इति इनेर्निषेधात् इनिर्न प्राप्नोति। तथा च

कुत्सितयोर्गलिकेशिनोः अरिष्टकेशिनोः **दैत्ययोः।(टि).** (ii) **गळिकेश्योः** गळसाध्यध्वनिविशेषोऽस्यास्तीति गळी **वृषभाकारोऽरिष्टनामासुरः।** केशा अस्य सन्तीति केशी तुरगरूपो **दैत्यः तयोर्गळिकेश्योः।** गळिकेशिनोरिति वक्तव्ये इन्यर्थक इप्रत्ययोऽप्यस्तीत्याशयात् **व्यत्ययः** दैत्ययोः **कुत्सनार्थ** इत्यप्याहुः।(या). (iii) ... **गली** सास्नादिमान् **वृषभासुरः।** एवमुक्त्या वृषभासुर इत्यत्र वृषभशब्दो **न** पुरुषर्षभ **इत्यादाविव** श्रेष्ठवाचकः किंतु पशुवाचक इति सूचितम्। तथा केशिनमिति **नान्तशब्दानुकरणं** नकारान्तं परित्यज्य केशिरिति इकारान्तं **वदता तस्य कुत्सितत्वरूपोऽपकर्षः** सूचितः तेन न तौ पूतनादिवत् **सञ्जीवाविष्टाविति ध्वनितम्।** गली च **केशिश्च** गलिकेशी तयोः व्यत्ययः कुत्सने **स्मृतः** 'सुप्तिङुपग्रहलिङ्गनराणां कालहलच् स्वरकर्तृयङां च। व्यत्ययमिच्छति **शास्त्रकृदेषां सोऽपि** च सिद्ध्यति बाहुलकेने'त्युक्तत्वात्।(ना). (iv) **गलिकेश्योरित्यत्र** केशिन् शब्दस्य नकारान्तत्वव्यत्ययः **तिर्यग्भ्यः कुत्सितत्वज्ञापनार्थः**।(त). All this means that the use of the form **गलिकेश्योः** instead of गलिकेशिनोः is quite proper as it indicates the contempt befitting to those two demons. It is also suggested that there was no co-living of two-good and bad-souls in them as was the case with Pūtanā in whom lived Urvaśī (good soul) and **Tāṭakā (wicked soul). Note :** धनुर्यागमहोत्सवव्याजेन **पुरीं** मधुरां **श्वफल्कजप्रापितः** श्वफल्कजेनाक्रूरेण प्रापितः।(टि). Lord Kṛṣṇa was **taken** by Akrūra to Mathurā on the pretext of bow-festival. The real intention was to kill wicked Kaṁsa. Second **गलिकेश्योः** = **गलिकेशी+ओः** and **गलिकेशी = गलि+कं+ईश+ई** (i) **गलिकेशी** प्रशस्तौ गलौ ययोस्तौ गलिनौ सुगलौ **ब्रह्मरुद्रौ यस्य** सः गलिकेशी तद्वत्त्वं तत्स्वामित्वेन । (टि). (ii) **गलिकेशी गलिनौ सुगलौ** । प्राशस्त्यार्थ इनिः। सुस्वरयुक्ततया प्रशस्तकण्ठौ केशौ **कश्च ईशश्च केशौ** तौ ब्रह्मरुद्रावस्य स्त इति तथोक्तः। (भ). (iii) ... **ब्रह्मरुद्राभ्यां** स्तूयमान इति यावत्। (या). गलिकेशी is Lord Kṛṣṇa who is **full-throatedly** and melodiously eulogised by Brahmā and Rudra, He being their Lord. **ओः** = उकारवाच्यरुद्रस्य (या). Genetive singular of उ = Rudra, qualifying **धनुः** = bow. **ओः** also

means Lord Kṛṣṇa Who is superior to अ = Brahmā : अः अकारवाच्यः उः उत्कृष्टः अश्चासौ उश्च ओः। आत् चतुर्मुखात् उः उत्कृष्टः ओः श्रीकृष्णः।(या). **आजवरं** qualifies **धनुः** – (i) अजस्यापत्यमाजो रुद्रः तस्य वरः यस्य तत्तथा ।(टि) The bow had been strengthened by the boon of Rudra, the son of Aja or Brahmā; (ii) **आजवरं** अजो ब्रह्मा रुद्रो वा तत्संबन्धी आजः वरो यस्य तत्तथोक्तं तत् (या). (iii) **आजवरं** ब्रह्मणैव धनुस्तेन शिवाय दत्तं ततः कंसेन गृहीतमिति।(ना). The bow had been strengthened by the boon of Brahmā or Rudra. Or, it had been given to Rudra by Brahmā, which later was received by Kaṁsa. **राजवरं** is interpreted to mean both 1. Kaṁsa and 2. his army or soldiers. (1) (i) **ओः** रुद्रस्य धनुर्भङ्क्त्वा **तेनैव** तच्छब्देन **राजवरं** कंसाख्यं राजश्रेष्ठं जघान। विच्छिन्नधैर्यं चकार। (टि). (ii) **तेनैव** तच्छब्दमात्रेणैव **राजवरं** कंसं **जघान** हतप्रायमकरोत्। (भ). Here **तेनैव** = by the sound of breaking of that bow. Kaṁsa almost died on listening that terrible sound. (2) (i) अथवा खण्डितधनुषैव राज्ञः कंसस्य **वरं** बलं बवयो रलयोरभेदः। सैन्यं **जघान** हिंसितवान्।(टि). (ii) **राजवरं** कंसबलं। **जघान** बस्य वत्वं लस्य रत्वं च यमकार्थम्।(या). So राजवर = राजबल = **Army** of **king Kaṁsa. Here तेनैव** = तेन भग्नेन धनुषा **एव** = By that broken bow itself. Lord Kṛṣṇa broke the bow. That terrible sound gave a death blow to Kaṁsa and when his army attacked Kṛṣṇa, He just destroyed it by mere that broken bow. Both these meanings have the authority of म.भा.ति. (अ.१३) : तस्मिन्सुरासुरगणैरखिलैरभेद्ये भग्ने बभूव जगदण्डविभेदभीमः। शब्दः स येन निपपात भुवि प्रभग्नसारोऽसुरो धृतियुतोऽपि तदैव कंसः॥ आदिष्टमप्युरुबलं भगवान् स तेन सर्वं निहत्य सबलः प्रययौ पुनश्च॥(१०५-१०६). The म.ता.नि. narrates (अ.१३) : श्रुत्वातिकोपरभसोच्चलितस्स कंसो बध्वा सभार्यमथ शूरजमुग्रकर्मा। अक्रूरमाश्वदिशदानयनाय विष्णोः रामान्वितस्य सह गोपगणै रथेन ॥८४॥ ...प्राप्याथ चायुधगृहं धनुरीशदत्तं कृष्णः प्रसह्य जगृहे सकलैरभेद्यम्। कांसं स नित्यपरिपूर्णसमस्तशक्तिरारोप्य चैतदनुकृष्य बभञ्ज मध्ये ॥१०४॥ [**पादान्त्ययमक**]

24) (पदच्छेदः) मृत्नन्। गजं। उग्रबलं। सबलः। रङ्गं। विवेश। सृतिमुक्। रबलं। हत्वा। मल्लौ। बलिनौ। कंसं। च। विमोक्षितौ। ततौ। लौ (रौ)। बलिनौ ॥

This refers to some prominent deeds of Lord Kṛṣṇa. He killed the mighty elephant Kuvalayāpīḍa, invincible wrestlers Cāṇūra and Muṣṭika, tyrant king Kaṁsa as well as his associates and finally He delivered His parents from imprisonment. (1) उग्रबलम् qualifying गजं (Kuvalayāpīḍa) is interpreted two-fold : उग्रो रुद्रः तद्वरो यस्य स तथोक्तः वबयोरभेदात् रलयोरभेदाच्च। उग्रं बलं यस्येति वा तम्। गजं कुवलयापीडसंज्ञम्।(या) [उग्रबल = 1. strengthed by Rudra's boon; and 2. possessing terrific strength]. (2) सबलः =(i). बलरामेण सहितः। कृष्ण इत्यध्याहारः।(या). With Balarāma. (ii). बलान्वितः कृष्णः।(टि). Mighty Kṛṣṇa. (3) रङ्गं - (i) मल्लविहारस्थानं।(टि). Wrestling hall. (ii) युद्धसन्नद्धशत्रु-स्थानम्।(या). The place where His enemies were ready to fight. (4) रबलं is understood as (i) qualifying रङ्गं and also as (ii) connected to सृतिमुक्. (i) (अ) रबलं वबयो रलयोरभेदः। रवेण वाद्यध्वनिविशेषेण रं रमणीयं। अथवा रं रमणीयं वरं वरणीयं।(या) (आ) रबलं = रवं लाति आदत्ते। सविविधवाद्यरवम्।(ब) The hall was resounding with the sounds of various musical instruments. (ii) कथंभूतः कृष्णः रबलं। रं रमणीयं ज्ञानं बलं परिपालकरूपं यस्य स तथा तं परिपक्वज्ञानिनं भक्तं। सृतिमुक् संसारान्मोचयतीति सृतिमुक्। अन्तर्णीतणिजन्तमिदम्।(टि.वि.) Lord Kṛṣṇa liberates His devotee possessing excellent knowledge, from worldly bondage. (5) बलिनौ मल्लौ is also explained two-fold : (i) वरिणौ मल्लौ।(टि) The two wrestlers, recipients of boons. (ii) बलं वरो वा अनयोरस्तीति तौ। मल्लौ चाणूरमुष्टिकसंज्ञौ।(या). They viz. Cāṇūra and Muṣṭika, possessed बल or physical might (or boons). (6) या. points out that च after कंस is meaningful : चशब्दात्तत्सैन्यं च हत्वा ब्रह्मादिसंस्तुतोऽभूदिति शेषः।(या). Lord

Kṛṣṇa killed not only Kaṁsa but also his entire army and was extolled by gods, Brahmā downwards. (7) **ततौ** = तातौ मातापितरौ देवकीवसुदेवौ। (8) **लौ** and **वलिनौ** qualify **ततौ**। (i) a) **लौ** रै रमणौ रमणीयौ।(टि) लौ। रै। रमणौ कृष्णे रतियुक्तौ।(भ). रमणीयौ भक्त्यादिगुणोपेतावित्यर्थः।(या). Both the parents were affectionate and devoted to Lord Kṛṣṇa. b) **लौ** = कारायां गृहीतौ ला आदाने।(भ.ब.) Both had been kept in a prison. (ii) **बलिनौ** वबयो रलयोश्चाभेदः नस्य णत्वं च 'अहं युवयोः पुत्रो भविष्यामी'ति पूर्वं स्वदत्तवरवन्तौ।(या). The parents had been blessed by the Lord with a boon that He would become their son. या. explains significance of **सृतिमुक्** with reference to **ततौ विमोक्षितौ**। संसारमोचकस्य निगड-बन्धमोचकत्वं नाश्चर्यकरमित्याशयेनाह **सृतिमुगिति। सृतिमुक्** सृतेः संसारात् मोचयतीति तथा यतोऽत इति शेषः।(या). There is no wonder that He released them from prison; because, He releases even from worldly bondage. There are two alternate readings : 1. **श्रुतिमुक्** for **सृतिमुक्**; and 2. **विमोक्षिता** for **विमोक्षितौ**. 1. **श्रुतिमुक्** - (i) स वै सर्वविद्याधीशः सुराधिपः।(टी) (ii) (श्रुतिमुक्) इति पाठे **जात** इति शेषः। तथा च **पश्चादुपनीतः** सर्वश्रुत्यध्ययनं सान्दीपनिसकाशात्कृतवानित्यर्थः। श्रुतिं मुञ्चति उच्चारयतीति श्रुतिमुगिति व्याख्यानात्।(या). Lord Kṛṣṇa having undergone thread-ceremony became the Master of all scriptures after going to preceptor Sāndīpanī's hermitage. He was reciting all scriptures fluently and by rote. (2) **विमोक्षिता** बभूव मोचयामासेति यावत्। मोचयामास **यौ** ततािविति पूर्वटीकोक्तेः।(भ). As it has been stated by the verb **मोचयामास** in टी, **विमोक्षिता** should be interpreted as विमोक्षिता बभूव = मोचयामास = were freed from prison. The म.भा.नि. narrates (अ.१३) : आयन् जगद्गुरुतमो बलिनं गजेन्द्रं रुद्रप्रसाद-परिरक्षितमाश्वपश्यत् ॥११२॥ ..... विक्रीड्य तेन करिणा भगवान् स किञ्चिद्धस्ते प्रगृह्य विनिकृष्य निपात्य भूमौ। कुम्भे पदं प्रतिनिधाय विषाणयुग्ममुत्कृष्य हस्तिपमहन्निपपात सोऽपि ॥११४॥ ..... रङ्गं

प्रविष्टमभिवीक्ष्य जगाद मल्लः कंसप्रियार्थमभिभाष्य जगन्निवासं। चाणूर इत्याभिहितो जगतामवध्यः शम्भुप्रसादत इदं शृणु माधवेति ॥११७॥ ... उत्क्षिप्य तं गगनगं गिरिसन्निकाशमुद्भ्राम्य चाथ शतशः कुलिशाक्षताङ्गम्। आविध्य दुर्धरबलो भुवि निष्पिपेष चूर्णीकृतः स निपपात यथा गिरीन्द्रः ॥१२०॥ ... तद्वद्बलस्य दृढमुष्टिनिपिष्टमूर्धा भ्रष्टस्तदैव निपपात स मुष्टिकोऽपि ॥१२१॥ ... निश्शेषतो विनिहते स्वबले स कंसश्चर्मासिपाणिरमियातुमियेष कृष्णम् ॥१२७॥ ... उत्कृष्य तं सुरपतिः परमोच्चमञ्चादन्यैरजेयमतिवीर्य-बलोपपन्नम्। अब्जोद्भवेशवरगुप्तमनन्तशक्तिः भूमौ निपात्य स ददौ पदयोः प्रहारम् ॥१३०॥ ... निहत्य कंसमोजसा विधातृशम्भुपूर्वकैः। स्तुतः प्रसून-वर्षिभिर्मुमोद केशवोऽधिकम् ॥१३६॥ (अ.१४) कृष्णो विमोच्य पितरावभिवन्द्य सर्ववन्द्योऽपि रामसहितः... ॥१॥ [पादान्त्ययमक]

25) (पदच्छेदः) प्रादात्। सांदीपनये। मृतपुत्रं। ज्ञानदीपसांदीपनये। गुर्वर्थे। अज्ञानतमःप्रभेदिता। नित्यसंभृताऽऽज्ञानतमः॥

This verse refers to Lord Kṛṣṇa's bringing back the dead son of His preceptor Sāndīpani and presenting as गुरुदक्षिणा or preceptor's fee. स कृष्णः गुर्वर्थे तादर्थ्ये सप्तमी गुरुदक्षिणार्थम्। ... सान्दीपनये सान्दीपनिनाम्ने गुरवे। मृतपुत्रं। प्रादात्।(या) ज्ञानदीपसान्दीपनये qualifies सान्दीपनये (i) सन्दीपयन्तीति संदीपाः, सन्दीपा एव सांदीपाः ज्ञानदीपस्य सान्दीपाः सम्यक्प्रकाशका देवाः तान्नयति प्रापयति तज्ज्ञानोपदेशेनेति ज्ञानदीप-सांदीपनिः तस्मै।(टि) He leads his pupils to gods by imparting knowledge about them. (ii) ज्ञानं दीप इवेति ज्ञानदीपः अर्थप्रकाशकरूपत्वात्। तं सन्दीपयन्ति उद्धारयन्तीति ज्ञानदीप-सन्दीपाः वेदाद्याः सदागमाः। तान्नयति स्वस्मिन्नर्पयतीति ज्ञानदीप-सन्दीपनिः तस्मै। ... एतेन गुरुदक्षिणार्थमित्युक्तं भवति। ज्ञानदीपस्य संदीपनं संदीपस्तस्य नयो न्यायस्तन्निमित्तमिति वा। गुरुदक्षिणाया न्यायप्राप्तत्वादिति भावः।(ना). He imparts knowledge of authoritative scriptures like Vedas and deserves गुरुदक्षिणा. (iii) ज्ञानमेव दीपः ज्ञानदीपः तस्य सम्यक् समन्तात् ये दीपकाः ते ज्ञानदीपसान्दीपाः पण्डिताः तानपि यो नयति शिक्षयतीति सः ज्ञानदीपसान्दीपनिः तस्मै ॥ (या). He teaches even the learned

who shine with the light of their knowledge. A question may be asked : "Did Kṛṣṇa go to preceptor Sāndīpani because He was ignorant and required to get knowledge from others ?" The reply is : "No. Because He is **अज्ञानतमःप्रभेदिता** and **नित्यसंभृताज्ञानतमः**"। (i) ननु गुरुकुलवासेन भगवता विद्या प्राप्ता चेत् तस्याज्ञानं प्रसक्तम्। अतोऽज्ञानतम इत्यादि विशेषणद्वयेन तं विशिनष्टि। **अज्ञानेति**। **अज्ञानतमःप्रभेदिता** सर्वसज्जनाज्ञानतमच्छेत्ता। **नित्यसंभृताज्ञानतमः** नित्यं सम्यक् भृता धृता आज्ञा यया सा नित्यसंभृताज्ञा सा चासौ नता नम्रा ब्रह्मादिनता वा एवं भूता विद्याभिमानिनी मा रमा यस्य स तथोक्तः। स्वयं सकलाज्ञानच्छेत्ता सकलविद्यादेवता रमा यस्य नमनपूर्वकं आज्ञाधारिणी स कथं अज्ञानेन गुरुकुलवासं कुर्यात्। किन्तु लोकशिक्षार्थमेव कृतवानिति भावः।(या). Lord Kṛṣṇa is **firstly** the **Destroyer** of ignorance of all. Secondly He is the Lord of even Goddess Lakṣmī who is the presiding deity of knowledge, who is always obedient and bowing down to Him and who is bowed down by gods Brahmā and others. How can such Lord possess any ignorance ?. **The fact is, Lord Kṛṣṇa went to Gurukula only for लोकशिक्षा or to teach** people **how to behave** when born as human beings. Note : नित्यं संभृताज्ञानां = आज्ञावशवर्तिनां भक्तानां अनतमः = प्रापितसर्वसम्पत्।(ब). The Lord grants all sorts of wealth to those who are always obedient to Him. या. has noticed a variant reading : (पूर्वार्धे प्रदात्सांदीपनये गुर्वर्थं मृतपुत्रं इति, उत्तरार्धे ततमाज्ञानतमः प्रभेदिता इति वा पाठः।) (ततमाज्ञानतमः प्रभेदिता ततत्वात्तं अतिशयेन तं ततमं तं तत् अज्ञानं च तदेव तमः तस्य प्रभेदिता छेत्ता।) (या)) [ततम+अज्ञानतमः। ततम = widespread]. The म.ता.नि. narrates (अ.१४): कृष्णोऽप्यवन्तिपुरवासिनमेत्य विप्रं सान्दीपनिं सह बलेन ततोऽध्यगीष्ट। वेदान् सकृन्निगदितान्निखिलाश्च विद्याः सम्पूर्णसंविदपि दैवतशिक्षणाय ॥३॥ धर्मो हि सर्वविदुषामपि दैवतानां प्राप्ते नरेषु जनने नरवत्प्रवृत्तिः। ज्ञातादिगूहनमुताध्ययनादिरत्र तज्ज्ञापनार्थमवसद्भगवान् गुरौ च ॥४॥ गुर्वर्थमेष मृतपुत्रमदात् पुनश्च ॥५॥ [**पादान्त्ययमक**]

26) (पदच्छेदः) जित्वा। मागधराजं। तोषितं। अकरोत्। सदा। आत्मयोगधराजं। अनुकुर्वन्। निजसदनं। चक्रे। रम्यां। पुरं। सुबोधनिजसदनम्॥

This refers to Lord Kṛṣṇa's conquering Jarāsandha, the king of Magadha-country and of building the city of Dvārakā. Here it is stated that by conquering Jarāsandha, Kṛṣṇa pleased Brahmā - तोषितमकरोत् सदात्मयोगधराजम् (i) सदात्मयोगधराजं सदा सर्वकालं आत्मनो विष्णोः योगं ध्यानादिरूपं धारयति स चासौ अजो ब्रह्मा च सदात्मयोगधराजः तं सदा विष्णूपासकं स्वसुतं ब्रह्माणं तोषितमकरोत्।(टि). (ii) ब्रह्मा हि जरासन्धायाजेयत्वं वरं दत्वा कृष्णो यदि मद्वचनगौरवेण जरासन्धं न जयेत्तर्हि महानन्थो भविष्यतीति भीतो बभूव। अतः कृष्णः तं जरासन्धं जित्वा तदीयभयनिवारणं कृतवानित्याशयः।(या). It is stated that Jarāsandha had secured a boon of invincibility from Brahmā. But Brahmā knowing the misuse of his boon by the tyrant Jarāsandha, wished him to be conquered by Kṛṣṇa. Thus Kṛṣṇa pleased Brahmā by conquering Jarāsandha. Brahmā (अ) is described as, सदा = always आत्मयोगधर = engaged in meditating on Him (i.e. the Lord), which is called वैष्णवयोग by टी. Further, Lord Kṛṣṇa built the city of Dvārakā. 1. अनुकुर्वन् निजसदनं and 2. सुबोधनिजसदनं. 1. निजसदनं वैकुण्ठादिस्थानं तत् अनुकुर्वन् तत्साम्यमापादयन्।(टि). Dvārakā was similar to Vaikuṇṭha. (ii) निजसदनं श्वेतद्वीपाभिधं अनुकुर्वन् अनुकरणशीलं समुद्रमध्यगतत्वात्तत्सदृशधर्मोपेतमिति यावत्। अत एव रम्यं मनोहरं।(या). Dvārakā had become lovely as it was surrounded by sea like Śvetadvīpa, Viṣṇu's abode surrounded by ocean. (2) सुबोधनिजसदनं (i) शोभनो बोधो येषां ते सुबोधाः ते च ते निजाः नितरां जायन्ते स्वरूपतः प्रादुर्भवन्ति विमुक्ता इत्यर्थः। तेषां सत् विद्यमानं अनं चेष्टनं क्रीडा यत्र तत्।(टि) (ii) सुबोधेन समीचीनेन भगवत्साक्षात्कारेण निजाः स्वस्वरूपाविर्भावं प्राप्ताः मुक्ता इति यावत् तेषां सदनं आवासस्थानम्।(या). The Lord's abode is a

play-house for the souls who become liberated through right knowledge and regain their own original form. या. explains it as referring to Yādavas, the kin of Kṛṣṇa : सुबोधनिजसदनमित्यावर्तते। समीचीनबोधवद्यादवादिसदनं पुरं चक्रे।(या). Following हृषीकेशतीर्थीयपाठ ब. and वि. read as सुबोधनुजसदनं and interpret differently : (a) 'या पूः सुबोध्नूनां = सज्जनहिंसकानां ये वंशजास्तेषां यमसदनमिव। 'नु = to roar, cry', 'सदनं = The abode of Yama' (V.S.Apte) (ब). The city of Dvārakā was like the abode of Death for tormentors of the good. (b) सुबोधेनैव नु = निश्चयेन जायन्तेति सुबोधनुजाः। तेषां सत् = निर्दोषं अनं = अननं चेष्टा यस्मिन् तत्-तत्। अनः चेष्टायामिति धातोः अट् = अनं (वि). Lord's abode is the abode for the faultless play of released souls who become released definitely by right knowledge. [B. comments : **सुबोधनुजसदनम्** – "–निजसदनम्" इति प्र.पाठः। प्राचीनपाठे तु इति निश्चये। सुबोधेन सहैव निश्चयेन जायन्ते। सुबोधस्वरूपा इति यावत्। स्वरूपभूतस्यैव ज्ञानस्य नैयत्यसंभवात्। ते सुबोधनुजाः सन्तः। तेषां सत् अनम् सच्चेष्टा यत्र तादृशं निजस्य सदनम्। "तमजं ये सुबोधेन प्रादुर्भूताः स्वरूपतः। ते सुबोधनु(नि)जास्तेषां सच्चेष्टा यत्र तत्सदः" इति नरहरितीर्थाः। But Guttal edition reads टी as 'सुबोधनिजास्तेषां' only] The म.ता.नि. narrates : कृष्णो जित्वा मागधं रौहिणेययुक्तो ययौ॥ (अ-१६, श्लो-२८) निराशकोऽद्य यादवानपि स्म पीडयिष्यति। अतः समुद्रमध्यगा पुरी विधानमद्य मे ॥११०॥ प्ररोचते निधानमप्यमुत्र सर्वसात्वताम्। उदीर्य चैवमीश्वरोऽस्मरत्सुरेशवर्धकिम् ॥१११॥ स भौवनः समागतः कुशस्थलीं विनिर्ममे। निरम्बुके तु सागरे जनार्दनाज्ञया कृते ॥११२॥ (अ.१७) [पादान्त्ययमक]

27) **(पदच्छेदः) प्रसभं। स। गजबलस्य। क्षत्रस्य। उच्चैः। समगध-राजबलस्य। मानं। शिशुपालवरं। हत्वा। भैष्मीं। अवाप। अशिशुपालवरम्॥**

This verse refers to Lord Kṛṣṇa's carrying away Rukmiṇī as His wife after defeating Rukmi, Śiśupāla

and other Kṣatriyas who had become extremely arrogant and were inimical to Him. The main sentence is **सः** भगवान् **प्रसभं** बलात् **भैष्मीं** भीष्मककन्यां रुक्मिणीं अवाप। किं कृत्वा **क्षत्रस्य मानं हत्वा।** Lord Kṛṣṇa destroyed the arrogance of those warrior-kings and forcibly carried away Rukmiṇī, the daughter of Bhīṣmaka. The two 1) **गजबलस्य** and **समगधराजबलस्य** qualify **क्षत्रस्य.** (i) कथं भूतस्य क्षत्रस्य **गजबलस्य** गजसदृशसामर्थ्यस्य। अथवा गजप्रभृतिबलस्य। गजादिचतुरङ्गिणः।(टि). (ii) गजशब्दोऽश्वाद्युपलक्षकः। तथा च गजादिरूपचतुरङ्गं बलं सैन्यं यस्य तद्गजबलं तस्येत्यर्थः।(या). The kings – Rukmi, Śiśupāla and others were mighty like elephants and were strengthened by their armies consisting of chariots (रथ), elephants (गज), horses (अश्व) and foot-soldiers (पदाति). [It is also read as **सगजबलस्य** (i) गजाश्च बलानि च तैः सहितं तस्य।(त). (ii) गजसैन्यैः सहितस्य। प्रत्येकं गजायुतशरीरबलाढ्यस्य वा।(ना)] 2) **समगधराजबलस्य** - मगध-राजस्य बलेन सामर्थ्येन सैन्येन वा सहितस्य।(टि). Those kings had the support of the army of Jarāsandha, the king of Magadha. The word **शिशुपालवरं** occurring twice qualifies **मानम्**, which was **उच्चैः** or quite high or excessive. (1) **शिशुपालवरम्** कथंभूतं मानं। **शिशुपालवरं शिशुपालो** वरो यस्मिन्विषयतयाऽस्तीति स तथोक्तः तं। **शिशुपालः** रुक्मिण्या वरोऽस्माभिः कृतोऽस्तीत्येवं शिशुपालवरत्वविषयकमित्यर्थः।(या). Rukmi and his associates had become haughty as they had fixed Śiśupāla as the bride-groom for Rukmiṇī. (2) **शिशुपालवरम्** नन्वेवंभूतो अहङ्कारः कुतो जात इत्यतस्तं विशिनष्टि। **शिशुपालवरं** कृष्णस्य (शिशवश्च ते पालाः लोकपालाश्च) शिशुभूताः पालाः पालकाः ये ब्रह्माद्याः तेषां वरो यस्मिन् अहङ्कारे कारणतयास्ति स तथोक्तस्तम्। ब्रह्मादिवरजन्यमिति यावत्।(या) [शिशु = children; पाल = protector; वर = boon] They had obtained boons from gods like Brahmā and others who are the children of Lord Viṣṇu (Kṛṣṇa) and who are the

protectors of several लोकs or regions. टी. and टि. read **अवापाशिशुपालवरम्** and split it as **अवाप+अशिशुपालवरम्** without any difference in meaning as अ is understood as विष्णु. (i) शिशवो वासुदेवस्य लोकपाला अजादयः। वरस्तेषां कारणं च यस्मिन्स ह तथोच्यते॥ (टी). (ii) अशिशवः विष्णुबालकास्ते च ते पाला लोकपाला ब्रह्मादयस्तेषां वरो यस्मिन्कारणभूतः स तथा तम्। (टि). The म.ता.नि. narrates (अ.१७) : रथे न्यवेशयद्धरिः प्रपश्यतां च भूभृताम्॥ जरासुतादयो रुषा तमभ्ययुः शरोत्तमैः। विधाय तान्निरायुधान् जगाम केशवः शनैः॥ (१४५-६) **[पादान्त्ययमक]**

28) (पदच्छेदः) हंसः। डिबिकः। चपलौ। अमुना। संसूदितौ। यवनकः। च। **पला। कीर्तिः। विमला। विरला। प्रतता। विश्वाधिपावनी। ईलाविरला॥**

This verse refers to Lord Kṛṣṇa's destroying brothers Haṁsa and Ḍibika (Ḍimbhaka) who were Jarāsandha's ministers and also to the destruction of Kālayavana. Thereby Kṛṣṇa's pure and spotless fame spread far and wide sanctifying all those who came under its influence. The epithet चपलौ suggests that both Haṁsa and Ḍibika were not steady-minded. Because in the battle against Kṛṣṇa, when Haṁsa fell down unconscious Ḍibika assumed him to be dead and plunged in Yamunā and died. When Haṁsa regained consciousness, he too followed Ḍibika in Yamunā. Thus both met death by themselves. It must be noted that Lord Kṛṣṇa had brought about the death of Kālayavana through Mucukunda even before His marriage with Rukmiṇī. So, none should believe that the destruction of Kālayavana has been stated here in chronological order : अत्र यवनहननोक्तिर्हननप्रकरणादेव। न तु कथाक्रमानुसारेण। रुक्मिण्याहरणात् प्रागेव तस्य हतत्वात्। (भ) Lord Kṛṣṇa's कीर्ति (fame) has been qualified by 1. पला,

2. विमला 3. विरता, 4. प्रतता 5. विश्वाधिपावनी and 6. ईलाविरता. 1. पला = परा = Excellent. 2. **विमला** = निर्मला = spotless, pure. 3. **विरता** (i) विशिष्टा हि रताः सुराः यस्यां सा।(टी). (ii) वि विशिष्टाः रमाब्रह्मादयः सुराः रताः यस्यां सा तथा।(या). Higher gods like Lakṣmī, Brahmā and others were attached to that fame. 4. **प्रतता** = प्रकर्षेण व्याप्ता। कृतेति शेषः।(या) प्रविस्तारिता।(टी). प्रतापि(यि)ता विस्तारिता।(टि). The fame spread far and wide. 5. **विश्वाधिपावनी** (i) विश्वस्मात् सर्वस्मात् शोधकात् अधिकं पावयतीति पावनी सर्वमिति शेषः।(टि) (ii) विश्वेभ्यो भागीरथ्यादि-तीर्थेभ्योप्याधिक्येन पावयतीति तथोक्ता। विश्वं आधिक्येन पावयतीति वा।(या). The fame sanctifies more than well known sanctifiers like river Ganges. Or, it sanctifies in the most effective manner. 6. **ईलाविरता** - (i) ईलः ईशो(रो) वायुः तेनाविः प्राकट्यं **अता** प्राप्ता अत सातत्यगमने इति धातोः। 'अनुनासिकस्य क्विझलोः क्ङिति' [६.४.१५] इति मलोपः।(टि). (ii) ईलः रलयोरभेदः ईरः मुख्यवायुः तेन आविः आविर्भूता प्रकटिता अता व्याप्ता चेत्यर्थः ईलाविश्च सा अता चेति विग्रहः।(या). [ईल = ईर = god Vāyu; आवि = आविर्भूता = manifested; अता = प्राप्ता or व्याप्ता = became or was made] The fame was manifested or was made widespread by god Vāyu. Note : **इलाविरता** = भूव्योमव्यापिनी रोदसी व्याप्य स्थितेति यावत्। इला = भूमिः 'विश्च पक्षी निगदितो गगनं परिकीर्तितम्' (शब्दभेदप्रकाशः) तयो रता सक्ता।(ब) [इला = earth; वि = sky; रता = touched]. The fame had spead from earth to sky. The म.ता.नि. narrates (अ.१७) : ससंज्ञकोऽथ यावनो धरातलात्समुत्थितः। निपात्य यान्तमीश्वरं स पृष्ठतोऽन्वयात् क्रुधा ॥१३०॥ हरिर्गुहां नृपस्य तु प्रविश्य संव्यवस्थितः। स यावनः पदाहनन्नृपं स तं ददर्श ह ॥१३१॥ स तस्य दृष्टिमात्रतो बभूव भस्मसात्क्षणात्। स एव विष्णुरव्ययो ददाह तं हि वह्निवत् ॥१३२॥ ...ततः स हंससंयुतो जगाम योद्धुमच्युतम्। क्षणेन तौ निरायुधौ चकार केशवः शरैः ॥२७२॥ ...वरास्त्रपाणिरीश्वरः पदाहनच्छिरस्यमुम्। स मूर्छितो मुखेऽपतन्महाभुजंगमस्य हि ॥२९२॥ ... तदास्य चानुजोऽग्रजं विमार्गयन् जलेऽपतत् ॥२९४॥ ... ततो हरिर्बलैर्युतो बलान्वितो मुनीश्वरैः। समं कुशस्थलीं ययौ स्तुतः कशंकरादिभिः ॥२९७॥ **[पादान्त्ययमक]**

29) (पदच्छेदः) सत्याजाम्बवतीर्याः। (तीः। याः।) भार्याः। विन्दाद्याः। भानुसांबवतीः। याः। प्रद्युम्नं। मोदरतः। प्राप। ज्येष्ठं। हरिः। सुतं। मोदरतः॥

This verse refers to Lord Kṛṣṇa's marriage with Satyabhāmā, Jāmbavatī, Mitravindā and others and His becoming the Father of Pradyumna through Rukmiṇī. The first word सत्याजाम्बवतीर्याः is split up and explained differently : (a) सत्याजाम्बवतीः+याः – हरिः कृष्णः सत्या जाम्बवती द्वे यासां ताः सत्याजाम्बवत्यः ताः सत्याजाम्बवतीः। स्वरूपे प्रत्ययो नेष्ट इति न्यायात्। एवंभूता याः याश्च विन्दाद्याः नामैकदेशग्रहणमिति न्यायात् मित्रविन्दाद्याः ताश्च भार्याः प्राप।(टि). Lord Kṛṣṇa obtained Satyabhāmā, Jāmbavatī, Mitravindā and others as His wives. b) सत्याजाम्बवती+ ईर्याः (i) सत्या सत्यभामा जाम्बवतीति द्वे ईर्ये (स्तुत्ये-ना) श्रेष्ठे यासां ताः।(त). (ii) सत्याजाम्बवतीर्याः सत्या जाम्बवत्यौ ईर्ये आर्ये यासां तास्तथाभूताः। तृतीयोऽतिशय इति आकारस्थाने ईकारः।(या) (iii) सत्या सत्यभामा जाम्बवती च ईर्ये आर्ये यासां तास्तथोक्ता इत्यर्थः। आर्यतायामतिशयज्ञापनायेर्येत्युक्तम्। तृतीयोऽतिशये इति [महाव्याकरण] सूत्रात्।(भ) Among the sixteen thousand wives of Lord Kṛṣṇa, Satyabhāmā and Jāmbavatī were prominent and praiseworthy. (iv) सत्याजाम्बवत्यौ ईर्ये = आदितः कथनीये यासां मित्रविन्दादीनाम्।(ब). Those wives are to be mentioned beginning from Satyabhāmā and Jāmbavatī. That is, the two are first and foremost. [Note : अत्र सत्याजाम्बवती-परिणयनोक्तिः परिणयनप्रकरणादेव। हंसडिभिकवधात्प्रागेव तस्य वृत्तत्वात्।(भ)] भानुसाम्बवतीः mentions the names of sons of Satyabhāmā and Jāmbavatī. भानुः सत्यभामासूनुः साम्बो जाम्बवतीसुतः एतदादिकपुत्रवतीरित्यर्थः।(या). Bhānu is the name of Satyabhāmā's son and Sāmba is that of Jāmbavatī's son. The two मोदरतs are differently split up and explained : I. मा+उदरतः - मा रमारूपा रुक्मिणी तस्याः उदरतः प्रद्युम्नं प्रद्युम्नाख्यं ज्येष्ठं सुतं (च) प्राप।(या). From the womb of

Rukmiṇī who is Goddess Lakṣmī Herself, He got His eldest son named Pradyumna. II. **मोद+रतः** - भैष्याख्य-विषयोत्थे सुखे रतः।(टि). He was deriving pleasure in the company of Rukmiṇī. But this raises a doubt : 'Does the Lord require any external object to derive pleasure ?' Hence the same **मोद+रतः** is explained to state that He does not so require : (i) नन्वेवं विषयसापेक्षं हरेः सुखमायातमत आह। **मोदरतः** रुक्मिण्यादिविषयसंबद्धे संमोदरूपे स्वस्मिन्नेव रत इत्यर्थः।(या). (ii) मोदो भोगनिमित्तकः। मुत्रामविषयोत्थं यदित्यादिवचनात्। तत्र रत इत्यर्थः। नन्वेवं तर्हि विषयभोगं विना सुखाभिव्यक्तिः किं तस्य नेत्यतोप्युक्तम्। **मोदरत** इति। विषयनिरपेक्ष-नित्याभिव्यक्तसुखे रतोऽपि लीलयैव रुक्मिण्यादिविषयान्बुभुज इति भावः। यथोक्तं पूर्वटीकायाम् 'मोदे रतो हि भैष्म्याख्यविषयोत्थे सुखे सुखी'ति।(भ) The Lord is Blissful and Self-content. He does not require any object to derive pleasure. Enjoying Rukmiṇī's company is just a sport for instructing the humanity the way of living as a husband. [Note : यद्यपीयमपि कथा सत्याजाम्बवत्यादिपरिग्रहतः प्रागेव वृत्ता। तथापि प्रद्युम्नस्य कैलासयात्रानन्तरं पुनः प्रद्युम्नस्य सद्योजननकथाया अपि संग्रहार्थमत्रोक्ता।(भ)] The म.ता.नि. narrates (आ.१७) : तया रमन् जनार्दनो वियोगशून्यया सदा। अधत्त पुत्रमुत्तमं मनोभवं पुरातनम् ॥१८१॥ चतुस्तनोर्हरेः प्रभोस्तृतीयरूपसंयुतः। ततस्तदाह्वयोऽभवत् स रुक्मिणीसुतो बली ॥१८२॥ ... ततो निधाय तान् बिलं स जाम्बवत्परिग्रहम्। विवेश तत्र संयुगं बभूव तेन चेशितुः ॥२०७॥... ततः क्षमापनयन् सुतां प्रदाय रोहिणीं शुभाम्। मणिं च तं नुनाव स प्रपन्न आशु पादयोः ॥२११॥ स दुर्यशो रमापतावनूच्य मिथ्यया तपन्। स्वपापहानिकांक्षया ददौ सुतां जनार्दने ॥२१६॥ ... ततो हि सा च रुक्मिणी प्रिये प्रियासु तेऽधिकम्। जनार्दनस्य ते हरेः सदाऽवियोगिनी यतः ॥२१९॥ (अ.२०) पितृष्वसुर्मित्रविन्दा सुता च कृष्णे मालामासजद्राजमध्ये ॥४८॥... भैष्मी सत्या चैकतनुर्द्विधैव जाता भूमौ प्रकृतिर्मूलभूता। तयैवान्याः सर्वदानुप्रविष्टाः तासां मध्ये जाम्बवती प्रधाना ॥६०॥ **[पादान्त्ययमक]**

30) (पदच्छेदः) यत्परिवारतया। ईशाः। जाताः। देवाः। नृपात्मना। (अ)रतयेशाः। यद्भरितं। विषसर्पप्रभृतिध्वान्तं। न। मारुतिं। विषसर्प ॥

भ states : इतःपरं भारतीं पाण्डवकथामुपक्रमते। This verse begins the story of Pāṇḍavas. Here the perfect grace showered by the Lord on Bhīma, the incarnation of god Vāyu is referred to. Vāyu is the over-lord of all deities who were born to carry out the will of Lord Kṛṣṇa viz., protection of the good and destruction of the evil. Different explanations are given :- 1. *a)* रतयेशाः - रतश्चासौ एतीति यः वायुश्च रतयः स ईशो येषां ते तथोक्ताः। (टि) *Rataya* is god Vāyu and he is their lord. *b)* अः परमात्मा तस्मिन् रतः अरतः याति सदा गच्छतीति यः मरुत् अरतश्चासौ यश्च अरतयः स ईशो येषां ते तथोक्ताः।(या.) Vāyu is always devoted to अ or Lord Viṣṇu and is their lord. Here one must note that नृपात्मनारतयेशाः of the text is split up as नृपात्मना+रतयेशाः by टि, and as नृपात्मना+अरतयेशाः by या. Of course there is no difference in the meaning, as shown above अ denotes Lord Viṣṇu and य denotes Vāyu (1. "एतीति यः।" 2. 'यातीति यः।' 3. 'यो वायुरिति शब्दितः' इति एकाक्षरकोशे). It all means that Vāyu is always devoted to Lord Viṣṇu and that he is the over-lord of all the deities who are under his control. [ए रतो यो यः = वायुः स एवेशो देवानाम्। ब.] या. explains यत्परिवारतया - परि परितः वारयन्तीति व्युत्पत्त्या शत्रु-निवारकतया श्रीकृष्णकार्याङ्गसेवानिमित्तेनेति यावत्।(या.) The presiding deities were born as warriors to serve the cause of Lord Kṛṣṇa's birth i.e. to destroy (वारता) all around (परि) Lord's enemies or wicked people. यद्भरितं विषसर्पप्रभृति ध्वान्तं न मारुतिं विषसर्प refers to the futile attempts made by Duryodhana to kill Bhīma through poisonous serpents and the like; because Bhīma was full of Kṛṣṇa : यद्भरितं येन कृष्णेन भरितं पूर्णं। मारुतिं भीमं विषसर्पप्रभृति विषसर्पजलवह्निपूर्वकं।

**ध्वान्तं** तमः मारकं वस्त्विति यावत्। न **विषसर्प** न विससर्प न प्राप। यमकार्थं सस्य षत्वम्।(या.) The म.ता.नि. narrates (अ.१४) : एवं विचार्य विषमुल्बणमन्तकाभं क्षीरोदधेर्मथनजं तपसा गिरीशात्। शुक्रेण लब्धममुतः सुबलात्मजेन प्राप्तं प्रतोष्य मरुतस्तनयाय चादुः ॥ सम्मन्त्र्य राजतनयैर्धृतराष्ट्रजैस्तद्दत्तं स्वसूदमुखतोऽखिलभक्ष्यभोज्ये। ज्ञात्वा युयुत्सुगदितं बलवान् स भीमो विष्णोरनुग्रहबलाज्जरयाञ्चकार ॥ (७०-७१) **[पादान्त्ययमक]**

31) (पदच्छेदः) येन। **हिडिम्बबकाद्याः**। **रक्षोधीशाः**। **निपातिताः**। **बबकाद्याः**। **भीमे**। **प्रीतिं**। **अमेयां**। **व्यञ्जयता**। **तेन**। **शेषपाति**। **ममे**। **याम्** ॥

One should not mistake that Bhīma on his own killed demons. It is here made clear that it was Lord Kṛṣṇa who caused the destruction of the demons through the hands of Bhīma, only to exhibit His immeasurable love and affection towards Bhīma. Bhīma is dearer to Kṛṣṇa than even Śeṣa, Rudra and Garuḍa. *Read* : ननु कृष्णेन राक्षसहनने भीमः कस्मान्निमित्तीकृत इत्याशङ्कापरिहारायोक्तम् **भीम** इति। **अमेयां** भीमादन्यत्र निर्मातुमयोग्याम्। **प्रीतिं**। **व्यञ्जयता** अभिव्यक्तीकुर्वता। भीमस्य निमित्ततयाऽनुसरणे हि भीमेनैव रक्षोधीशा निपातिता इति लोके यशोदानेन तस्मिन् प्रीतिः प्रकटिता भवतीति ज्ञातव्यम्।(या.) Different explanations : (A) **बबकाद्याः** - (1) **बं** उदकं, तन्मयत्वाद् बं मांसं 'अम्मयं तु यतो मांसमि' ति। बकन्ति बक भक्षण इति धातोः मत्स्याद्याहारिणो मनुष्या बबकास्ते आद्याः खाद्याः भक्ष्या येषां ते तथोक्ताः। नराशना इत्यर्थः।(टि) [ब = flesh; बक् = to eat; बबकाः = flesh-eaters (human beings); आद्य = food; बबकाद्याः = demons who eat human beings]. (2) *a)* ब कामने बक भक्षणे इति धातोः काम्यत्वाद् भक्ष्यत्वाच्च **बबकं** मांसम् ......(भ) *b)* बबकं मासं ..... बबकं मांसमज्ञयोरित्यभिधानात्।(या.) [बबक = flesh; बबकाद्याः - flesh-eaters; demons] (B) **शेषपाति** - (a) शेषोऽनन्तः पो रुद्रः गरुडो वा ताभ्यामतिशयो यथास्यात्तथा।(या.) (b) **शेषश्च** पातीति पश्च रुद्रश्च नामैकदेशग्रहणेन नामग्रहणमिति न्यायेन शेषपौ ताभ्यां **अति** अतिशयो यथा भवति तथा।(टि.) Bhīma was

more dear to Kṛṣṇa more than Śeṣa and Rudra. Here पः can denote both Rudra (पशून् पातीति) and Garuḍa (पक्षिणः पातीति) from पातीति पः। The म.ता.नि. narrates (अ.१९) : तद्भीमबाहुबलताडितमीशवाक्यात् सर्वैरजेयमपि भूमितले पपात। वक्त्रस्रवद्बहुलशोणितमाप मृत्युं प्रायात्तमोऽन्धमपि नित्यमथ क्रमेण ॥५६॥ ... आक्रम्य पादमपि पादतलेन तस्य दोर्भ्यां प्रगृह्य च परं विददार भीमः। मृत्वा स चोरुतम एव जगाम पापो विष्णुद्विडेव हि शनैरनिवृत्ति चोग्रम् ॥९१॥ [पादान्त्ययमक]

32) (पदच्छेदः) **अथ। कृष्णावरणे। तान्। प्राप्तान्। राज्ञः। अशृणोत्। सदावरणेतान्। द्रष्टुं। यातः। सबलः। तां। च। अनैषीत्। पृथासुतान्। ततः। सबलः॥**

Here it is clarified that it was Lord Kṛṣṇa who helped both Draupadī and Pāṇḍavas to join in marriage. This shows His extreme fondness for them. *Read :* अनेन श्रीकृष्णस्य पाण्डवेषु सार्वकालिकी निरुपाधिकप्रीतिः सूचिता भवति।(या) Different explanations – (1) **सदावरणेतान्** *(i)* सत्सु भगवदादिषु विषये (सदा) आवरणत्वेन अज्ञानेन इतान् युक्तान्। अत एव भगवत्सर्वोत्तमत्वब्रह्मादितत्परिवारत्वज्ञानवर्जितान्।(टि). The kings assembled for द्रौपदीस्वयंवर were ignorant of the greatness of the Lord and of the nature of His attendants. *(ii)* सत्सुविषये (पाण्डवविषये) आवरणमज्ञानं तेन इतान् युक्तान्। सन्तो भीमाद्या बलाधिकास्तेभ्योऽस्माकं मानभङ्गो भविष्यतीति ज्ञानवर्जितानिति यावत्।(या) They were ignorant of the might of Bhīma and other Pāṇḍavas. (2) **सबलः** :- *a)* बलरामेण सहितः।(या) Together with Balarāma. *b)* सवरः आशीर्वादरूपं वरं दत्वेति यावत्। (रलयोरभेदः। वबयोरभेदः)(या) Having granted a boon. The म.ता.नि. narrates (अ.१९) : श्रुत्वा तदीयवचनं भगवान् पुरीं स्वामायात एव तु निशम्य महोत्सवं तम्। पाञ्चालराजपुरुषोदितमाशु वृष्णिवर्यैरगान्मुसलिना सह तां पुरीं च ॥१०४॥... तत्रार्जुनः पवनजात् प्रियतोऽप्यनुज्ञामादाय केशवमजं मनसा प्रणम्य। कृत्वा गुणान्वितमदो धनुरश्रमेण यन्त्रान्तरेण स शरैरधुनोच्च लक्ष्यम् ॥१३१॥ ...

कृष्णस्तदाह नृपतिं प्रतिदेहि कन्यां सर्वेभ्य एव वृषवायुपुरन्दरा हि। नासत्यदस्रसहिता इम एव इन्द्राः पूर्वे च सम्प्रतितनश्च हरेर्हि पश्चात् ॥१५४॥... तत्काल एव वसुदेवसुतश्च कृष्णो व्यासश्च तानुपसमेत्य दुरन्तशक्ती। आदाय कुन्तिसहितान् विदुरेण युक्तौ नागाह्वयं पुरमिता सह भार्ययैव ॥१७९॥ [पादान्त्ययमक]

33) (पदच्छेदः) तान्। इन्द्रस्थलवासान्। चक्रे। कृष्णः। पु(प)रः। निजस्थलवासान्। स्वबलोद्रेचितमानैः। जुगोप। धर्मं च। तैः। पराचि(ञ्चि)तमानैः।

Here it is clarified that Pāṇḍavas departed to Indraprastha because of Lord Kṛṣṇa's command, and not due to the suggestion made by the Kauravas. [एवं च इन्द्रस्थलवासो न कौरवाणां दाक्षिण्येन किन्तु भगवदाज्ञयैवेति भावः ॥ (ना)] Further because of His grace they were following scriptural injunctions fully. For, it is said that scriptures are Lord's commands ('श्रुतिस्मृती ममैवाज्ञे'). This is conveyed by the term **निजस्थलवासान्**. This is split up severally : (1) स्वभृत्येषु स्थितो यस्मादाज्ञारूपो रवो हरेः। तत्रैवास्यन्ति ते नित्यं न चलन्ति कुतोऽपि तान् ॥ (टी) निजेषु भृत्येषु ब्रह्मादिषु तिष्ठतीति निजस्थः स चासौ लवश्च आज्ञारूपो धर्मानुशास्तिरूपो रवः शब्दः 'अहरहः संध्यामुपासीत' इत्यादिः। तस्याऽऽज्ञात्वं च 'श्रुतिस्मृती ममैवाज्ञे' इत्यादिप्रमाणात्। निजस्थलवे आस्यन्ति नित्यं तिष्ठन्ति ते निजस्थलवासाः सम्पूर्णवेदविहितकर्मानुष्ठातारस्तान्। तदुक्तं न्यायविवरणे 'चरन्ति देवा विहितं समस्तमर्धमेव मुनयो दशांशतो मनुष्याः' इति।(टि) (2) a) निजत्वेन स्थितं विश्वं वाय्वादीनां महात्मनाम्। तस्यांशे लवशब्दोक्त आसीनानिति वा भवेत् ॥ (टी) b) यद्वा निजं तिष्ठन्तीति निजस्थं निजत्वेन स्थितं विश्वम्। निजस्थविश्वलवस्य आसा अवस्थानं येषां ते तथोक्तास्तान्। स्वांशैर्महदादितत्त्वानि तत्कार्यदेहेन्द्रियादींश्च व्याप्य स्थितानित्यर्थः। तदुक्तं 'ता एता देवताः सृष्टा' इत्यादौ ॥ (टि) Pāṇḍavas were different divinities residing in material bodies. (3) निजस्थले वैकुण्ठे वासयोग्यानिति वा।(ना) Pāṇḍavas were fit to reside in Vaikuṇṭha. (4) अथवा, निजानां स्वपूर्वेषां

स्थं स्थितं यद्राज्यं तस्य लवे लेशे एकदेशे अर्ध इति यावत् तत्र असान् इत्यर्थः। (तत्र वसत इति यावत्) स्वपितृराज्यार्धराज्यस्थितांश्चक्र इति भावः।(या) Pāṇḍavas resided at Indraprastha, a part of their own ancestral kingdom. Different explanations of **पराचितमानैः** are :- (1) पराचितः पराकृतः मानः अहंकारो वैरिणां यस्तैः तथोक्तैरिति जितशत्रुभिरित्यर्थः।(टि) Pāṇḍavas had won their enemies by destroying their arrogance. (2) परैः उत्तमैः आचितः सम्यग्विस्तारितो मानः पूजारूपो येषां ते तथा तैः भगवद्भक्तनृपवर्यपूजितैरित्यर्थः।(टि) Pāṇḍavas had won respect of noble souls like Lord's devotees and great kings. (3) उत्तमैरार्जितो मानो येषां तैर्जितशत्रुभिः।(टि) Pāṇḍavas vanquished their enemies and won the respect of noble souls. (4) परैः उत्तमैः शत्रुभिर्वा आचितं सम्यक्कृतं मानं सन्मानं येषां ते तथोक्ताः तैः।(या) Pāṇḍavas had won respect from noble souls as well as from their enemies. Here टि. reads पुरः for परः and explains पुरतः नगरात् = from the city (Hastināpura). Others read परः =सर्वोत्तमः कृष्णः. Further, ना. reads **पराञ्चितमानैः** for **पराचितमानैः** and explains – परेषां शत्रूणां अंचितः दूरीकृतः मानः अभिमानः यैस्तैः। (ना) They had removed the pride of their enemies. The म.ता.नि. narrates (अ.१९) : दृष्ट्वा विरोधमवदन्नृपतिश्च धर्मपुत्रं पुरन्दरकृतस्थलमाशु याहि ॥२०७॥ तत्रार्धराज्यमनुभुङ्क्ष्व सहानुजैस्त्वम् ॥२०८॥ त्वं वीर शक्रसम एव ततस्तवैव योग्यं पुरं तदत आश्वभिषेचयामि। इत्युक्त आह स युधिष्ठिर ओमिति स्म चक्रेऽभिषेकमपि तस्य स आम्बिकेयः ॥२०९॥... पार्थाश्च ते मुमुदुरत्र वसिष्ठवृष्णिवर्योदितानखिल-तत्त्वविनिर्णयांस्तु। शृण्वन्त एव हि सदा पृथिवीं च धर्मात् भुञ्जन्त आश्रितरमापतिपादयुग्माः ॥२२३॥ [पादान्त्ययमक]

34) (पदच्छेदः) वालिवधानुनयाय। प्रणयी। सख्यं। सुसंदधे। अनुनयाय। (नु। नयाय)। वासवजेन। विशेषात्। तेन। एव। पुनः। नृजन्मजेन। विशेषात्।

This refers to Rāma's killing Vālin, the son of Indra in the *Rāmāvatāra*. Even though Vālin was *de facto* innocent and guiltless, Rāma had to kill him to fulfil the assurance given to Sugrīva. [*Read* : श्रुत्वाऽस्य दुःखमथ देववरः प्रतिज्ञां चक्रे स वालिनिधनाय .... ॥३॥ .. भक्तो ममैष यदि मामभिपश्यतीह पादौ ध्रुवं मम समेष्यति निर्विचारः। योग्यो वधो न हि जनस्य पदानतस्य राज्यार्थिना रविसुतेन वधोऽर्थितश्च ॥१९॥ - महाभारत-तात्पर्यनिर्णय, अध्याय VI.] So in order to compensate this cruelty shown to Vālin, Lord Kṛṣṇa showered his full friendship on him when he took the birth of Arjuna in the *Kṛṣṇāvatāra*. Lord Kṛṣṇa's love and affection to Arjuna was far more than shown to Dharmarāja, Nakula and Sahadeva. [**विशेषात्** = धर्मनकुलसहदेवापेक्षया विशेषेण। (या)] Moreover, this act of special friendship was [**नयाय** = लोकन्यायशिक्षणाय।(भ)] to instruct human beings the proper code of conduct. That is, the harm done to any one should be properly compensated. Different explanations : **वालिवधानुनयाय** – *(i)* वालिनः अपराधं विना यो वधः तस्य अनुनयाय तत्प्रीतये(त्प्रतीकाराय)।(टि) *(ii)* सान्त्वनाय। तज्जनितवालिक्लेशवारणाय इति यावत्।(भ) *(iii)* अपराधाभावेऽपि मया वालिवधः कृत इति यः पश्चात्तापः (चित्ततोदः) स इह वालिवधशब्देन लक्ष्यते। तस्य अनुनयः परिहारः तस्मै।(या) *(iv)* (वालिनः वधः यस्मै सः वालिवधः सुग्रीवः तस्य अनु अनन्तरं कर्णजन्मनि नयाय परित्यागायैव)। (या) Arjuna was befriended to abandon Karṇa, who was Sugrīva in the *Rāmāvatāra*. The word **नयाय** is significant. *Read :* (1) यद्यपि भगवता वधे कृते वालिनः क्लेशो नास्ति तथापि **नयाय** न्यायानुसरणाय।(टि). (2) ननु वृथा हतोऽयं मयेति खेदेन सख्यं कृतवान् किं नेत्याशयेनाह - **नयायेति**। नयो न्यायः लोकन्यायशिक्षणायेत्यर्थः(भ). (3) ननु प्रत्यवायगन्धविधुरस्य भगवतः कथं चित्ततोदः येन तत्परिहारायार्जुनसख्यकरणमुपपन्नं स्यादित्यत उक्तं नयायेति। नयाय लोके नीतिप्रदर्शनायेत्यर्थः। (या) Hence **नयाय** means 'to instruct the world regarding the proper

conduct to be followed." The second **विशेषात्** is also meaningful : (1) किमर्थं क्लेशाभावः यतो भगवानन्ते प्रलये विशेषात् विश्च शेषश्च विशेषौ शेषगरुडौ अत्ति।(टि). (2) ननु भगवतोऽपि चेतनत्वादितरचेतनवत्प्राप्तप्रत्यवायशंकाजनितचित्ततोदः संभावितः किं न स्यादित्यतः उक्तम् - **विशेषादिति। विशेषात्** विर्गरुडः शेषोऽनन्तः, उपलक्षणमेतत् तावत्तीति सः। (वि विशेषेण शेषस्य उपसर्जनभूतस्य ब्रह्मादिसमुदायस्य अत् अत्ता)। तथा च प्रलयकाले अपराधाभावेऽपि सकलप्राणिहिंसकस्य श्रीनृसिंहात्मनः श्रीकृष्णस्य प्रत्यवायजनितचित्ततोदः असंभावित एवेति भावः।(या) It means that the Lord did not possess any anguish in His mind for killing the innocent Vālin. Because it is well known that at the time of महाप्रलय, the Lord destroys all beings including the innocent souls like Garuḍa, Śeṣa and others. The म.ता.नि. narrates रामकार्यं तु यैः सम्यक् स्वयोग्यं न कृतं पुरा। तैः पूरितं तत् कृष्णाय भीभत्स्वाद्यैः समन्ततः॥(२.४५) ययाच एनं परिरक्षणाय शचीपतिः केशवमर्जुनस्य। जगाद कृष्णोऽपि धरातलस्थिते न मय्यमुं कश्चन जेष्यतीति ॥२०.१३५॥ प्रीतिर्महत्येव यतोऽर्जुने हरेः संशिक्षयामास ततः स एनम्॥ (२१.३४) **[पादान्त्ययमक]**

35) **(पदच्छेदः) मातुः। परिभवहा। अन्यैः। राज्ञा। द्युसदां। इतः। च। परिभवहान्यै। अभवत्। नरकमुरारिः। यः। अवासीदत्। समस्तनरकं। (अवात्सीत्। अत्समस्तनरकं।) उरारिः॥**

It is said that demon Naraka had offended Aditi by robbing her ear-ornaments, and Lord Kṛṣṇa on the request of gods and sages, killed Narakāsura. (नरकेण हि अदित्याः कुण्डलापहारेण परिभवः कृतः।) (या) The first **परिभवहान्यै** = परिभवहा + अन्यैः। The second **परिभवहान्यै = परिभव + हान्यै।** The Lord is praised here as **परिभावहा.** It means : (1) संसारनाशकः परत्र, इह नरकासुररूपपरिभवहा।(टि) Elsewhere, Destroyer of worldly bondage. Here, Destroyer of Narakāsura. (2) परितो भवः परिभवः संसारस्तस्य हंता श्रीकृष्णः।(या) Destroyer of worldly bondage. And परिभवहान्यै means to

avenge the offence committed by Narakāsura. The second line has variant readings :- 1) अभवन्नरकमुरारिर्यो वासीदत्समस्तनरकमुरारिः ॥ 2) अभवन्नरकमुरारिर्योऽवासीदत् समस्त-नरकमुरारिः ॥ 3) अभवन्नरकमुरारिर्योऽवात्सीदत्समस्तनरकमुरारिः ॥ Different interpretations are : (1) **समस्तनरकं** समस्तनराणां कं इन्द्रियेशं मनः **असीदत्** वा प्रापैव। भगवन्तं विना अन्यो रक्षको नास्तीति समस्तभक्तानां मनांसि तमेव गच्छन्तीति भावः।(टि) All devotees meditate only on Him as the sole protector. (2) कमिति द्वितीया सप्तम्यर्थे। मनसि **अवात्सीत्** अवसदित्यर्थः। उक्तमाहात्म्यवत्तया समस्तज्ञानिध्येयोऽभवदिति भावः। **अत्समस्तनरकम्** अत् व्याप्तं यन्माहात्म्यं तेन।(भ.या) He with His omnipotence became the object of meditation of all knowers. The term **उरारिः** is explained : (1) उरा इरा **'तृतीयोऽतिशये'** (महाव्या.)। **महेला** का इला मा लक्ष्मीर्हि इला कस्मात् या हि **लक्ष्मीः** इलां भूमिमाविशत्। अथवा महेला सत्यभामा सा इला भूरित्युच्यते महेला श्रीः रुक्मिणी। अथवा सत्यभामा। आरिः आलिः सखी यस्य स उरारिः महेलालिः।(टि) (2) इकारस्थाने उकारः तृतीयोऽतिशय इति वचनादतिशयार्थः। (द्वयोरपि रवर्णयोर्लत्वं विवक्षितं। लळयोरभेदश्च।) तथा च इळा भूमिः आळिर्भार्या यस्य स इळाळिः **वराहरूपस्य हरेः भूदेवता** धरा **भार्या** प्रसिद्धा तदभिप्रायेणेदम्। अथवा **भूसंज्ञकरमावतारभूता सत्यभामा** इळाशब्देन ग्राह्या। सा इळा आळिर्भार्या यस्येत्यर्थः। सत्यभामापतिः कृष्णः।(या) The term refers to Lord Kṛṣṇa as the Lord of Earth or of Satyabhāmā and Rukminī. (3) स एव **उरारिः**। रलयोरभेदात्। वराहरूपीति यावत्। तथा च यः पूर्वं वराहरूपेण नरकं धरायां जनयामास स एवेदानीं कृष्णरूपेण तदरिरभवदिति भावः।(भ). This refers to the fact that the Lord in His *Varāhāvatāra* was the begetter of Narakāsura through goddess Earth and states that the same Lord in the *Kṛṣṇāvatāra* became his slayer because of his tyrrany. ब. reads : यो वा सीदत्समस्तनरकमुरारिः। and explains : सीदतां नराणां कं = सुखमुद्दिश्य मुरारिः = संवेष्टितचक्रः। 'मुर संवेष्टने'. Disc-holder Lord alone is the Savior of distressed people. The म.ता.नि.

narrates (अ.२०) : तदैवागुर्मुनयस्तेन नुन्ना बदर्यास्ते सर्व एवाशु कृष्णम् ॥ ययाचिरे भौमवधाय नत्वा स्तुत्वा स्तोत्रैर्वैदिकैस्तान्त्रिकैश्च ॥८६-७॥ ... हन्तुं कृष्णो नरकं तत्र गत्वा गिरिं दुर्गं गदया निर्बिभेद ॥ वायव्यास्त्रेणोदकं शोषयित्वा चकर्त खड्गेन मुरस्य पाशान् ॥९४-५॥ ... आलिङ्ग्य कृष्णः सत्यभामां पुनश्च रथान्तरे संस्थितं भौममुग्रम्। सृजन्तमस्त्राण्यरिणा निकृत्तस्कन्धं मृत्योरर्पयामास शीघ्रम् ॥१०३॥ ... सम्पूजितः सत्यभामासहायः शक्रेण शच्या सहितेन सादरम्। ददावदित्या अपि कुण्डले शुभे समस्तदेवैर्मुनिभिश्च वन्दितः ॥११८॥ [**पादान्त्ययमक**]

36) (पदच्छेदः) **नीतः। दिवि। देववरैः। रेमे। सत्यासमन्वितः। अदेववरैः। सर्वर्तुवने। शशिना। निशि। सत्यां। वासरे। वने। अशशिना ॥**

This refers to Lord **Kṛṣṇa's** life in heavenly garden in the company of Satyabhāmā. Here one must note the different meanings derived from each of the several words : I. देववरैः – a) देवश्रेष्ठैः। इन्द्रादिभिः। (या) By great gods like Indra. b) **देऽववरैः दे** दातरि हरौ। **अववरैः। अव** अवकृष्टं वरं बलं येषां ते तथा तैः। (त) द = Lord **Hari;** अव = **inferior;** वर = strength. By gods, whose **strength** is inferior to that of **Hari.** c) **यद्वा देवो** हरिर्वरः श्रेष्ठो येषां तैः।(त) By gods among whom Hari is the Supermost. II. **अदेववरैः** - a) अश्चासौ देवश्च क्रीडादिगुणविशिष्टश्च तेन वरं बलं येषां ते तथोक्तास्तैः।(टि) **अदेव** - The Lord possessing qualities like sport etc. **वर** = strength. By the gods who derive strength from the Lord. b) *(i)* यद्वा **आख्यो देवो वरः** (वरणीयः) येषां तैरिति।(टि) *(ii)* यद्वा **अश्चासौ** देवश्च अदेवो हरिः **स** वरो **वरणीयो** येषां ते तथोक्तैः।(या) अदेव = Lord **Hari;** वरः = to be solicited. By the gods who should solicit the grace of the Lord. c) *(i)* अदेवाः असुराः। वरशब्द आवर्तनीयः। अदेवेभ्योऽपि वरमुच्चं वरं बलं येषामित्यदेववरास्तैरित्यर्थः। (भ) *(ii)* अदेवा असुराः तेभ्यो वरैरुच्चबलैः।(या) अदेव = demon; वर should be repeated - meaning 'superior' and 'strength'.

By gods who are superior to, or stronger than demons. III. **अशशिना** – *(i)* (शशिभिन्नेन त.) भानुना।(टि) the sun as he does not have like the moon, any spot (शश) on him. *(ii)* शशरूपकलङ्कशून्येन (भ) In the heaven the moon does not possess any spot on him. *Read :* ननु निशि प्रकाशाभावेन कथं रमणमित्यत उक्तम्। **शशिना** चन्द्रेण। **निशि** रात्रौ। **वासरे** दिवासमायां। सत्यां। ननु शशरूपकलंकोपेतेन शशिना कथं निशा दिवासमा जातेत्यत उक्तं **अशशिनेति**। शशोऽस्यास्तीति शशी, न शशी अशशी, तेन निष्कलंकेणेति यावत्। नन्दनवनस्यालौकिकत्वात् यथा तत्र युगपत्सर्वर्तुसंपत्तिस्तथा चन्द्रोऽप्यशशी सन् प्रकाशते। अतस्तत्र निशायामंधकारलेशाभावाद्दिवासमता युक्तेति भावः।(या) It means that there is no darkness during nights in the Nandana-garden as the spotless moon shines ever over it, as all the seasons exist there throughout the year. The म.ता.नि. narrates (अ.२०) : अथो सदानन्दचिदात्मदेहः स नन्दनोद्यानमजोऽनुरूपया। अनन्तशक्तिः सह सत्यभामया विवेश रन्तुं प्रियया-खिलेश्वरः ॥१२०॥... सर्वर्तुनित्योदितसर्ववैभवे सुरत्नचामीकरवृक्षसद्वने। सदैव पूर्णेन्दुविराजिते हरिश्चचार देव्या पवनानुसेविते ॥१२२॥ **[पादान्त्ययमक]**

37) (पदच्छेदः) **सुरतरुं। आप। आलिमतात्। प्रकाशयन्। शक्तिं। आत्मनः। पालिमतात्। सुरवरवीरेषु। दरी। प्रधानजीवेश्वरः। परेषुदरी ॥**

This refers to the well known fact that Lord Kṛṣṇa brought the divine Pārijāta-tree to please Satyabhāmā. [सुरतरुम् + आप + आलिमतात्। **आलिः** सखी सत्यभामा तस्याः मतात् तन्मतमवष्टभ्य। (टि)] The word **पालिमतात्** is explained : पालयन्तीति पाला दिक्पालास्ते विद्यन्ते यस्य स पाली तेषां राजा इत्यर्थः। तस्य महेन्द्रस्य मतं संकल्पमत्ति नाशयतीति पालिमतात्। असुरावेशेन शचीदाक्षिण्यात् कृष्णं जित्वा पारिजात-मानयिष्यामीति यः संकल्पस्तन्नाशक इत्यर्थः।(टि) पाल = Direction-deities; पाली = their Lord, Indra; मत = desire; पालिमत्+अत् = destroyer of Indra's desire. Indra desired

to conquer the Lord to get back the divine tree as he came under the demoniac influence due to the request made to him by Śacī. [Note : **पाळिमतात्** ळस्य लत्वं विवक्षितम्। पालाः लोकपालाः अस्य सन्तीति पाली इन्द्रः तस्य मतं अत्तीति पालिमतात् इन्द्राभिप्रायनाशक इति यावत्। (या)]
2) **प्रधानजीवेश्वरः** – a) प्रधानपदं जडमात्रपरं तथा च सर्वेषां जडानां जीवानां चेश्वर इत्यर्थः। इदं च स्वकीयमेव स्वेन नीतमिति प्रदर्शनाय। (या) The Lord is the lord of both insentient matter and sentient souls. Hence the Pārijāta-tree is His own property and He took possession of only what belonged to Him. *b*) प्रधानजीवानां ब्रह्मादीनामीश्वर इति वा।(भ). The Lord is the lord of all premier souls like Brahmā.
*Note* : 1) **आळिमतात्** – आळिः सखी भार्या सत्यभामा तस्याः मतात् ल्यब्लोपनिमित्ता पञ्चमी अभिप्रायमनुसृत्य।(या) 2) **परेषुदरी** – *a*) परेषां शक्रादीनां शत्रूणां इषून् बाणान् दृणाति छिनत्तीति परेषुदरी।(टि) *b*) परे प्रतिभटाः तेषामिषवो बाणाः (इषुपदोपलाक्षितनानाविधायुधानि) तेषां दरः दारणमस्यास्तीति तथोक्तः। अनेन सर्वेऽपि देवास्तत्र पराजिता इति सूचयति।(या) [पर = enemies like Indra; इषु - arrow and other weapons; दर = destroying]. The Lord conquered all the gods by destroying their manifold weapons. The म.ता.नि. narrates (अ.२०) : जगाद देवाधिपतिं पतिं सती ॥१२४॥ तरुर्जगज्जीवद मे गृहाङ्गणे संस्थापनीयोऽयमचिन्त्यपौरुष ॥ इतीरितस्तां कलशोपमस्तनीमालिङ्ग्य देवस्तरुमुद्बबर्ह ॥१२५॥ ...शच्या प्रचोदितो वासव आगमत्सुरैः ॥१२६॥ तानासुरावेशयुतान् हरेश्च बलप्रकाशनाय समुद्यतान् सुरान् ॥१२७॥... जगाम चाथो शरणं जनार्दनं सुरैर्वृतो देवपतिः क्षमापयन् ॥१३३॥... प्रविश्य चेशः स्वपुरीं स यादवैः सुपूजितोऽन्तःपुरमेत्य चाङ्गणे। तरुं प्रियाया न्यदधाद्गृहस्य ॥१३८॥ **[पादान्त्ययमक]**

38) **(पदच्छेदः) पुरं। अभियाय। अरिदरी। दत्त्वा। भद्रां। पृथासुताय। अरिदरी। शक्रपुरीं। अभियातः। प्रादात्। वह्नेः। वनं। सतां। अभिया। अतः ॥**

This refers to Lord Kṛṣṇa's successful efforts in bringing about the marriage of Arjuna with Subhadrā, even though Balarāma wanted to give her to Duryodhana. ***Read*** : (1) a) अर्जुनाय सुभद्रां च दत्त्वा शक्रपुरीं ययौ। सुयोधनाय वाचा तां बलदत्तां ॥ (टी). b) भद्रां भद्रेण बलभद्रेण भद्राय भं ज्ञानं तेन स्वरूपेण द्रः कुत्सितः द्रा कुत्सायामिति धातोः तस्मै सुयोधनाय रा रातां दत्तां वाचेति शेषः। भद्रामिति वक्तव्ये 'समाने लोपः' [?] इति सूत्रान्निरुक्तत्वाद्वा भद्रामित्युक्तम्।(टि). [भं = knowledge; द्रः = mean; रां = given; So भद्ररा = promised to Duryodhana of mean knowledge भद्ररा = भद्रा. same र being dropped.] The word अरिदरी has different meanings :- I. 1. शंखचक्रधरः श्रीकृष्णः।(टि). 2. अरिः चक्रं दरः शंखः तावस्य स्त इति अरिदरी चक्रशंखधरः कृष्णः।(या). **Lord Kṛṣṇa, the bearer of conch** and disc. II. 1. अरीन् सुरारीन् दृणातीति।(टि). Destroyer of gods' enemies. 2. अत्र अरिशब्देन अरिकामो लक्ष्यते। अरेः अरिकामस्य सुभद्राविषयकदुर्योधनकामस्य दरः दारणमस्यास्तीति अरिदरी दुर्योधनकामदारणवानित्यर्थः। दुर्योधनस्य हि सुभद्रायां कामोऽभवत्।(या). Destroyer of the wrong desire of Duryodhana who desired to **marry Subhadrā. The second line mentioning** the incident **of खाण्डवदहन is explained : 1) a)** ततो गत्वा वनं कृष्णो ददौ खाण्डवमग्नये। तत्रत्यानामभीत्यैव जरितार्यादिनां सताम्। तत्र युद्धागतानां वाऽभिया शक्रादिनां सताम् ॥ (टी). b) ततः कस्मिंश्चिदवसरे वनं यातः। वनं खाण्डवाख्यं **वह्नेः** सम्प्रदानस्याविवक्षितत्वात्षष्ठी अग्नये। प्रादात्। कया। **सतां** तत्रत्यानां जरितार्यादीनां **अतः** वह्नेः सकाशात् **अभिया** अभीत्यैव अथवा तत्र युद्धागतानां **सतां** इन्द्रादीनामभिया।(टि). The word **अभिया** is interpreted in two ways; (i) Without any fear of the fire for the noble souls like Jaritāri and others, i.e. having protected them. (ii) Without being afraid of Indra and others who were fighting against. The म.ता.नि narrates (अ.२०) : मातापितृभ्यां सहितोऽथ कृष्णः तत्रैवायाद्वासवश्चाथ शच्या। समं मुनीन्द्रैः फल्गुनेन स्मृतः संस्तत्रैवागात्प्रीतियुक्तो निशायाम् ॥१८४॥ कृष्णस्ततः पुरुहूतेन साकं

तयोर्विवाहं कारयामास सम्यक् ॥१८५॥... शक्रस्येदं खाण्डवं तेन विघ्नं करोत्यसौ तेन वां प्रार्थयामि। इत्युक्ते तं पार्थ ऊचे यदि स्याद्रथो धनुश्चाथ शक्रं निरोत्स्ये ॥२२०॥ नरावेशादन्नदानप्रतिश्रवात् स्वस्यापि शक्रस्य विरोधमैच्छत्। पार्थः कृष्णप्रेरणाच्चैव वह्निः पार्थं ययाचे शक्रविरोधशान्त्यै ॥२२१॥ न हि स्वदत्तस्य पुनः स वैरं शक्रः कुर्यात्स्वयमिन्द्रो हि पार्थः। नाप्रेरितो विष्णुना तस्य रोधं पार्थः कुर्यादिति कृष्णं ययाचे ॥२२२॥... दैत्याश्च नागाश्च पिशाचयक्षा हताश्च सर्वे तद्वनस्था हि ताभ्याम्। ऋते चतुः*पक्षिणश्चाश्वसेनं मयं च नान्यत् किञ्चिदासात्र मुक्तम् ॥२३८॥ अयमग्नेजरितेत्यादिमन्त्रैः स्तुत्वा वह्निं पक्षिणो नैव दग्धाः ॥२३९॥ *The four birds are जरितारि, सारिसृक्व, द्रोण and स्तम्बमित्र, the progeny of sage Mandapāla through bird Jaritā, when he was in the form of a bird. (*Mahābhārata, Adiparvan,* 255) [पादान्त्ययमक]

39) (पदच्छेदः) शिवभक्तप्रवराद्यं। पुमान्। न। सेहे। गिरीशविप्रवरात्। यं। तं। स्वात्मेन्द्रवरेण। व्यधुनोत्। भीमेन। धूतरुद्रवरेण॥

This refers to Kṛṣṇa's bringing about Jarāsandha's destruction through Bhīma. Different explanations of the terms : I. गिरीशविप्रवरात् (i) हरचण्डमुनिवरात्।(टि). (ii) गिरीशो रुद्रः विप्रः दुर्वासाः तयोर्वरात् । (या). Jarāsandha had the boons of Śiva and he had been the son to Bṛhadratha by the boon of sage Caṇḍakauśika. If the word चण्ड is made to mean अत्यन्तकोपन (following अमरकोश) it may refer to sage Durvāsas who is the most wrathful sage. II. पुमान् - a) परमः पुरुषो विष्णुः।(टी) परमः पुरुषो भगवान्।(टि) - Lord Viṣṇu, the Supreme Person. b) (अरिदरीति कर्तृपदमनुवर्तते।) The term अरिदरी (Lord Viṣṇu) continues from the last verse. (कोऽपि) पुमान् कोऽपि पुरुषः। न सेहे सोढुं शक्तो नाभूत्। (या). No one was able to bear the atrocities of Jarāsandha. III. स्वात्मेन्द्रवरेण - a) आत्मभक्तश्रेष्ठेन (भीमेन)। (टी). Bhīma is the greatest of the Lord's devotees.

b) स्वस्मिन्नात्मा मनो येषां ते स्वात्मानः स्वभक्तास्तेषामिन्द्राः स्वामिनो रुद्रादयः तेभ्यो वरेण (भीमेन)।(टि) स्वात्मानः = Devotees whose mind (आत्मा) is always attached to the Lord (स्व); their lords are Rudra and others; and Bhīma is greater to them, i.e. he is the greatest devotee. c) स्वात्मा स्वयं इन्द्रः स्वामी येषां ते स्वात्मेन्द्राः स्वभृत्याः वैष्णवाः तेषां वरेण श्रेष्ठेन।(भीमेन). (या). स्वात्मेन्द्राः = Vaiṣṇavas having the Lord Himself as their Master; Bhīma is the greatest Vaiṣṇava.
IV. धूतरुद्रवरेण - a) येषां रुद्रवरास्तेऽपि हता भीमेन राक्षसाः।(टी). (ii) धूतः विफलीकृतः रुद्रवरो येन स तथा तेन। अन्येऽपि दुर्जीवाः भगवता भीमेनैव निपातिता इत्यर्थः।(टि). (iii) धूताः हताः रुद्रवराः रुद्रवरोपेताः अन्येऽपि राक्षसा येनासौ तथोक्तस्तेन।(भ). Bhīma destroyed all wicked souls like demons who had obtained Śiva's boons. b) (i) धूताः निर्धूताः रुद्रवराः येन स तथोक्तः।(ना). (ii) धूतः तिरस्कृतः रुद्रवरः येन स तथोक्तः तेन। (या). Bhīma just disregarded the boons secured from Śiva. *Read* : हिडिम्बादिवधे रुद्रवरस्य तिरस्कृतत्वादत्रापि तथेति भावः। ननु भीमस्य रुद्रवरतिरस्कारः कथमित्यत। इदमेवोत्तरं धूतः कंपितः पराजित इति यावत्। स चासो रुद्रश्च तस्माद्वरेण श्रेष्ठेनेति। भीमेन हि बहुशो रुद्रः पराजितः अतस्तदपेक्षया भीमो वरः। अतस्तद्वरहंतृत्वमस्य युक्तमेवेति भावः। (या). The म.ता.नि. narrates (अ.२१) : वासुदेवाज्ञया भीमः शत्रुं हन्तुं मनो दधे ॥१५९॥... निहत्य कृष्णस्य रिपुं स भीमः समर्पयामास तदर्चनं हरेः। कृतां हि भीमेन समर्चनां तां समक्षमादातुमिहागतो ह्यजः ॥१६४॥ [पादान्त्ययमक]

40) **(पदच्छेदः) यस्य। आज्ञाबलसारैः। पार्थैः। दिग्भ्यः। हृतं। धनं। बलसारैः। जित्वा। क्ष्मां। अविशेषां। प्रसह्य। भूपान्। समस्तकामविशेषां ॥**

This refers to the world-conquest of the Pāṇḍavas due to Kṛṣṇa's grace. The terms are differently explained : I. आज्ञाबलसारैः - a) आज्ञया बलं शारीरं सारो वीर्यं येषां ते तथोक्तास्तैः।(टि). 'Their physical might was

due to Kṛṣṇa's command. b) आज्ञया बलेन चतुरंगेण च सारैः सारवद्भिः। (या). They were marching with their four-fold armies (elephants, chariots, horses & foot-soldiers) as per His command. c) (आज्ञया बलं आज्ञालब्धस्ववीर्यं तेन सरन्ति निस्सरन्ति सारयन्ति वा शत्रूनिति तथा तैः) (या) They were marching to destroy enemies, due to their strength gained by His command. II. **अविशेषाम्** - a) इयमेव तत्स्वामिका इयमेतत्स्वामिकेति विशेषरहिताम्।(टि). Making no distinction regarding to which king the particular country belonged. b) (i) सामान्यरूपां समस्तामिति यावत्।(भ). (ii) अशेषाम् (या). Entire earth. III. **समस्तकामविशेषाम्** – a) (i) काम्यन्त इति कामास्तेषां विशेषाः समस्तास्ते कामविशेषा विषयसाराः यस्याः सा तथोक्ता तामित्यर्थः।(टि). (ii) सकलेप्सितविशेषवतीम्।(भ) Full of all desired objects. b) (समस्तकामाः मोक्षेतरसर्वकामाः तेषां विशेषा अतिशयाः यस्यां सा ताम्)(या) Full of all desired objects excluding the final liberation. The म.ता.नि. narrates (अ.२१) क्रमेण सर्वान्निर्जित्य पौण्ड्रकं च महाबलम्। विरथीकृत्य कर्णं च करमादाय सर्वतः ॥१९७॥ हिमवच्छिखरे देवान् जित्वा शक्रपुरोगमान्। क्रीडार्थं युध्यतस्तेभ्यस्तुष्टेभ्यो रत्नसञ्चयान् ॥१९८॥ बाहुयुद्धेन शेषं च गरुडं च महाबलम्। क्रीडमानो विनिर्जित्य भूषणान्याप तोषतः ॥१९९॥ ... पातालसप्तकं गत्वा जित्वा दैतेयदानवान्। बलेश्च विष्णुवचनात्करं जग्राह सामतः ॥२२८॥ जित्वा च वासुकिं भूरिरत्नमादाय सत्वरः। आजगाम पुरं स्वीयं वीरो वत्सरमात्रतः ॥२२९॥ [पादान्त्ययमक]

41) (पदच्छेदः) अथ। पार्थान्। क्रतुराजं। प्रापयत्। अमरेट्। सरुद्रशक्रतुराजं। पूजा। तेन। अवापि। छिन्नः। चैद्यः। सृतिं। गतेन। अवापि। [सृतिं। गते। नावा। (अपि। (आपि)] ॥

This refers to the incident of Rājasūya-sacrifice performed by Pāṇḍavas where Kṛṣṇa was offered अग्रपूजा or prime worship and where He killed Śiśupāla who sinned by abusing Him. Different meanings of the words : I. **सरुद्रशक्रतुराजम्** - a) (i) तुरो वेगवान् वायुः।(भ).

(ii) रुद्रः शिवः शक्रः देवेन्द्रः तुरो वायुः अजो ब्रह्मा तैस्सहितस्तथोक्तस्तम्। परिवारतया पूज्यब्रह्मादिदेवताकमित्यर्थः।(या). Rudra, Indra, Vāyu and Brahmā had assembled as attendants of Lord. Kṛṣṇa. (तुरः - Vāyu, अजः - Brahmā). b) रुद्रशक्राभ्यां सहिताः तुरः सरुद्रशक्रतुरः। त्वरन्ते भगवत्सेवायां, तीर्णा जरामिति च तुरः। अजरा इत्यर्थः। सरुद्रशक्रतुरः आजः इज्या हरिपरिवारतया यस्मिन् सः सरुद्रशक्रतुराट् तं सरुद्रशक्रतुराजम्।(टि). Here it is split as स+रुद्र+शक्र+तुर+आजः and तुरः = is derived from तुर् (to hasten, hastening to serve the Lord) or तॄ (to cross over, who have crossed over old age). and it means, ever young servants of the Lord. आजः = इज्या (sacrifice). Hence the meaning is – the sacrifice where Rudra, Indra and other attendants of the Lord are given offerings. II. The second line is paraphrased variously : (1) पूजा तेन अवापि छिन्नः चैद्यः सृतिं गतेन अवापि। (या). तेन कृष्णेन पूजा अग्रपूजा अवापि प्राप्ता। चैद्यः शिशुपालः छिन्नः चक्रेण हतः। अमरेट् तेन इत्यावर्तते। तथा च अमरेट् श्रीकृष्णः सृतिंगतेन अमुक्तेनापि तेन चैद्येन तदाविष्टजयेन अवापि प्राप्तः। सृतिरहितैरेव भगवान् प्राप्यः। अयं तु सृतिस्थोऽपि तं प्रापेत्याश्चर्यमिति भावः।(या). Lord Kṛṣṇa got the prime worship. He killed Śiśupāla; and Jaya, the Lord's door-keeper who was residing in Śiśupāla attained the Lord even though Śiśupāla fell in dark hells. 2) पूजा तेन अवापि छिन्नः चैद्यः सृतिं गते नावा अपि (टी टि) a) अग्रपूजामुनैवाप्ता प्रतिपक्षोऽत्र चेदिपः। हतस्तेनैव हरिणा तम एव प्रपेदिवान्॥ तस्य संसर्गदोषेण स्वभृत्ये कुसृतिं गते। तत्तारणाय नावा...॥(टी). b) तेन कृष्णेन पूजा अग्रपूजा अपि प्राप्ता। तदवसरे भगवन्निन्दकश्चैद्यः शिशुपालः तेनैव छिन्नः। हरिणैव 'ममैव वध्यौ भवतं त्रिजन्मस्वि'ति स्ववरदानात् हतः। अवापि तृतीयोऽतिशये (महाव्या) अवाप तम इति शेषः। तमस्यपि बहुलं दुःखमनुबभूवेत्यर्थः। अत एव 'तम एव प्रपेदिवान्' इत्युक्तम्। महत्तम इत्यर्थः। किमर्थं हत इत्यर्थत आह स्वभृत्ये तस्य संसर्गदोषेण कुसृतिं योनिं गते सति नावा ज्ञानरूपया संतरणायेति शेषः।(टि).

c) आविष्टदैत्यसंसर्गदोषेण स्वपार्षदे जये सृतिं कुगतिलक्षणनदीप्रवाहं गते सति तत्तारणाय नावा नौकास्थानीयेनेत्यर्थः। (भ). It means that Jaya due to his contact with Śiśupāla was suffering worldly bondage full of misery as if being carried away by an inundated river-current and to save him Lord Kṛṣṇa acting as a boat killed Śiśupāla and freed Jaya from his body. It is also understood that the last अपि should be connected with सौभकरूशौ mentioned in the next verse as made out in टी. *Read* : पूर्वटीकायां तु सृतिं गते स्वभृत्ये तत्तारणाय नावा नौस्थानीयेन तेन कृष्णेनेति व्याख्यातम्। तत्र अपिशब्दस्योत्तरश्लोकेनान्वयः। सौभकरूशावपि तेन निहताविति।(या). **Otherwise अपि is connected with पूजा.** Not only Kṛṣṇa made Pāṇḍavas perform the sacrifice, but also He got the अग्रपूजा. The म.ता.नि. narrates (अ.२१) : ततो यज्ञः प्रववृते कृष्णद्वैपायनेरितः ॥ ऋत्विजो मुनयोऽत्रासन् सर्वविद्यासुनिष्ठिताः ॥२३२-३॥ ... अग्र्योपहारमुपयापित एव कृष्णे कोपादनिन्ददमुमाशु च चेदिराजः ॥२५५॥ ... समाह्वयच्च केशवं युधे तमाशु केशवः। निवार्य तस्य सायकान् जघान चारिणा प्रभुः ॥२६१॥ निकृत्यमानकन्धरः स भक्तिमानभूद्धरौ। तमाश्रितश्च योऽसुरो महातमः प्रपेदिवान् ॥२६२॥ जयः प्रविश्य केशवं पुनश्च पार्षदोऽभवत्। असौ च पाण्डवक्रतुः प्रवर्तितो यथोदितः ॥२६३॥ [पादान्त्ययमक]

42) (पदच्छेदः) **निहतौ। सौभकरूशौ। शीतः। भातः। च। येन। तौ। भकरूशौ। अजयत्। रुद्रं। च। रणे। बाणार्थे। अवनतिपतितकचन्द्रं। चरणे।**

This refers to the incident of Kṛṣṇa's killing Sālva the king of Saubha-city and Dantavaktra, the ruler of Karūṣa-country. या. explains the purpose of stating the facts that the Lord made the moon cool and the sun bright and that He conquered Rudra who had fallen prostrate at His feet :- यदा साल्वेन युद्धं कृतं तदा कृष्णस्तन्मायया मोहित इति भारतादौ कथ्यते। तदसुरजनमोहनायैवेत्याशयेन

चन्द्रसूर्योपलक्षितसर्वदेवप्रवर्तकत्वरूपं महत्त्वं तस्याह **शीत** इत्यादिना।(या). In the *Mahābhārata* it is stated that Kṛṣṇa swooned due to the delusion created by Sālva. This happened not due to any weakness of Kṛṣṇa but due to his intention of deluding the demons. Because the Lord is so mighty that even the moon, the sun and Rudra are far inferior to Him. Now, the different interpretations : I. **भकरूशौ** - a) चन्द्रसूर्यौ। कथम्। भकश्चन्द्रो रुशद् भानुः। कस्मात् चन्द्रो भकः कस्मात् भानुः रुशत् अत आह 'सप्तसु प्रथमा' इति नियामकात् **शीत** इति प्रथमा पञ्चम्यर्थे भावप्रधानो निर्देशः शीतत्वादित्यर्थः। शीतत्वेन लोकाह्लादकत्वादित्यत्र तात्पर्यम्। चन्द्रशब्दार्थश्च स एव। चदि आह्लाद इति पठन्ति। भानां नक्षत्राणां कः स्वामी चन्द्रः भकः शीतत्वात् भजनीयः सेव्यः। तथा दिवाकरो **भातः** भायाः दीप्तेः रुशत् तर्हि रुश इति कथं रुश एव रूशः (आधिक्येऽधिकमिति सूत्रात्।भ) अधिकं रुशते रोचते इति रूशः। तेन तथा चन्द्रसूर्यौ येन लोकाह्लादप्रकाशकरावित्युक्तं भवति।(टि). b) भाति करोतीति **भकश्चन्द्रः** क्रमेण शीतः शीतलीकृतः **भातश्च** भासकीकृतः।(त). c) भ आनन्द इति धातोः **भको** लोकाह्लादकरश्चन्द्रः। शितः सुखितः स एव **शीतः** आह्लादितः। आधिक्यार्थे दीर्घः। **भातः** लोकस्य प्रकाशित इत्यर्थः।(भ). d) यः **शीतः** चन्द्रः यः **भातश्च** कर्तरि क्तः भासकः सूर्यश्च तौ। **येन** यत्प्रेरणया। **भ** (भा) **करुशौ** जाताविति शेषः। चन्द्रः भकः भासकः जातः। सूर्यः रूशः आधिक्येन कान्तिमान् जात इत्यर्थः।(या)। One can note that the word भक is variously derived (i) भानां कः, the lord of stars; 2) भाति करोतीति shines and makes happy; 3) भ आनन्दे, delights; 4) भासकः shines. All mean that the moon delights by his शीतत्व or coolness granted to him by the Lord. [Note : 1. शीतः - शीतत्वात्; 2. शित एव शीतः, delighter.] II. **अवनतिपतितकचन्द्रम्** - a) अवनत्या जृम्भाविसृष्टतया (जृम्भणास्त्रसर्जनेन) निर्बलतया पतितः। स चासौ कचन्द्रश्चेति स तथोक्तस्तम्। के शिरसि चन्द्रो यस्येति विग्रहः।(टि). b) **अवनिरवनतिः** प्रह्वीभावः तया पतितः।(भ) (*Reads* अवनिः for अवनतिः) c) अवाक्शिराः पतितः।(ना) (*Reads* अवनिः for अवनतिः) d) किञ्च

यस्य रुद्रस्य वरात्साल्वादयो बलोन्मत्ताः तं रुद्रं च रणे योऽजयत् तस्य मोहोऽसम्भावित एवेत्याशयेनाह अजयदिति। अवनतिर्भक्तिपूर्वकप्रणामः तया पतितः कचन्द्रः शिरोगतचन्द्रो यस्य स तथोक्तः तम्। अनेन रुद्रेण शिरःसंयोगमात्रं न कृतं किंतु भक्तिदार्ढ्येण चरणे शिरस्संघट्टनमेव कृतमिति सूचयति। न केवलं कृष्णो रुद्रं जितवान् अपि तु बाणरक्षणेच्छया तेन प्रणतश्च अतस्तस्य मोहोऽसंभावित एवेति भावः।(या). या. has brought out the fulfilment of the purpose mentioned above. The म.ता.नि. narrates (अ.२२) : तं सागरोपरिगसौभगतं निशाम्य मुक्ते च तेन मयि शस्त्रमहास्त्रवर्षे। तं सन्निवार्य तु मया शरपूगविद्धो मायां युयोज मयि पापतमः स साल्वः ॥५०॥ ... तं स्यन्दनस्थितमथो विभुजं विधाय बाणेन तद्रथवरं गदया विभिद्य। चक्रेण तस्य च शिरो विनिकृत्य धातृशर्वादिभिः प्रतिनुतः स्वपुरीमगां च ॥५२॥ ... दासोऽस्मि तव देवेश पाहि मां शरणागतम्। इत्युक्त्वाभिप्रणम्यैनं पुनराह सुरान् हरः॥ यदर्थमेष आयातः केशवः शृणुतामराः। योऽसुरो वक्रनामासीदवध्यो ब्रह्मणो वरात्॥ तदा जाताद्वासुदेव पुत्रात्कामादृते क्वचित्। तं हन्तुमेव पुत्रं स्वं प्रद्युम्नमुदरेऽर्प्य च॥ आयात इह तं चापि ददाह स्वोदरात्सुतम्। निस्सारयित्वा कक्षं च दग्धं पश्यत देवताः ॥१९३-६॥ ... क्रीडार्थमत्यल्पजनेष्वपि प्रभुः कथञ्चिदेव व्यजयद् व्यथां विना। इत्यादि मोहाय स दर्शयत्यजो नित्यस्वतन्त्रस्य कुतो व्यथादयः ॥२६१॥ ... अपेतमोहोऽथ वृषध्वजो हरिं तुष्टाव बाणोऽभिससार केशवम्। तस्याच्युतो बाहुसहस्रमच्छिनत् पुनश्चारिं जगृहे तच्छिरोऽर्थे॥ तदा शिवेन प्रणतो बाणरक्षणकाम्यया। कृत्वा स्वभक्तं बाणं तं ररक्ष द्विभुजीकृतम् ॥२६५-६॥ **[पादान्त्ययमक]**

43) **(पदच्छेदः) असृजत्। ज्वरं। उग्रतमःक्षयप्रदः। लीलया। अघिवरमुक्। रतमः। क्रीडामात्रं। विश्वं। प्रकाशयन्। आत्मनः। सः। विहरकमात्रं। विश्वं॥**

Here too Kṛṣṇa's superiority to Rudra and other deities is established. The purpose is stated by या – बाणयुद्धमध्ये भगवता कृष्णेन यदशक्त्यादिकं प्रदर्शितं तन्मोहकमेवेत्याशयेन तस्य माहात्म्यमाह।(या) *Read* also : रुद्रजयात्पूर्वमनन्तरं च वृत्तां कथां दर्शयति **असृजदिति**।(भ). The Lord manifested His superior

might through many deeds. For example 1. **सः असृजत् ज्वरं लीलया** - a) स भगवान् रुद्रेण स्वीये ज्वरे विसृष्टे तं **ज्वरमसृजत्।** **लीलया** वैष्णवं प्रतिज्वरं सृष्ट्वा। **कथंचित्।** तस्य रौद्रज्वरस्य **यथा** व्यथा न भवति तथा। तेन स्तुतः सन् तस्य सामर्थ्यस्य प्रतिघातेन तमजयदित्यर्थः।(टि). b) **शिवभृत्यो ज्वरः** बाणासुरपुररक्षणाय शिवेन नियोजितः। तज्जयाय **ज्वरं वैष्णवं** ज्वरम्। **लीलया** क्रीडयैव। **असृजत्** कृष्ण इत्यर्थः।(या). c) एतच्च ज्वरजयाय प्रतिज्वरसर्जनं कृष्णस्य लीलयैव। न तु तज्जयस्य स्वाशक्यत्वादित्याशयेनोक्तम् **लीलयेति।**(म). Bāṇāsura was the son of Bali. His daughter Uṣā was loving Aniruddha, the son of Pradyumna and grandson of Kṛṣṇa. When he had been taken to her harem stealthily Bāṇa detected it and imprisoned him. Kṛṣṇa attacked Bāṇa who had mysterious powers due to Rudra's boons, which were overcome by Kṛṣṇa through Vaiṣṇava powers. Ultimately Aniruddha was released and Uṣā-Aniruddha marriage was celebrated. Here ज्वर means 'mysterious power'. 2) **उग्रतमःक्षयप्रदः** - a) (i) उग्राणां तमःस्वभावानां दैत्यानां **क्षयं** निवासं प्रददातीति तथोक्तः। (टि). (ii) तमसि क्षयं निवासं बाणभटान् हत्वा तान् तमसि पातयामासेति भावः।(भ). (iii) उग्राः दैत्याः तेषां तमसि क्षयो निवासस्तस्य प्रदः। अनेन बहवो बाणभृत्याः हता इति सूचयति।(या). The Lord sends demons (here Bāṇa's soldiers) to their proper abode i.e. hell. b) (i) यद्वा उग्रस्य रुद्रस्य तमः अज्ञानं न भगवान्कृष्ण इत्यज्ञानं तस्य क्षयप्रदो नाशप्रदः।(टि). (ii) उग्रो रुद्रः तदज्ञाननाशप्रद इति वा।(या). Remover of Rudra's ignorance. 3) **अधिवरमुक्** - (i) उषायाः बाणकन्यायाः **अधि** अधिकः स चासौ **वरश्च** तद्भर्ता अनिरुद्धश्च तं बाणबद्धं मुञ्चतीति **अधिवरमुक्।**(टि). (ii) बाणबद्धा-निरुद्धमोचक इत्यर्थः।(या). Releaser of Aniruddha imprisoned by Bāṇa. 4) **रतमः** - **रता मा** रमा यस्मिन्निति स रतमः। रमाया अपि रतिप्रद इत्यर्थः।(या) The Lord delights even Goddess Lakṣmī. 5) **विश्वं** समस्तं। **विश्वं** जगत् **आत्मनः** स्वस्य **क्रीडामात्रं** क्रीडयैव मीयते निर्मीयते त्रायते चेति तथोक्तम्।(टि). Entire

universe is created and protected by the Lord as mere a sport. 6) **सविहरकमात्रम्** - a) (i) **सः** भगवान्। **विहरकमात्रं** वयो गरुडाः हरा रुद्राः के ब्रह्माणः ते विहरके मात्रं कात्स्न्र्येन साकल्येन अतीतानागतवर्तमानत्वेन यस्मिन् तत्तथा। अतीतानागतवर्तमानब्रह्मादिसहित-मित्यर्थः।(टि). (ii) विश्च हरश्च कश्च विहरकाः सर्वे विहरकाः विहरकमात्रं तेन सहितम्।(त). (iii) विः गरुडः हरो रुद्रः कः प्रजापतिः मात्रशब्दः कात्स्न्र्यार्थकः प्रत्येकमभिसंबध्यते। कृत्स्नाश्च ते विहरकाश्च विहरकमात्राः तैस्सहितं तथा चातीतानागतवर्तमानाः ये गरुडरुद्रप्रजापतयः तैः सहितमित्यर्थः।(या). The entire universe consisting of all deities like Garuḍa, Rudra, Brahmā, present, past and future. b) (i) यद्वाधीनं मम सदा मद्विरोधे कथंचन। गरुत्मद्धरक-श्रीभिरत्रातमिति दर्शयन्।(टी). (ii) यद्वा मदनुग्रहाभावे विहरकमाभिः गरुडशिवविधिश्रीभिः अत्रं त्रायत इति त्रं न त्रं अत्रं अरक्षितम्। एतत्पक्षे स इति भिन्नं पदम्। मदनुग्रहे सति मदधीनत्वेन तैस्त्रातमिति।(त). Here it is split up as स+विहरकमा+अत्रम् meaning सः = Lord Kṛṣṇa as the subject of असृजत्। Then वि = Garuḍa, हर = Rudra, क = Brahmā and मा = Lakṣmī, अत्रम् = not protected. These are supposed to be the deities protecting the universe. But they cannot protect without the grace of the Lord. c) (i) मद्वशत्वेन तैस्त्रातमिति वार्थः स्फुटं भवेत्।(टी). (ii) यद्वा विहरकमाभिः पूर्वोक्तैरेव त्राणं स्वाज्ञया रक्षणं यस्य तत्तथोक्तम्।(टि). (iii) मदनुग्रहे सति मदधीनत्वेन तैस्त्रातमिति वा।(त). (iv) भगवत्यननुकूले कस्यापि रक्षणसामर्थ्यं नास्ति। अतो रुद्रेण सर्वात्मना बाणो रक्षितुमशक्यः अतस्तद्रक्षणार्थं रुद्रः शरणं जगामेत्यादि-चरित्रप्रदर्शनेन विश्वं स्वलीलयैव मीयते त्रायते चेति दर्शयतीत्यर्थः। (ना). (v) यद्वा स इति भिन्नं पदम्। **सः** कृष्णः। **प्रतिज्वरविसर्जने** भगवतोऽभि-प्रायमाहक्रीडामात्रमिति। **विरहकमात्रं** विहरकैः गरुडरुद्रविरिञ्चैः मात्रं निर्मितं रक्षितञ्चेत्यर्थः। विश्वं स्वस्य क्रीडामात्रं क्रीडयैव निर्मितं त्रातञ्च। ब्रह्मादिनिर्मितमपीदं विश्वं मदधीनमेवेति दर्शयन्निति भावः।(या). All this means that even though it is believed that Brahmā and others are the creators & c. of the universe, in fact, everything connected with this universe including

its creation is dependent on and under the control of the Lord. The splitting is either वि+हर+क+मा (Lakṣmī)+त्र or वि+हर+क+मा (created)+त्र (protected). The म.ता.नि. narrates (अ.२२) अनिरुद्धं गुणोदारमानीतं चित्रलेखया। प्राप्य रेमे बाणसुता दिवसान्सुबहूनपि॥ गूढं कन्यागृहे तं तु ज्ञात्वा कन्याभिरक्षिणः। ऊचुर्बाणायादिशच्च किंकरान् ग्रहणेऽस्य सः॥ आगतान-निरुद्धस्तान्परिघेण महाबलः। निहत्य द्रावयामास स्वयमायात्ततोऽसुरः॥ स तु युद्ध्वातिकृच्छ्रेण नागास्त्रेण बबन्ध तम्। अथ कृष्णः समारुह्य गरुडं रामसंयुतः॥ प्रद्युम्नेन च तत्रागात्प्रथमं तत्र वह्निभिः। युद्ध्वैवांगिरसा चैव क्षणाद्विद्राव्य तान् हरिः॥ विद्राव्य शर्वप्रमथानाससाद ज्वरं ततः। तेन भस्मप्रहारेण ज्वरितं रोहिणीसुतम्॥ आश्लिष्य विज्वरं चक्रे वासुदेवो जगत्प्रभुः। स्वयं विक्रीड्य तेनाथ कंचित्कालं जनार्दनः॥ निष्पिष्य मुष्टिभिश्चान्यं ससर्ज ज्वरमच्युतः ॥२५१-८॥ ...यदा ज्वराद्या अखिलाः प्रविद्रुताः तदा स्वयं प्राप हरिं गिरीशः। तयोरभूद्युद्धमथैनमच्युतो विजृम्भयामास विजृम्भणास्त्रतः ॥२६२॥ ...मोचयित्वानिरुद्धं च ययौ बाणेन पूजितः। एवमग्नीनङ्गिरसं ज्वरं स्कन्दमुमापतिम्॥ बाणं चायत्नतो जित्वा प्रायाद्द्वारवतीं पुनः। येनायत्नेन विजितः सर्वलोकहरो हरः॥ किं ज्वरादिजयो विष्णोस्तस्यानन्तस्य कथ्यते। ईदृशानन्तसंख्यानां शिवानां ब्रह्मणामपि॥ रमाया अपि यद्वीक्षां विना न चलितुं बलम्। न च ज्ञानादयो भावा न चास्तित्वमपि क्वचित्। अनन्तशक्तेः कृष्णस्य न चित्रं शूलिनो जयः ॥२६७-७०॥ [पादान्त्ययमक]

44) (पदच्छेदः) यस्य। आवेशोरुबलात्। न्यहनत्। पार्थः। असुरान्। प्रजेशोरुबलान्। वरदानात्। अस्य। एव। जगत्प्रभोः। ईरणात्। समनुगतनादस्य। एव॥

The purport of this verse is to convey that Bhīma, Arjuna and others could kill demons only because of the strength derived by them from Lord Kṛṣṇa, the Inner Controller (*Antaryāmin*) of all. It reminds निमित्तमात्रं भव सव्यसाचिन्। (गीता). *Read* : (i) संहर्ताऽरिकुलस्य हि। निमित्तमात्रमीशस्य पार्थो ब्रह्मेव सर्जने॥ (टी). (ii) तदन्तर्याम्येव भीमादिनामा दैत्यहन्ता अमुख्यतो भीमादिशब्दवाच्याः

भीमादयस्तु निमित्तमात्रमिति भावः। यथा ब्रह्मा सर्जने निमित्तमात्रं मुख्यतः स्रष्टा स्वयमेव।(टि) (iii) बलभीमादयोऽपि बलभीमादिशब्दमुख्यवाच्यस्य स्वान्तर्यामिणः कृष्णस्य प्रेरणादेवासुरान् न्यहनन्नित्यपि ग्राह्यम्। उक्तं हि 'बलभीमपार्थव्याजाह्वयेन हरिणा निलयं तदीयमि'ति। तथाच भीमादिकृत-मसुरहननादिकं कर्म कृष्णेनैव तदन्तर्यामिणा कृतम्। ते तु तत्र निमित्त-मात्रभूता इति भावः।(या). I. **प्रजेशोरुबलान्** - a) (i) ..... प्रजेशोरु-वरोद्धतान्। निवातकवचाख्यांस्त्रिकोटिसंख्यान् जघान ह। पार्थः षष्टिसहस्राणि पौलोमान्कालकेयकान् ॥ (टी). टि.या. and others read and interpret similarly : Arjuna killed three crores of Nivātakavacas and sixty thousand Pauloma and Kālakeyas. But ब. and वि. read the word as **प्रजेशोरुबलात्** and interpret (i) प्रजेशानामुरुबलमत्ति तादृशः।(ब). (ii) प्रजेशानां = लोकपालानां उत्कृष्टं बलं = प्रजेशोरुबलम्। तं अत्तीति (संहरतीति) प्रजेशोरुबलात्।(वि). Arjuna who devours (destroys) the great might of kings or Lokapālas. **वरदानात्** - (i) यावद्-भूमावहं तावन्नामुं जेष्यति कश्चन। इति विष्णोर्वरादेव ॥ (टी). Arjuna had the boon from Kṛṣṇa that he cannot be conquered as long as He is physically present in the world. **समनुगतनादस्य** - a) सम्यगनुगताः शक्तितात्पर्याभ्यां वर्तमानाः बलभीमजयादयो नादाः शब्दाः यत्र स तथा तस्य। बलभीमादिशब्दादिमुख्यार्थस्येत्यर्थः। (टि). All words denote primarily the Lord only. That is, the Lord Himself is expressed primarily by names like Bhīma, Arjuna and others. (नाद = शब्द word). b) सम्यगनुगताः नादाः जय जय भीम महाबल जयार्जुनेत्यादयो नादाः जयघोषाः यं स तथाविधः। सर्वत्रापि स्थिता जयशक्तिर्यदधीनेति भावः। (ना). Here नाद = cries of victory. All cries of victory hailing the victories won by Bhīma, Arjuna and others refer only to the Lord because their victories were made possible by the Lord. The म.ता.नि. narrates (अ.२२) : वधं वव्रे स्वशत्रूणामिन्द्रः पार्थात्स्वरूपतः। निवातकवचाख्यानामेषां ब्रह्मा वरं ददौ ॥ अवध्यत्वं सुरैर्दैत्यैर्गन्धर्वैः पक्षिराक्षसैः। पुनरिन्द्रेणा-र्थितोऽदाज्ञहीमान्नरदेहवान् ॥३२३-४॥ ...तिस्रः कोट्यो दानवानां स्वयम्भु-

वरगर्विताः। नानायुधै रणे पार्थमभ्यवर्षन्सुसंहताः॥ तेषां स शस्त्राणि किरीटमाली निवार्य गाण्डीवधनुःप्रमुक्तैः। शरैः शिरांसि प्रचकर्त वीरो महास्त्रशिक्षाबलसम्प्रयुक्तैः॥ सर्वे हतास्तेन महारथेन ते दानवाः सोऽपि ययौ तथान्यान्। पौलोमकालेयगणाभिधानान् षष्टिं सहस्राणि महारथानाम्॥ तानस्त्रशस्त्राण्यभिवर्षमाणान् धनञ्जयः पाशुपतास्त्रतो द्राक्। दग्ध्वा ययौ पुनरेवेन्द्रसद्म तं सस्वजे प्रीतियुक्तश्च शक्रः ॥३३०-३॥ **[पादान्त्ययमक]**

45) (पदच्छेदः) **यस्य। आवेशात्। सः। बलः। प्रचकर्ष। पुरं। प्रसह्य। च। ईशात्। सबलः। कुरुपतिनाम। नु। यमुना। आकृष्टा। येन। आहुः। अ(र्घ्य)र्ह्यं। अतनु। यं। उना॥**

This verse clarifies that mighty deeds of even Balarāma were due to Lord's presence in him, in the form of *Śuklakeśa* (white hair). (आवेशात् = शुक्लकेशरूपावेशात्). *Read* : विष्ण्वावेशी बलवान्यो गुणाधिकः स मे सुतः स्यादिति रोहिणी च। तेपे तपोऽतो हरिशुक्लकेशयुतः शेषो देवकीरोहिणीजः॥ (म.ता.नि. १२-१११). Two mighty deeds of Balarāma are mentioned : Dragging of the city of Hastināvatī and of river Yamunā. Here the word **सबलः** is understood as सवरः also besides as बलात्. I. **सबलः - a)** स बलः, that well known Balarāma, the elder brother of Kṛṣṇa. b) (i) सवरः। वरेण लक्षणाभर्त्रा सांबेन सहितः सवरः।(टि) (ii) सवरः दुर्योधनसुतायाः लक्षणायाः यो वरः सांबः तेन सहितः। चशब्दोऽनुक्त-समुच्चयार्थः। तथा च पूजां प्राप्य ययाविति तदर्थो ज्ञातव्यः।(या). Balarāma released both Lakṣaṇā (Duryodhana's daughter) and her husband Sāmba and got worship from Duryodhana before departing to his city. c) (i) वरेण सभाजनेन पूजनेनेति यावत्। तेन सहितः पूजितः सन् स्वपुरं ययौ इति शेषः।(टि) (ii) यद्वा पूजां प्राप्य ययावित्यध्याहारः। चशब्दस्योत्तरत्रान्वयः।(या). Balarāma received worship from Duryodhana before departing. [वर=पूजन (worship)] **प्रचकर्ष** can be repeated with **चेशात्**. Then ईशात् प्रचकर्ष च = तत्पुरेशात् सुयोधनात् प्रचकर्ष तत्पुत्रिकामिति शेषः। लक्षणामवापेत्यर्थः। (टि).

There is not much difference in the meanings. **कुरुपतिनाम** - (i) हस्ती कुरुपतिस्तन्नामैतत्पुरमभून्महत् ॥ (टी). (ii) कुरुपतेः हस्तिनाम्नो राज्ञो नाम यस्मिन् स तत्तथा।(टि). (iii) कुरुकुलश्रेष्ठो हस्ती नाम राजा प्रागासीत्। तेन स्वनाम्ना निर्मितं पुरं हास्तिनं पुरम्।(ना) (iv) कुरुपतिर्हस्तिनामा नृपः तस्य नाम यस्य तत्तथा हस्तिनामवत्।(या). (v) कुरूणामादिमो हस्ती नाम राजा।(ब). All except ब. consider Hastin as an eminent king of Kuru race after whom the city got the name 'Hastināpura'; ब. states that he is the founder of the Kuru race. The second **'यमुना'** is split as **यम्+उना** where य=पूज्य and उ = Rudra : (i) **यं उना** रुद्रेण य एतीति **यः** पूजनमिति शेषः। पूजित**माहु**र्वैदिका इति शेषः। (टि). (ii) **यं** बलभद्रं। **उना** रुद्रेण। **अर्घ्यं** पूज्यं। **आहुः।** वैदिका इति शेषः।(या). Whether it is अर्ह्य or अर्घ्य, the meaning is the same viz. पूज्य = fit for worship. [ह्.पाठ is यमुनाकृष्णा. See Appendix-VIII] The purport of the verse is stated by या - अनेन बलरामसामर्थ्येनैव नागपुरयमुनाकर्षणादिकं न कृतम्। किंतु तदन्तर्यामिकृष्णेन कृतं। रामस्तु निमित्तभूत इति सूचयति।(या). The म.ता.नि. narrates (अ.२२) : मासौ तत्र न्यवसद्गोपिकाभी रेमे क्षीबो यमुनामाह्वयच्च ॥ मत्तोऽयमित्येव नदीमनागतां चकर्ष रामो लाङ्गलेनाग्र्यवीर्यः ॥२३२-३॥ ...रामाय सोऽदाद्वरमब्जनाभो वध्यावेतौ भवतां तेऽप्यवध्यौ ॥२३५॥ ...दुर्योधनस्यास पुत्री रतिर्या पूर्वं नाम्ना लक्षणा कान्तरूपा। स्वयंवरस्थां तां बलादेव साम्बो जग्राह सा चैनमासानुरक्ता ॥ बलाद्गृहीतां वीक्ष्य तां कर्णमुख्या दुर्योधनाद्या युयुधुः क्रोधदीप्ताः ॥२३८-९॥ ...संश्राव्य दुष्टवचनानि बलं पुरं स्वं क्रोधात्समाविविशुरत्र चुकोप रामः ॥ स लाङ्गलेन तत्पुरं विकृष्य जाह्नवीजले। निपातयन्निवारितः प्रणम्य सर्वकौरवैः ॥ सभार्यमाशु पुत्रकं सुयोधनाभिपूजितम्। सपारिबर्हमाप्य च प्रजग्मिवान्स्वकं पुरम् ॥ इत्यादि कर्माणि महान्ति रामस्यासन् शेषस्याच्युतावेशिनोऽलम् ॥२४३-६॥ **[पादान्त्ययमक]**

46) **(पदच्छेदः) यद्बलवान्। क्रोधवशात्। निनाय। नाशं। वृकोदरः। क्रोधवशान्। लेभे। अचान्या। गम्यं। स्थानं। पुष्पाणि। धाम। च। अन्यागम्यं ॥**

Here it is stated that even the mighty feats of Bhīma were accomplished due to Kṛṣṇa's grace. Different explanations : I. **यद्बलवान्** (भीमः) - a) (i) यस्य विष्णोः बलात्।(टी). (ii) यस्य कृष्णस्य बलं विद्यते यस्य स यद्बलवान्। (टि). Possessing within him the might of Lord Kṛṣṇa. b) यस्य कृष्णस्य बलवान् वरवान् अनुग्रहवानित्यर्थः।(या). Possessing the boon and grace of Lord Kṛṣṇa. II. **क्रोधवशात्** - a) स्वापेक्षितपुष्पानयनविघ्नकरणेनागतक्रोधवशात् क्रोधपारवश्यात्।(टि). Being overpowered by the anger caused by their obstructing his mission of getting the *Saugandhika* flowers. b) एते हरिद्रोहिण इति कोपाटोपवशात्।(या). Being wrathful as they (Krodhavaśa-demons) were hating the Lord. III. **अचान्या** - a) (i) अचान्या कृष्णया।(टी). (ii) अजान्या। भाविनोऽजस्य स्वस्य भाविन्या कृष्णया तृतीयोऽतिशये (म.) इत्यतो अन्यासु स्त्रीषु सतीषु प्रधानभूतया। **अचान्या** उक्त इति शेषः। (टि). (iii) **अचान्या** अजो भविष्यद्ब्रह्मा तत्पत्नी अजानी। तृतीयोऽतिशये। यदपेक्षया पूर्वं पश्चाद्वा यस्तृतीयो वर्णः सोऽतिशये सति भवतीति सूत्रवृत्तिबलात्। सैव अचानी इत्युच्यते। अन्यासु देवीषु इयमेव भीम-वल्लभेत्यतिशयात्।(त) **अचान्या** प्रेरित इति शेषः।(ना) (iv) **अचान्या** जकारस्थाने चकारः तृतीयोऽतिशयार्थः अजान्या भाविब्रह्माण्या इति यावत्। द्रौपद्या। उक्त इति शेषः।(या). The word proper is अजान्या (by अजानी); अज = Brahmā; here the future Brahmā, Vāyudeva the same as Bhīmasena; अजानी- अज's wife; here Draupadī. Draupadī asked Bhīma to fetch *Saugandhika* flowers for her. Why **अचान्या** in stead of अजान्या ?. There is a rule तृतीयो अतिशये, according to which the third, prior or posterior, letter is substituted to show excellence. Here **च** is substituted for **ज** to convey that Draupadī was the most beloved wife of Bhīmasena. *Read* : (i) अजो हि भीमो भविता तद्भार्येयमजान्यपि। तृतीयोऽतिशये यस्मान्सैवाचानीति कथ्यते॥ अन्यासु देवीमुख्यासु कृष्णा भीमस्य वल्लभा॥(टी). The word **अचान्या** is

explained directly also : b) अच्यते पूज्यतेऽसौ अचः अञ्चतेः कर्मणि क्तः जगत्पूज्यः स चासौ अनश्चेति अचानः मुख्यप्राणः। तस्य स्त्री अचानी। ...भारतीरूपा द्रौपदी तया तन्निमित्तम्।(ना). Here अचः = the most worshipped Vāyudeva = Bhīmasena; his wife अचानी = Draupadī. **लेभेचान्यागम्यम्** is split variously :- (i) **लेभे+अचान्या+गम्यम्** (=स्वस्य गम्यम्) (त). (ii) **लेभे+अचान्या+आ+गम्यम्** (आ सम्यक् अत्यवश्यं ~~गम्यम् इति स्थानविशेषणं वा)~~ (ना). (iii) **लेभे+चान्या+गम्यम्** [चान्या जान्या भार्यया द्रोपद्या। 'परस्त्रीभार्ययोर्जानिः' (नानार्थरत्नमाला)] (ब). There is no much difference in meaning. *Read* : एवंभूतो वृकोदरः **अन्यागम्यं** स्वेतरागम्यं **स्थानं** पर्वतशिरसि कमनीयस्थानं च **पुष्पाणि** च वैश्रवणस्य **धाम** गृहं च **लेभे** प्राप।(टि) The म.ता.नि. narrates (अ.२२) : दृष्ट्वातिगन्धं वरहेमकञ्जं कुतूहलाद्द्रौपदी भीमसेनम् । बहून्ययाचत्तादृशान्यानुभावमस्याविषह्यं जानती देवदैत्यैः ॥२८७॥ तयार्थितः सगदस्तुङ्गमेन गिरिं वेगादारुहद्वायुसूनुः ॥२८८॥ ...नरागम्यां नलिनीमेत्य तत्र दृष्ट्वा पद्मान्यद्भुताकारवन्ति ॥ हैमानि दिव्यान्यतिगन्धवन्ति समासदद्वार्यमाणो नराशैः। ते भीममात्तायुधमुग्ररूपं महाबलं रूपनवावतारम् ॥ न्यवारयन् क्रोधवशाः समेताः शतं सहस्राण्ययुतानि संख्ये। वराच्छिवस्यैव परैरजेयाः शस्त्रास्त्रवृष्टिं मुमुचुः सुभीमाम् ॥२९६-८॥ ...शस्त्रास्त्रवर्षस्य कुर्वन्प्रतीपं जघ्नेऽखिलान्गदया तेषु वीरान् ॥३००॥ ...विक्रम्य तान् गदयासौ निहत्य विद्राव्य सर्वान्नलिनीं प्रविश्य। पीत्वामृताम्भश्च ततोऽम्बुजानि दिव्यानि जग्राह कुरुप्रवीरः ॥३०४॥ **[पादान्त्ययमक]**

47) (पदच्छेदः) **यद्बलभारवहत्वात्। न। अचलत्। उरगादिभिः। सुभारवहत्वात्। धर्मात्। अरिहा। अपि। पदं। भीमः। येन। एव। साहसं। रिं(लि)हा। आपि। पदम्॥**

This refers to the incident of Bhīmasena being bound by Nahuṣa and other serpents when he did not make any attempt to get released. Is it because he was weak and incapable of securing his release ? No. Bhīma is *Arihā*=destroyer of enemies and hence was strong enough to get his release. But he did not,

because of the command of Lord Kṛṣṇa (**यद्बलभारवहत्वात्**). Secondly, Bhīma possessed the treasure of good knowledge which instructs that, proper conduct of a learned person is that one's knowledge should not be used for one's own livelihood (**विद्योपजीवनस्य** अधर्मत्वात्). So Bhīma did not answer the questions of Nahuṣa to get himself freed. Now how to explain the censure of Bhīma by the sages who condemned him as नैतादृशं साहसं तेऽनुरूपम्।(म.ता.नि. २२-३८०) where 'साहस' means 'rash and unreasonable action' ? But the fact is, there is no censure at all in this statement of the sages. Because here the word 'साहस' means सहः सम्बन्धि, where सहः = God Vāyu = Bhīma, the presiding deity of Nahuṣa. So 'साहस' is an epithet and not a term of censure at all. Now the detailed explanations : I. **यद्बलभारवहत्वात्** - a) **यस्य** कृष्णस्य प्रसादेन **बलं** शारीरं **भारं** शरीरे गरिमाणं अन्याचाल्यत्वरूपं तौ **वहतीति** यद्बलभारवहः तस्य भावः तत्त्वं तस्मात्।(टि). Due to possessing the strength (बल) and bodily weight (भार) by the grace of Kṛṣṇa (यत्). b) यस्य कृष्णस्य बलो वरः आज्ञारूपः अस्मिन् समये भीमेनैवमेव स्थातव्यमिति तत्तत्कालीनसंकल्प इति यावत् स एव भारः तद्वहत्वात्।(या). Due to possessing the weight of the command (बलः=वरः) of Lord Kṛṣṇa regarding what Bhīma should do on different occasions. या. seems to be reasonable here. II. **उरगादिभिः**– (i) **उरगः** अजगररूपी नहुषः **आदिशब्दात्** धर्मेण द्रौणिना वापि।(टि). (ii) उरगरूपनहुषधर्म-द्रौणिभिः। बद्धोपीतिशेषः।(या). Even though tied by Nahuṣa (snake) and others (Yama, Aśvatthāman and others). III. **सुभारवहत्वाद्धर्मादपि** - a) **सुतरां भारो विद्यते** येषां ते सुभारवाः 'मतुबर्थे वः' तान् **हन्तीति** सुभारवहस्तस्य भावस्तत्त्वम् तस्माद् भूमिभाररूपदैत्यहतिरूपात् **धर्मात्** नैष्ठिकात् ...स्वीयात् क्षात्रधर्मात् **अपि पदं** अंशमात्रं **नाचलत्** न चचाल।(टि). Bhīma did not move even a step away from carrying out his duties of a warrior of

destroying the demons who were a burden on the earth. b) **सु** शोभना **भा** कान्तिः **रवो**ऽध्ययनं तौ यस्य स सुभारवः हन्तीति **हः** सुभारवश्चासौ हश्च तस्य भावः **सुभारवहत्वं** तस्मात् तद्रूपाद्धर्मादपि नाचलत्। यः केनचिद् धृतः सन् किंचित्पृष्टो भवति स भयात् शोभां त्यजति स्वेन ज्ञातं चेत्पृष्टं वदति हननशक्तिश्चेद्धन्ति। अयं भीमः नहुषेण धृतः पृष्टोऽपि सुभात्वात् शोभातो न चलितः सुरवत्वात्पृष्टप्रश्नोत्तरसामर्थ्येऽपि तदकथनान्न चलितः सुहत्वात् हन्तृत्वस्य सत्त्वेऽपि तदहननात्।(त). [सुभा = lustre; रव = knowledge; ह = capacity to kill] When bound by the serpents, Bhīma did not become frightened and so did not lose his lustre. Secondly when questioned he did not waste his knowledge to give answers. Thirdly even though capable of killing them, he did not kill them. This was all done because of Lord's command. More explanation is found in म – c) कस्माद्धर्मान्नाचलदित्यतो धर्मं विशिनष्टि। **सुभारवहत्वादिति।** शोभना भास्तेजो यस्यासौ सुभाः सुतेजस्वी तादृशो रवः अधीतशास्त्रलक्षणो यस्यासौ सुभारवः। जीवनार्थमप्रयोगादेव ह्यधीतस्य सुतेजस्वित्वम्। विद्योपजीवनस्याधर्मत्वात्। वैरिहन्तृत्वात् हा, सुभारवश्चासौ हा चेति सुभारवहा तत्त्वात् सुभारवत्त्वाद्धन्तृत्वाच्च। एतद्रूपाद्धर्मादित्यर्थः। (म). Bhīma possessed lustrous knowledge and being a warrior he did not waste it for his own livelihood or self-interest. Because the proper conduct laid down is "विद्योपजीवन is अधर्म for a क्षत्रिय". The same is explained in a different manner by या – सुभा शोभना कान्तिः अध्ययनजनितं तेजः तत्रैव रः रतिः अन्यत्रोपयोगरहिता आसक्तिः इति यावत्। तं वहतीति वहः तस्य भावः तत्त्वं तस्मात् तल्लक्षणधर्मादपीत्यर्थः। **नाचलत्**। क्षत्रियस्य विद्यासंपादिततेजसोऽन्यत्र स्वजीवनादौ व्ययाकरणं मुख्यधर्मः। अतस्तद्वहत्वान्नहुषधर्मकृतप्रश्नपरिहारेण नारायणास्त्रनमनेन च स्वात्मविमोक्षणं नैच्छदितिभावः।(या). *Read* also : कीदृशः। **भीमः** भृतमः सुभारतः शोभनज्ञानरतः। **येन** भीमेन। **साहसं** सतेजस्वि ससामर्थ्यं अस्त्रादिकं । नैव **आपि** जीवनाय अप्रयोगतः प्रयोगमुद्दिश्य नाधीतम्। अत एव भीमो हन्तुं कृतमतेः नहुषस्य तथा धर्मस्य प्रश्नपरिहारेण आत्ममोक्षं न

समैच्छत। विष्णुप्रसादोपचितबलेनैव वैरिणो हनिष्यामि किं ममास्त्रविद्यया तथा शरीरदार्ढ्यादजगरः स्वयमेव बलक्षये त्रस्यति तथा क्रीडार्थं दैत्यमोहनाय मानुषबले धर्ममायया क्षणमात्रं वारितवत्स्थितोऽपि दैवबले कोट्यंशोऽपि धर्ममायया वारयितुमशक्योऽतः स्वयमेव माया परास्ता। (टि). IV. **अरिहापि** – ननु कुत एवं कल्प्यते। अशक्त एव नाचलदिति किं न स्यादित्यत उक्तम् - **अरिहापीति।** वैरिहनने शक्तोऽपीत्यर्थः। एतच्चोत्तरश्लोके स्पष्टयिष्यति।(या). Bhīma is well known as the destroyer of enemies and so no weakness on his part should be presumed here. V. **येन साहसं रिहा आपि पदम्** - (i) ननु उरगे अपराधिनि कथं दण्डो न धृत इत्यत आह (?) कथंभूतेन **येन साहसं** नहुषगतदेवादितपोबलं **रिहा** लिहा लेढीति लिट् तेन लिप्सता तस्य स्वभक्तत्वात् तद्गतबलस्य स्वस्मिन्प्रवेशाच्च। इदमेव तत्त्वं अज्ञदृष्ट्या तु **येन** भीमेन **साहसं पदं आपि** सहसा अकस्मात् क्रियमाणं अबुद्धिपूर्वकमिति यावत् एतादृशं नाम **आपि** लब्धम्। अहो आश्चर्यम् बलवान् भीमो नोरगबन्धात्स्वात्मानं मोक्तुं प्रयतितवान् इदमकौशलमिति। इदं तु न घटते संपूर्णबलवेदनरूपवाय्वात्मकत्वात् भीमस्य।(टि). (ii) **लिहा** लेढीति लिट् तेन। रलयोरभेदात् **रिहा।** नहुषनिष्ठं बलं तपोज्ञानादिसामर्थ्यं च स्वयमास्वादयतीति। लिह आस्वादने। सर्वदेवर्षितपोबलादिकं नहुषोपसंक्रान्तमासीत् तस्य पात्रं भीम एव तस्य तदयोग्यत्वात्।(ना). (iii) ननु शक्तोऽपि हरिसंकल्पवशात् नाचलदिति न युक्तम्। तथात्वे 'नैतादृशं साहसं तेऽनुरूपमि'ति भीमं प्रति मुनिवचनानुपपत्तेः। यो हि बलाबलमजानन् किंचित्करोति तत्रैव साहसपदं प्रयोक्तव्यमित्याशंकायामाह **साहसमिति।** सहः वायुः तत्संबन्धि साहसं तदभिमन्यमानं नहुषगतधर्मजातम्। **रिहैव** लिप्सतैव रस्य लत्वम्। आदातुमिच्छतैव। **येन** भीमेन। **पदं साहसमिति** पदं मुन्यादिलोकोक्तम्। **आपि** प्राप्तम्। न त्वशक्तेनेत्यर्थः। तथा च भीमाभिप्रायमजानद्भिरेव मुनिभिः भ्रमेण तथोक्तमिति भावः।(या). All this means that the term **साहस** should not be understood as a term of censure. It is an epithet worthy of Bhīma. सह = Vāyu = Bhīma, the presiding deity of Nahuṣa. So सहसम्बधि साहसम् = whatever merit possessed by Nahuṣa. Naturally it comes to Bhīma the presiding deity. Hence Bhīma is the **लिट्** = sucker

of all that is possessed by Nahuṣa. The म.ता.नि narrates (अ.२२) : पादेषु तेषु निवसत्सु हिमाचलस्य याम्याश्रितेषु पवमानसुतः कदाचित्। धन्वी मृगाननुचरन् सहसाससाद हायोः सुतं नहुषमाजगरोरुरूपम् ॥३४०॥ ... आत्ममोक्षाय न प्रश्नान् व्याजहार स चाभिभूः ॥ विद्योपजीवनं धर्मो विप्राणामपि नो यतः। किमुत क्षत्रियस्येति जानन्नपि वृकोदरः ॥ तत्प्रश्नपरिहारेण नात्ममोक्षं समैच्छत। अयतन्तमपि ह्येनं चालनायापि नाशकत् ॥ पूर्णोऽपि सर्वलोकानां बलेन नहुषस्तदा। वेष्टयित्वैव तं भीमं स्थितोऽसौ नाशकत्परम् ॥ भ्रातृमात्रादिषु स्नेहात् क्षिप्रमात्मविमोक्षणम्। इच्छन्नपि न मोक्षाय यत्नं चक्रे वृकोदरः ॥ सर्वदेवमुनीन्द्राणां तप आदातुमत्रगम्। भ्रात्रादिषु स्नेहवशान्न स्थातव्यमिहेत्यपि ॥ मन्वानः कालतो भङ्गं स्वयमेवैष यास्यति। आज्ञया वासुदेवस्य दार्ढ्याद्देहस्य मे तथा ॥ स्रस्ताङ्गे पतिते सर्पे यास्यामीति विचिन्तयन्। तस्थौ भीमो हरिं ध्यायन्स्वभावान्न तदिच्छया ॥ तदैव ब्रह्मवचनात्पूर्वोक्तात्केशवाज्ञया। बलं तपश्च सर्पस्य तत्स्थमायाद्वृकोदरम् ॥ पूरिते नहुषस्थेन तपसा च बलेन च। भीमे स नहुषोऽप्यासीत् स्रस्तभोगः शनैःशनैः ॥३६२-७०॥ [पादान्त्ययमक]

48) (पदच्छेदः) न। हि। नहुषः। अलं। नहितुं। धर्मः। द्रौणिः। तथा। इतरः। (अलं। नहितुं) लं। न। हितुं। नो। राट्। कर्णः। ब्रह्मवरी। येन। ध्वस्तः। अस्त्रं। अग्रहीत्। सः। ब्रह्म। (सुब्रह्म।) वरी ॥

Here are explained the reasons why Nahuṣa, on his own, was unable to tie down Bhīma. It was not that Nahuṣa could tie down because of Bhīma's weakness; but he could do so because of Bhīma's allowing him to do so. Because Bhīma's might was a proven fact by his destroying a host of mighty kings including Duryodhana and Jarāsandha. Even it was Bhīma who allowed Arjuna to kill Karṇa. The following comments are self-explanatory :- I. नहितुम् - णह बन्धने तुमन् प्रत्ययः बद्धुं इत्यर्थः।(वि). To tie, to bind. Here it is clarified that Bhīma can be bound only when he

allows it out of indifference : (i) तदुपेक्षां विना तं न बद्धुं शक्नोति कुत्रचित्।(टी). (ii) **नहुषः तथा द्रौणिस्तथा इतरो** द्रौण्यादेः तदुपेक्षां विना तं भीमं **नहितुं** बद्धुं **नालं** न समर्थः।(टि). (iii) नत्वितरेषां भीमबन्धनेऽसामर्थ्येऽपि नहुषादीनां वरादिबलात्तत्किं न स्यादित्यतश्चोक्तं **तथेति**। यथेतरः पुमान् दुर्योधनादिस्तं नहितुं बद्धुं नालं तथैव स्वतो भीमबन्धनासामर्थ्ये सर्वेषामविशेष एवेति भावः।(म). (iv) नहुषादीनां भीमोपेक्षयैव बन्धकत्वं न स्वसामर्थ्येनेत्याह **नहीति**। यथेति सिद्ध्यति। भीममिति शेषः। (यथा) इतरः उपेक्षाऽभावकालीनो दुर्योधनादिः (भीमं) नहितुं बद्धुं। **नोऽलं** न समर्थः। **तथा** उपेक्षाकालीनोऽपि **नहुषो** वा। धर्मो वा। द्रौणिर्वा। तं भीमं। **नहितुं। अलं** समर्थः। **नहि** स्वसामर्थ्येन बद्धुं शक्तो नेत्यर्थः। हि शब्देन पूर्वप्रसिद्धयद्वलभारवहत्वादिति हेतुं स्मारयति।(या). Here it can be seen that या. interprets both phrases **अलं नहितुम् identically**. But this goes against the basic tenet of यमकालंकार. Others have given a different interpretation of the second phrase splitting it as लं+न+हितुम्– a) (i) यं लं न नलं नरं शेषं विना हितुं ज्ञातुं हि गतौ वृद्धौ चेति धातोः **नोऽलं** न समर्थः।(टि). Only Śeṣa is able to know Bhīma. ल = य = Bhīma, न = नर = Śeṣa, हि = to know. (ii) **इतरः लं** तृतीयोऽतिशये **इति** सूत्रात् यं भीमं **हितुं** ज्ञातुं ओहाक् गताविति धातोः। गत्यर्थानां ज्ञानार्थत्वात्। (त). None is able to know Bhīma. b) (i) लमित्येतदावर्तनीयम्। लं लयं न विना **नो** न अलम्। न समर्थो यथा तथेत्यर्थः।(त). (ii) लं लयं विनेत्यर्थः। यः कोऽपि तं बद्धुमुद्यतश्चेत्तेन लयमेव प्राप्नोति अतः स्वलयं विना तद्विषये यत्किंचिदप्यनिष्टं कर्तुं न शक्तोतीति भावः।(भ). None can harm Bhīma without getting destroyed. [ल = लय = destruction; न = विना = without; हितुम् = to harm. धर्मः = यक्षरूपीयमः।] **राट्** = (i) राजा दुर्योधनः। **ध्वस्तः** निहतः। **कीदृशः राट्** राजते शोभते भ्रातृभिः साहित्येनेति ससहोदर इत्यर्थः।(टि). (ii) दुर्योधनादिदुष्टराजसमुदायः।(या). It is a fact that Bhīma destroyed, in the great war, Duryodhana together with his brothers and allies. **ब्रह्मवरी** - (i) (ब्रह्मवरी परशुरामवरवान्) कर्णः।(या) Karṇa who had the boon of Paraśurāma.

ब्रह्म = brahmin. (ii) ब्रह्मवरात् विधेर्वरा(रो)न्मत्तो मागधः।(टि) ब्रह्मवरवान् जरासन्धः च।(या). Jarāsandha who had obtained the boon from Brahmā. Here it must be noted that it is generally understood that it was Arjuna and not Bhīma who killed Karṇa. But here it is clarified that Arjuna had obtained the necessary strength from Bhīma only. And Karṇa could bind Bhīma who just ignored the act to respect the boon given by Paraśurāma to Karṇa. *Read* : अर्जुनस्य कर्णवधे भीम एवोपजीव्य इत्याशयेन कर्णोऽपि ध्वस्त इत्युक्तम्। परशुरामवरगौरवस्यापि रक्षणायैव भीमेनोपेक्षितः कर्णः तं बबन्धेति दर्शयितुं कर्णग्रहणम्।(या) कर्णस्तेनैकहस्तेन जितः पार्थाय शेषितः।(टी) **अस्त्रमग्रहीत्स(त्सु)ब्रह्मवरी** - a) **अस्त्रम्+अग्रहीत्+स+ब्रह्म+वरी।** (i) ननु द्रौणेर्नहुषादिवत् उपेक्षितस्यैव बन्धकत्वं न स्वत इत्युक्तम्। तदयुक्तम्। युद्धे प्रतिवीरतया स्थितस्योपेक्षायोगात्। राजादिवदलीनत्वाच्च नतस्य स्वबन्धकत्वं ज्ञात्वोपेक्षितुं शक्यत इत्यत आह। **वरी** बली। **ब्रह्म** ब्राह्मणजातिः। **सः** द्रौणिः। पराजितस्सन् इति शेषः। **अस्त्रं** ब्रह्मास्त्रं। **अग्रहीत्** असृजत्।(या). When Aśvatthāman was defeated by Bhīma, he discharged the ब्रह्मास्त्र. *Read* : अयं भावः। युद्धे दुर्योधनादिरिव द्रौणिर्न भीमेन हतः ब्राह्मणवधस्य गर्हितत्वात्। किन्तु पराजित एव सन् पाण्डववंशप्रणाशाय ब्रह्मास्त्रमसृजत्। तदा भीमस्तेन ब्रह्मास्त्रेण द्रौणिमुपेक्ष्यास्त्रदेवताभूतविष्णुगौरवेणैव बद्धवत्स्थितः। अतो युद्धगतोऽपि द्रौणिः विष्णुबलमारवहेन भीमेनोपेक्षितस्सन् तं बबन्ध न स्वसामर्थ्येनेति ज्ञायत इति।(या). b) **अस्त्रम्+अग्रहीत्+सुब्रह्म+वरी.** (i) **येन** पराजितो वरी बली द्रौणिः **सुब्रह्म अस्त्रं** ब्रह्मास्त्रमग्रहीत्।(टि) **सुब्रह्म** qualifies **अस्त्र.** (ii) यतः सुब्राह्मणोऽतो न संहारविषयो बभूवेति भावः।(भ). **सुब्रह्म** = सुब्राह्मण = Aśvatthāman. (iii) **सुब्रह्म अस्त्र**मग्रहीत् नारायणास्त्रं शिरसि जग्राह। न तु युद्धादुपररामेति भावः। अश्वत्थामा तु विप्रत्वादुपेक्षितः।(ना). Bhīma bowed down to the नारायणास्त्र. (iv) (सुब्रह्मवरीति पाठे सुब्रह्मवरीत्येकं पदं। सु सर्वोत्तमं ब्रह्म हरिः तस्य वरः उत्तमः संकल्पः अस्मिन् समये भीमेनैवमेव स्थातव्यमिति तत्परिज्ञानवान् भीमः अस्त्रं द्रौण्यस्त्रं अग्रहीदित्यर्थः।)(या). Bhīma

acted as per God's will and bowed down to ब्रह्मास्त्र discharged by Aśvatthaman. The म.ता.नि. narrates : (i) **जरासन्धवधः** :- मानयित्वा वरं धातुर्दिवसान् दश पञ्च च। वासुदेवाज्ञया भीमः शत्रुं हन्तुं मनो दधे॥ स प्रणम्य हृषीकेशं हर्षादाश्लिष्य फल्गुनम्। रिपुं जग्राह मकुटे वारणं मृगराडिव॥ पृष्ठेऽस्य जानुमाधाय कूर्मदेशं बभञ्ज ह। मृतिकाले पुनर्देहं विददार यथा पुरा॥ (२१.१५९-१८१) (ii) **कर्णादिनिग्रहः** :- क्रमेण सर्वान्निर्जित्य पौण्ड्रकं च महाबलम्। विरथीकृत्य कर्णं च करमादाय सर्वतः॥(२१.१९७) विकर्णचित्रसेनाद्या एवं वीरतमाः सुताः। कर्णस्य पश्यतो भीमबाणकृत्तशिरोधराः॥ निपेतुर्धृतराष्ट्रस्य रथेभ्यः पृथिवीतले। त्रयोविंशतिरेवात्र कर्णसाहाय्यकाङ्क्षिणः॥ ...सुयोधनः कर्णमाह जहि भीममिमं युधि। स आह नैष शक्यो हि जेतुं देवैः सवासवैः॥ (२६.१४२-३, २०५). **दुर्योधनवधः** – ततो भीमः सर्वलोकस्य धर्मं प्रकाशयन्वाक्यमिदं जगाद। ऊरू तवाहं हि यथाप्रतिज्ञं भेत्स्यामि नैवात्र विचारणीयम्। इत्युक्तवन्तं प्रससार चाजौ दुर्योधनस्तत्र बभूव युद्धम्। भीमस्तदाग्र्यप्रकृतिं विधित्सुः मन्दः स आजौ व्यचरज्जनार्थे॥ ...तौ शिक्षाबलसंयुक्तौ मण्डलानि विचेरतुः। ततो भीमं वञ्चयितुं धार्तराष्ट्रश्शिरः क्षितौ॥ व्यधादुच्छ्रितसक्थीकस्तदा कृष्णाभ्यनुज्ञया। पृष्ठमूलेऽहनद्भीमो भिन्नसक्थिश्च सोऽपतत्॥ प्रतिज्ञापालनार्थाय नाभेर्नोपर्यधस्तदा॥ गदायुद्धस्य मर्यादां यशश्चाप्यभिरक्षितुम्। नाधस्तान्मध्य एवासौ निजघ्ने तं वृकोदरः॥(२८.७०-१, ७४-७). **नारायणास्त्रप्रसङ्गः** – आश्रुत्य तातं निहतं प्रतिज्ञां चकार निश्शेषरिपुप्रमाथने। नारायणास्त्रं विससर्ज कोपात्तदा भीता भीममृते समस्ताः॥(२६.२९८). **सर्वनिग्रहः** – द्रोणो द्रौणिर्धार्तराष्ट्रश्च राजा भूरिश्रवा भगदत्तः कृपश्च। शल्यो बाह्लीकः कृतवर्मा सुशर्मा सर्वाश्च सेना वारिता वायुजेन॥(२५.११९) **[पादान्त्ययमक]**

49) **(पदच्छेदः) क्षात्रं। धर्म। स्ववता। गुरुवृत्त्यै। केशवाज्ञया। च। चरमं। स्ववता (रमंस्ववता)। सर्वं। सेहे। अमनसा (मनसा)। भीमेन। ई(ऐ)शैकमानिना। हेमनसा॥**

Here Bhīma's absolute faith in the Lord is highlighted as the sole cause of his tolerating all insults and attacks even though he did possess inherent strength to repudiate all those insults and

attacks. Interpretations of the words : I. **स्ववता** - (i) सुष्ठु अवतीति स्ववन् तेन सुरक्षता भीमेन।(टि). (ii) सुष्ठु अवता रक्षता सुशक्तेनापि भीमेन।(म). To protect perfectly the **क्षात्रधर्म** = proper conduct of a warrior, which is दुष्टनिग्रहादिरूप (म) = of the form of destruction of the wicked and the like. Note : **भीमेन। सर्वं** वैरिकृतं। **चरमं** दण्डरूपमनिष्टं। **मनसा** प्रसक्तानिष्टस्य तुच्छताबुद्ध्या। **सेहे** क्षान्तम्। अनुभूतमिति यावत्।(या). [Note : **सर्वम्** अनिष्टं भिक्षाचरणादिकम्।(टि); दुर्योधनादिकृतं **सर्वमनिष्टं** दारधर्षणादिकम्।(भ);] Why did Bhīma tolerate all insults and attacks ? The reasons are :- 1) To obey elders like Yudhiṣṭhira as per Kṛṣṇa's command. (i) केशवानुज्ञयैव **गुरुवृत्त्यै** युधिष्ठिरानुवृत्त्यै। तदुक्तम् 'भीमस्य दोषमुभयं प्रतिहन्तुमेव।' (ता.नि.१९) इत्यादौ. (टि) (ii) To obey elders and the command of Kṛṣṇa. (1) कुत एतत्सर्वं तन्निग्रहशक्तेनापि क्षान्तमित्यतस्तत्र निमित्तद्वयमाह। **गुरुवृत्त्यै केशवाज्ञया चेति**।(भ). (2) **गुरुवृत्त्यै** गुरवो युधिष्ठिरादयः तदनुवृत्त्यै। **केशवाज्ञया चेति**।(या). **चरमं स्ववता** is read and interpreted differently. (1) **सर्वं** वैरिकृतं **चरमं** दण्डरूपमनिष्टं। ...सेहे। ...अत्र निमित्तं **गुरुवत्त्यै** ...**केशवाज्ञया चेति**। अत्र दृष्टान्तमाह **स्ववतेति**। **स्ववता** लुप्तोपमा। स्वं धनमस्यास्तीति **स्ववान्** तेन स्ववता (लीनवित्तवता तद्रक्षणार्थं राजादिकृतं सर्वमनिष्टमनुभूयते। न तु तस्य वित्तस्य व्ययः क्रियते एवमेवेति) स्वसंपादितवित्तसंरक्षणार्थं राजादिकृतानिष्टानुभववतेवेति यावत्।(या). Just as a wealthy person tolerates all insults and attacks, to protect his hidden treasure, Bhīma protected his क्षात्रधर्म for गुरुवृत्त्यै and केशवाज्ञया. (2) **स्ववता** स्वं स्वीयं सर्वं विद्यते यस्य सः स्ववान् तेन सुशक्तेन।(टि). Bhīma had his inherent strength. (3) **रमंस्ववता** रं रमणीयं च तत् मं लीनं चेति रमं मितेरपीतेर्वा मकार इति माण्डूके निर्वचनात्। उक्तं च तद्भाष्ये 'जीवमन्तर्गतं कृत्वा तज्ज्ञानलयकृद्यतः। प्राज्ञो मानमपीतिश्चे'ति। तथा चात्र मीयते लीयत इति मशब्दो लीनवाची। रमं च तत् स्वं वित्तं च रमंस्वम्। नुमागमच्छान्दसः। तद्वता। दुर्योधनकृते द्यूते रमणीयसर्ववित्त-लयवतापीत्यर्थः।(भ). [र = रमणीय = pleasing; म = लीन = lost;

स्व = वित्त = wealth]. Even though there was lost all pleasing wealth in the gambling bout. (4) **मं स्ववता** - मं सन्तोषः स्ववता रक्षता (ब). Protecting his pleasure. (5) **मं स्ववता** - स्ववता - like a wealthy person having hidden treasure; मं=मीयते लीयते इति मं = लीनं all concealed attacks (were tolerated by Bhīma.) (वि). **सेहेमनसा** is split as **सेहे अमनसा** and **सेहे मनसा,** and interpreted differently :- (1) a) .. **सेहे** क्षान्तम्। कथंभूतेन भीमेन। **अमनसा** ए ब्रह्मणि मनो यस्य सोऽमनाः तेन। तल्लीनचित्तवता ब्रह्मलीनचित्तवतेत्यर्थः। गुरुवृत्तिरपि युधिष्ठिरान्तर्यामिवृत्तिरेव मुख्यत इत्यर्थः।(टि). [अ = Lord Kṛṣṇa; मनस् = mind] Bhīma had his mind fixed in Lord Kṛṣṇa. Even in Yudhiṣṭhira and others he saw Kṛṣṇa, their inner controller. b) वा **इत्यथवा मितेः मन्** मनः तेन **मना** अं ब्रह्म **सरतीति** मनस् तेन।(टि). Bhīma's mind moves towards Lord Kṛṣṇa only. c) अथवा मितेर्मन् तस्य **अः** निषेधो यस्मिन् तत् मनं देशतः कालतो गुणतश्चापरिमितं ब्रह्म सरति प्राप्नोति योगतः प्रापयति। भक्तानिति **मनस्** तेन।(टि). मनस् = Infinite Lord made to reach the devotees. (d) i) **मनसा** - प्रसक्तानिष्टस्य तुच्छताबुद्ध्या।(या). Bhīma tolerated with contempt in his mind. ii) अशक्तेनैवेदं सर्वमनुभूतमित्याशंक्य तत्परिहाराय **अमनसेत्यपि** योज्यम्। **अमनसा** नासिकावाचि नस्शब्दस्तदभिमानिवायुवाचकः तथा च अमो अपरिमितः यो नस् वायुः तद्रूपेणेत्यर्थः। **अपरिमितवायुस्वरूपे** भीमे शक्तिरसंभाविता नेति भावः।(या). [अम = अपरिमित = Infinite; नस् = नासिका = तदभिमानिवायु = Bhīma] Bhīma being the incarnation of invincible Vāyu, had the supreme might. **भीमेनै(ने)शैकमानिना** is separated as भीमेन+ऐशैकमानिना and as भीमेन+ईशैकमानिना and interpreted as follows :- a) **ऐशैकमानिना** - ईशस्येदं ऐशं तच्च तत् एकं केवलं च संख्यावाचकत्वे 'पूर्वकाले'ति पूर्वनिपातः स्यात् ऐशैकं मन्यते स ऐशैकमानी तेन। सर्वजगज्जननादिकं ईशैकाधीनमिति ज्ञानवता इत्यर्थः।(टि). Bhīma possessed the right knowledge that everything of this universe is dependent on the Lord. b) (i) **ईशैकमानिना**

ईशेन सह एकं मानं ज्ञानं यस्यास्तीति एतादृशेन। भगवत्संकल्पानुसारि-संकल्पेन। तदानीमेव तद्धननेऽष्टादशाक्षौहिणीभारहरणं न स्यादिति तत्काले सोढव्यमेवेति भगवत्संकल्पादित्यर्थः।(ना). (ii) ईशेन सहैकस्मिन्विषये मानं ज्ञानमस्यास्तीति ईशैकमानी तेनेत्यर्थः। ईशो यन्मन्यते तदेव भीमोऽपि मन्यत इति भावः।(या). [मान = ज्ञान = knowledge] Bhīma's knowledge and will were similar to Lord's knowledge and will. As Kṛṣṇa had willed the destruction of the entire army of Duryodhana, Bhīma also willed the same and spared Duryodhana to survive. Because with the destruction of Duryodhana then and there, the great war would not have commenced. The word **हेमनसा** is also significant : (i) हेम्नः आप्रणखात् सुवर्णवर्णस्य हरेर्नसा नासिकातो जातेन। 'यद्यस्माज्जायते चाङ्गादि'ति प्रमाणादभेदोक्तिः।(टि). (ii) प्राणावतारत्वेन ऋजुत्वादिति भावेन विशिनष्टि। कीदृशेन भीमेन **हेमनसा** हेम्नः परमेश्वरस्य नासिका हेमनासिका तेन हेमनसा। 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेशः आप्रणखात् सर्व एव सुवर्णः'। "मुखनासिकाभ्यां प्राणः" (प्र.उ.२-५) 'प्राणाद्वायुः' (पुरुषसूक्ते) इति वायोर्भगवन्नासोत्पन्नत्वात्। तत्स्थत्वात्तद्व्यपदेशो 'मञ्चाः क्रोशन्ती'तिवत्। पद्दन्निति नासिकाया नसादेशः 'पदादयः पृथक्शब्दा इत्येके' इत्युक्तत्वान्नासिकापरपर्यायो नस् शब्दो वा।(ना). Bhīma (Vāyu) was born of Lord's golden nose. (iii) हेमशब्देन आकेशादाप्रणखाद्धेमरूप ईश्वरो ग्राह्यः तस्य नस् नासिका (आघ्राणकर्त्री।) यस्य स तथोक्तस्तेनेत्यर्थः। तदत्यन्तप्रियेण इति यावत्। तथा च ईश्वरबुद्ध्यनुसारेण ज्ञात्वा कार्यकर्तरि तदत्यन्तप्रिये च शक्तिस्संभावितैवेति भावः।(या). Bhīma wills as Lord wills; Bhīma acts as Lord wills; and hence he is the most beloved of the Lord and as such he possessed the invincible strength. The म.ता.नि. narrates : इत्युक्तवाक्य-ममुमग्रजमन्वगात्स भीमः प्रदर्श्य निजधर्ममथानुवृत्त्यै। दोषो भवेदुभयतो यत एव तेन वाच्यः स्वधर्म उत न स्थितिरत्र कार्या॥ कीर्त्यर्थमेव निजधर्मपरिप्रहाणे प्राप्तेऽग्रजस्य वचनात् प्रविहातुमेव। भीमस्य दोषमुभयं प्रतिहन्तुमीशो ज्येष्ठं चकार हरिरत्र सुतं वृषस्य॥ (१९.२८-२९) ...निवारितो

धर्मजेन गुरुभिश्चापरैस्तदा। माननार्थं गुरूणां तु भीमस्तान्न जघान ह॥ नैवात्यवर्तत ज्येष्ठं धर्मात्मानं युधिष्ठिरम्। तेषां पापाभिवृद्ध्यर्थं ज्येष्ठवृत्तिं च दर्शयन्॥ (२१.३४७-८) [पादान्त्ययमक]

50) (पदच्छेदः) **यद्भक्तप्रवरेण। प्रोतः। स्वस्मिन्। सः। कीचकः। प्रवरेण। पतिताः। तस्य। सहायाः। कृष्णार्थे। मानिनः। समस्य (सं। अस्य)। सहायाः (सह। आयाः)॥**

Here there is the reference to the incident of Bhīma's killing Kīcaka and Upakīcakas to protect the life and honour of Draupadī. The attribute **यद्भक्तप्रवर** qualifying Bhīma suggests that he became प्रवर=प्रबल because of the grace of the Lord Who helps His devotees in all ways. Different interpretations of the words:- I. **प्रवरः** a) श्रेष्ठः = supermost. b) प्रबलः (वबयोः रलयोः अभेदः)=mighty. II. **सहायाः** a) सहायाताः सह आयः आगमनं येषां ते तथोक्ताः।(टि). Who had come with him, i.e. Kīcaka. b) सहायतः मिलित्वा प्रेतस्य कीचकस्य कृष्णया सह दाहनेन तत्साचिव्यमाकाङ्क्षमाणाः इत्यर्थः।(टि). They had come together to help Kīcaka. c) पक्षपातिनः।(भ). They were on Kīcaka's side to help him. d) सहायभूताः अन्ये उपकीचकाः।(या). Kīcaka's helpers, Upakīcakas. e) सहभूताः कीचकशरीरमादाय गताः।(या). They went away taking with them Kīcaka's corpse. III. **समस्य** - a) स्वस्वभावेनेति शेषः। दर्पिष्ठस्येति तात्पर्यार्थः।(टि). Of Kīcaka, the haughty. b) **समस्य** मिलित्वा युगपदेव **पतिताः** पातिता इत्यर्थः।(भ). They were all together killed. c) **अस्य** कीचकस्य **सहायाः ... सम्पतिताः** प्रपातिता इत्यर्थः।(या). Kīcaka's helpers were totally destroyed. The म.ता.नि. narrates : तत्रैनमासाद्य च भीमसेनो विजित्य तं बाहुयुद्धे निहत्य। शिरो गुदे पाणिपादौ च तस्य प्रवेशयामास विमृद्य वीरः॥ अवध्यं तं निहतं वीक्ष्य तस्य पञ्चोत्तरं शतमेवानुजानाम्। सर्वं वराच्छंकरस्य ह्यवध्यं सहैव कृष्णां तेन दग्धुं बबन्ध॥ सा नीयमाना कीचकैः संरुराव श्रुत्वैव तं भीमसेनो महान्तम्। उद्धृत्य वृक्षं तेन जघान सर्वानादाय कृष्णां पुनरागाद्पुरं च॥ (२३. २६-८) [पादान्त्ययमक]

51) (पदच्छेदः) यद्भक्त्या। अनुगृहीतौ। पार्थः। भीमः। च। गोनृपौ। नु। गृहीतौ। ऋणमुक्त्यै। सुव्यत्यस्त्यै। क्रमशः। वीरौ। अमुञ्चतां। सुव्यत्यस्त्यै ॥

This verse is generally interpreted holding गोनृपौ as referring to cows and king Virāṭa who had been captured by Kauravas and had been subsequently released by Arjuna and Bhīma. It is as follows :- I. गोनृपौ - गामित्येकवचनं समुदायार्थे। गाः। नृपं विराटं च।(भ). (ii) गोशब्दो जात्येकवचनः गौः गोसमुदायः नृपः मत्स्यराजश्च तौ। (या). II. क्रमशः - a) उत्तरगोग्रहणेऽर्जुनः गाः अमोचयत्। दक्षिण-गोग्रहणे तु त्रिगर्तैर्गृहीतं विराटं भीमोऽमोचयत्।(ना). Arjuna and Bhīma released respectively the cows and king Virāṭa. b) पूर्वदिने भीमः गोनृपावमोचयत्। परदिने पार्थो गा अमोचयदिति विवेकप्रदर्शनाय क्रमश इत्युक्तम्।(या). On the previous day Bhīma released both the cows and king Virāṭa and on the next day Arjuna released the cows. This is followed by वि. c) क्रमश इति प्रथमदिने पार्थः द्वितीयदिने भीमः। अत एव पार्थस्य प्रथमग्रहणम्।(ब). On the previous day Arjuna and on the next day Bhīma. III. ऋणमुक्त्यै - a) संवत्सर-पर्यन्तं विराटवित्तं पाण्डवैर्भुक्तं तत्प्रत्युपकारायेत्यर्थः।(या) To repay the debt of king Virāṭa who fed them for one whole year. b) तौ स्वाभ्यां मोचनीयाविति प्रारब्धतो विमोकाय।(त). To get release from the writ of the Destiny that they should be released by them two. IV. सुव्यत्यस्त्यै - a) (i) अज्ञातवासं विशेषेण अतिक्रम्य परदिने सुष्ठु आत्मरूपेणैव अस्त्यै स्थित्यै अवस्थाना-येत्यर्थः।(भ). (ii) सु सम्यक् वि विशेषेण अति अज्ञातवासमतिक्रम्य अस्तिः असनं स्थितिरिति यावत् तत्प्राकट्यं लक्ष्यते। तथा चाज्ञातवासं सम्यग्विशेषेणातिक्रम्य स्वस्थितिप्राकट्यायेत्यर्थः।(या). [सु+वि+अति+अस्ति] To reveal their real identity (अस्ति) after passing (अति) the period of अज्ञातवास perfectly (वि) in a proper manner (सु). b) कथं भूतायै स्वस्थित्यै। सुव्यत्यस्त्यै सु सम्यक् व्यत्यस्तिः व्यत्यासः स्वामिभृत्यभावव्यत्यासः यस्यां सा तथोक्ता तस्यै। अज्ञातवासे

हि विराटः स्वामी पाण्डवाः **भृत्याश्चाभवन्।** तदपगमानन्तरं **पाण्डवेषु** स्वस्वरूपेणावस्थितेषु तत्स्थितस्य **स्वामिभृत्यभावस्य व्यत्यासोऽभूदिति भावः।**(या) To reverse (व्यत्यस्ति) **fully (सु) the order of the relation of** master and servant. **Before revealing their identity,** Pāṇḍavas were **servants and king** Virāṭa **was** the master. After the **revelation, the** relation was reversed; he became **their** servant. But टि. understands **गोनृपौ** as **द्रुपदविराटौ** and explains other words accordingly. *Read* : **यद्भक्त्या** यस्य कृष्णस्य भक्त्या **अनुगृहीतौ** उपोद्बलितौ। **पार्थो भीमश्च। गोनृपौ नु** द्रुपदविराटौ राजानौ। **वीरौ** महावीरौ। क्रमेण **गृहीतौ सर्वकौरवैरिति** शेषः। **क्रमशः** क्रमेण **अमुञ्चताम्** कथं आदौ द्रुपदो **गृहीतः। किमर्थम्। ऋणमुक्त्यै** ऋणात् द्रोणं प्रति द्रुपदानयनरूपप्रतिज्ञारूपात् **मुक्त्यै** आनृण्याय। **अथवा** द्रोणायार्धराज्यदानप्रतिश्रवणरूपऋणमुक्त्यै। द्रुपदो गृहीतः। पार्थो भीमगृहीतं अमुञ्चत्। अनन्तरं अज्ञातवत्सरे पूर्णे कौरवैर्विराटो गोग्रहे धृतः। **सुव्यत्यस्त्यै।** सुतरां व्यत्यस्तिः सुव्यत्यस्तिः तस्यै व्यत्यासायेत्यर्थः। कथम्। पाण्डवानां द्यूतप्रसंगेन राज्येऽऽपहृतेऽपि विराटो न नमति कीचकबलात्। स तु स्त्रीनिमित्तं हतः संप्रति बलाभावात् अदासं विराटं दासं कुर्म इति व्यत्यासाय। तं च **भीमोऽमुञ्चत्।** इति **क्रमेण वीरौ** महावीरौ पार्थभीमौ गृहीतौ पार्षतमात्स्यौ अमुञ्चतामित्येकान्वयः। किमर्थममुञ्चताम्। **सुव्यत्यस्त्यै** सु सुष्ठु वि विशेषेण अति अतिक्रम्य अस्त्यै स्थित्यै द्रुपदस्य पितृसखस्य संबन्धयोग्यतास्थित्यै तथा विराटस्य अभिमन्योः रथे उत्तरां गृहीत्वा स्वसंबन्धयोग्यतास्थित्यै। कस्मात् आत्मरोपतः आत्मना स्वेन रोपणं स्थापनं तस्मात्। द्रुपदविराटौ बहुशो भीमपार्थबलं दृष्ट्वा श्रुत्वा च जरासंधं परित्यज्य पाण्डवानाश्रितौ यतोऽतः स्वरूपितौ।(टि). The म.ता.नि. narrates (अ.२३) : अग्रे ययौ तत्र योद्धुं सुशर्मा स गा विराटस्य समाजहार। श्रुत्वा विराटोऽनुययौ ससेनः तं पाण्डवाश्चानुययुर्विनार्जुनम्॥ विजित्य संख्ये जगृहे विराटं तदा सुशर्मा तमयाद्वृकोदरः। स तस्य सेनां विनिहत्य मात्स्यं विमोच्य जग्राह सुशर्मराजम्॥(२३.३३-३४) ...आदाय गाण्डीवमथ ध्वजं च हनूमदङ्कं सदरोऽग्रतो गाः। निवर्त्य युद्धाय ययौ कुरूंस्तान् जिग्ये सर्वान् द्वैरथेनैव सक्तान्॥ ...एवं विराटं मोचयित्वैव गाश्च तमस्यन्धे कीचकान्पातयित्वा।

प्राप्तो धर्मः सुमहान्वायुजेन तस्यानु पार्थेन च गोविमोक्षणात् ॥ (२३.४१,४८) **[पादान्त्ययमक]**

52) (पदच्छेदः) **यद्भक्त्या। अमितया। (मितया) अलं। कृष्णा। कार्ये। विवेश। कृष्णाऽऽकार्ये। यां। ईरार्धतनुत्वात्। न। आप। आत्। भीमात्। ऋते। अपि। ना। अपात्। भीमात् ॥**

This refers to the incident of Draupadī's humiliation at the hands of Duśśāsana in the royal assembly of Kauravas. Why did she call Lord Kṛṣṇa to rescue her ? Is it because she can be touched and obtained by anybody other than Bhīma ? No. It was all because of Lord's will. Otherwise none can touch and humiliate her. These three verses, 52, 53 and 54 refer to incidents related to Draupadī. एवं भीममाहात्म्यं विशेषतो निरूप्य द्रौपदीमाहात्म्यमपि निरूपयति - **यद्भक्त्ये**त्यादिभिस्त्रिभिः श्लोकैः।(भ). Different interpretations : I. **यद्भक्त्यामितया** is split up in two ways, both interpreted similarly a) (i) यद्भक्त्या मितया (टी). (ii) **मितया** प्रमितया। **यद्भक्त्या** यस्य कृष्णस्य भक्त्या।(टि) **b) अमितया यद्भक्त्या**।(या). Draupadī had infinite devotion to Lord Kṛṣṇa. II. **अलम्** - उत्तमे (कार्ये) (टी) (टि) (या). III. **कृष्णाऽऽकार्ये** - (i) कृष्णस्य पूर्णानन्दबलस्य भगवत आकार्ये आकारणमाकार्यमाह्वानमिति यावत्। कृष्णाह्वानाख्य उत्तमे कार्ये कर्तुमभीष्टे **अलं विवेश** - हे कृष्ण भगवन्नेहि मां पापिनो दुःशासनात्केशग्रहवस्त्र-स्रंसनरूपाऽऽपदो रक्षेति मनसा शरणं जगामेत्यर्थः। इदं तु लोकशिक्षार्थम्। सर्वदा तस्याः भगवति चित्तवृत्तेः सद्भावात्। विशेषतः शरणं (णा?) गतिः विशेषानुग्रहार्थम्। ततश्च लोकशिक्षा भवति। एवं सर्वस्वामिनं सर्वापत्तृणधूमकेतुं भगवन्तं शरणं गतायाः दुःशासनः किं कर्ता।(टि). (ii) कृष्णः आकार्यः आकारणीयः 'हा कृष्ण द्वारकावास क्वासि यादवनन्दने'त्येवंरूपेण व्याहर्तव्यः (आह्वातव्यः) यस्मिन् तत्तथोक्तं तस्मिन्।(या). It refers to Draupadī's calling Lord Kṛṣṇa to rescue her. But टि. adds that she acted in that way only to instruct people at large to seek protection always from Lord

Kṛṣṇa. For herself, it was not necessary to call Kṛṣṇa because as she was always fully devoted to Him, it was impossible for Duśśāsana to harm her in any manner. III. **ईरार्धतनुत्वात्** - **ईर** = Vāyu = Bhīma. Here it is stated that as Draupadī was the half (wife) of Bhīma, none except Bhīma can contact her. But it is a fact that she was the wife of five Pāṇḍavas and had contacted the other four Pāṇḍavas. Then how to solve this विरोधाभास or apparent contradiction? The commentators have explained satisfactorily. *Read* : (i) ननु कथमिदं घटते युधिष्ठिरादीनामपि तद्भर्तृत्वेन प्रसिद्धत्वादित्यतः। **ईरार्द्धतनुत्वादिति।** ईरेण वायुना आसमन्तात् ऋद्धा समृद्धा तदाविष्टा तनुर्येषां ते ईरार्द्धतनवः तेषां भावस्तत्त्वं तस्मात्। कोऽर्थः। युधिष्ठिरादिषु सौम्यादिरूपेण प्रविष्टो मरुत् तद्भार्याभिः साकं स्वीयां भार्यां द्रौपदीं बुभुजे। युधिष्ठिरादयस्तु द्रौपदीदेहगताः स्वस्वभार्या एव बुभुजिरे। ननु कथमिदं घटते। द्रौपद्यभिमतदेहस्य युधिष्ठिरादिपरामर्शे तेषां महादोषप्राप्तेः। तथा नीचपुरुषपरामर्शे कृष्णाया अपि महादोषप्राप्तेः। उच्यते। तद्दोषपरिहारार्थमेव ईरार्द्धतनुत्वादित्युक्तम्। ईरो तेष्वाविष्टो भारतीविषये तेषां बुद्धिं विमोह्य स्वस्वभार्याविषय एव बुद्धिं संपाद्य भोगं कृतवान्। अतो न दोषप्राप्तिः। यदा बुद्धिमोहः संपादितः तदा अन्यदेहवत् एवायं देहो जातः। तथा च तद्भार्याभिमतदेहेन तत्तद्दिनक्लृप्तेन युधिष्ठिरादीनां भोगो न तु भारतीदेहेन। तथा च बुद्धिमोहे न परामर्शदोषः। यथा मुद्गलदेहे मुद्गलस्य तद्बुद्धेर्वायुना मोहितत्वाद्बुद्धिदोषनिमित्तं, यथा दुर्योधनभार्यायामपत्यमुत्पाद्य दुर्योधनवंशं अविच्छिन्नं करिष्यामीति बुद्ध्यैवाश्वत्थाम्नो ब्रह्मचर्याच्च्युतिः।(टि). (ii) **अपिर्विरोधाभासपरिहारार्थः।** अन्यस्त्रीभिरेकदेहत्वात्परपुरुषभोगकाले अस्याः जाग्रदवस्थात्वात्कथं परपुरुषो नापैनामिति विरोधाभासः। परिहारस्तु तत्पुरुषगतमारुतः तद्भार्यागां वाणीमेति अतो न विरोधः।(त). (iii) किं च यां द्रौपदीं **ईरार्धतनुत्वात्** वायुभार्यात्वात्। **भीमादृतेऽन्यो** ना पुमान् कोऽपि युधिष्ठिरादिर्नाप। अन्यभार्याप्राप्तिरन्यस्य प्रायेण नास्त्येवातोऽत्र को विशेष इत्यत उक्तम्। **अपीति।** अन्यभार्याभिरेकदेहामिति शेषः। तथा चैतादृश्या अन्यपुरुषप्राप्तिः संभावितैव। तथाप्यन्यो नापेत्यनेन सुस्थिरपातिव्रत्यमहिमा लभ्यत इति भावः। उपलक्षणमेतत्। याः श्यामलाद्याः अन्यभार्याः द्रौपदीदेहस्थाः तास्तु युधिष्ठिरादिगतो वायुः स्वयं बुभुज इति ग्राह्यम्।

तथा च द्रौपद्या इतराभ्यो विशेषलाभः।(म). नापाद्भीमात् is split up in two ways. I. **न+आप+आत्+भीमात्** The sentence is - **आत्** हरिनियमात् **भीमात्** ऋते **ना** अपि **न** **आप** = Due to Lord's command none except Bhīma can contact Draupadī. II. **ना+अपात्+भीमात्**. ना is included in the above sentence. आत् is taken from I above. So the sentence is आत् अपात् भीमात् - Because of the will of the Lord denoted by अ who does not have anyone as His Protector (अ+प) and who is terrible (भीम) to enemies. *Read* : (i) नन्विदं कस्मात्कल्प्यत इत्यत आह **आदिति**। अकारेणाकारवाच्यहरिनियमो लक्ष्यते। तथा च **आत्** हरिनियमात् अथवा **आत्** तस्मात् प्रसिद्धाद्धरिनियमात्। कीदृशो नियमो वायु विना भारत्या नान्यो भर्तेति। कीदृशान्नियमात्। **अपात्**। न विद्यते वायुं विना पः पतिः भर्ता यस्य भारतीचेतनस्य स अपः तस्मात्। पुनः कीदृशात् **भीमात्** अतिभयंकरात्। अथवा **अपात्** न विद्यते पः पतिः हरिं विना यस्य नियमस्य सोऽपः तस्मात्। केनाप्यन्यथाकर्तुमशक्यत्वादित्यर्थः।(टि). (ii) ननु पार्वत्यादीनां रुद्राद्यर्ध-देहत्वेऽपि यथाऽन्यपुरुषप्राप्यत्वं तथा द्रौपद्या अपि किं न स्यादित्यत उक्तम् **अपात् भीमात् आत्** इति। न विद्यते पः पालकः यस्य सः अपः तस्मात्। भीमात् शत्रुभयङ्करात्। आत् अकारशब्दवाच्यत्वात् हरेस्सकाशात् (सङ्कल्पात्) त्वां नान्यो मारुतात्स्पृशेदिति हरिकृतनियमादिति यावत्। हरिकृतनियमोऽन्यैरनुल्लंघ्य इति दर्शयितुं अपाद्भीमादिति तस्य हरेर्विशेषणद्वयमिति ज्ञातव्यम्।(या). (iii) अपात् भीमात् आत्। न विद्यते पः पालको यस्य। अः इति ब्रह्म। सत्यसंकल्पस्य भगवतः संकल्पादेवेत्यर्थः।(ब). The म.ता.नि. narrates : विकृष्यमाणे वसने तु कृष्णा सस्मार कृष्णं सुविशेषतोऽपि। तदान्यदासीद्वसनं च तस्या दिव्यं सुसूक्ष्मं कनकावदातम्॥(२१.३६०) भीमस्तु दौर्योधनमेव सद्म प्रपेदिवानूर्जितवीर्यलब्धम्। कृष्णासहायः सुरराजयोग्यानभुङ्क्त भोगान्युव-राज एव॥ कृष्णा च पार्थांश्चतुरो विहाय सुव्यक्तसारस्वतशुद्धभावा। रराज राजावरजेन नित्यमनन्ययोगेन शिखेव वह्नेः॥(३०.७-८) **[आद्यन्त्ययमकम्]**

53) (पदच्छेदः) **यां। स्प्रष्टुं। इच्छन्तं। अजातशत्रुं। न्यवारयत्। स्वःस्थं। अजातशत्रुं। शंरूपा (प्य)ने। नित्यरतेः। इयं। श्रीः। इति। स्म। देवेट्। यदितेः। इयं। श्रीः।**

A question may be asked : "How to know that Draupadī was untouchable for other four Pāṇḍavas ?". This verse gives the reply. When Yudhiṣṭhira went to heaven and wanted to touch Draupadī, Indra prevented him. Because in the worldly existence Draupadī had given shelter to Śyāmalā, Śacī and Uṣā, wives respectively of Yudhiṣṭhira, Arjuna and Nakula-Sahadeva. In the original form Śyāmalā is the wife of Yama, Śacī of Indra, and Uṣā of Aśvins. But in heaven, Draupadī was in her pure form of Bhāratī, the spouse of god Vāyu and so was touchable only to Bhīma and not to others. I. **अजातशत्रुम्** - a) Yudhiṣṭhira. b) न जातः शत्रुर्यस्य स तथा तम् (या). Having no enemies born. This is the popular dissolution of the compound. But there are three more interpretations : (i) (अ) अजात-कामादिवैरिणम्।(टि). (आ) जययोऽरभेदात् अयाताः अन्तःशत्रवो यस्य स तथा तम्।(ति). Who has no internal enemies like *kāma* (passion). (ii) आत् वेदव्यासात् जाताः शत्रवो दुर्योधनादयो यस्य स तथा तम्। वेदव्यासेन यदि घृतपूर्णकुम्भेषु निधापितास्तर्ह्येव जाताः सन्तो राज्यापहारादिकं कृतवन्तो युधिष्ठिरस्य शत्रवो जाताः एवंभूतं युधिष्ठिरम्। (टि). Who had enemies (शत्रु) in the form of Kauravas like Duryodhana who could get birth (जात) because of Vedavyāsa(अ). (iii) आत् विष्णोर्जातोऽजातः कामः स एव शत्रु-रन्तररिर्यस्यासौ तथोक्तस्तम्। पूर्वसंस्कारादेव कामोद्रेकवन्तमित्यर्थः।(भ). Yudhiṣṭhira's passion (अजात=काम) became aroused and he wanted to touch Draupadī, due to his past impressions. This interpretation seems to be pertinent here. **शंरूपा(प्य)ने** - (i) **शंरूप्यने** शं सुखं रूपं यस्य स शंरूपी सचानश्च तस्मिन्।(टि). (ii) **शंरूपाने** शंरूपः सुखात्मकश्चासावनो वायुश्च शंरूपानस्तस्मिन्।(भ) (या). In Vāyu of the form of bliss. **इयं श्रीः** - a) (i) **इयं** भारती श्रीरिति वेदादिषु गीयत इत्यतो नेयमन्ययोग्येत्यभिप्रायेण न्यवारयदित्यर्थः। एतेन शे रमत इति श्रीरिति

निर्वचनं कृतं भवति।(भ). (ii) **शंरूपाने** ... **नित्यरतेः** नित्यं नियमेन रतेः रमणात्। **इयं** भारती। **श्रीः** श्रीशब्दवाच्येति हेतोरित्यर्थः। अनेन तस्याः अन्यस्पर्शायोग्यत्वादिति हेतुरुक्त इति ज्ञातव्यम्।(या). As Bhāratī is always attached (र) to Vāyu (श) she is called श्रीः. Now a question is asked and answered :- ननु तर्हि पूर्वं युधिष्ठिरः कथमिमां स्पृष्टवानित्यत उक्तम् - **यदितेरियं श्रीरिति**। यातीति यत् वायुः तेन इतेः सम्बन्धात्। युधिष्ठिरादीनामिति शेषः। **इयं** द्रौपदी। **श्रीः** संश्रिता श्यामळादिभिरिति शेषः। तथा च पूर्वं युधिष्ठिरादिषु वायुराविष्ट आसीदिति स्वयमपि श्यामळाद्यन्विता सती स्पर्शयोग्याऽसीदित्यर्थः। इदानीं तु न तथेत्याशयेनाप्याह **इयं श्रीरिति**। इयं श्रीरित्यावर्तते। इशब्दः कामवाची तथा च इना कामेन इच्छया युधिष्ठिरादिकं परित्यज्य यातीति इयः इयमेव वायुमेव श्रीः श्रिता अन्यादेवीः परित्यज्येति शेषः। अतो न्यवारयदिति भावः।(या) [यत् = Vāyu; इतेः = due to the contact of; इयं = Draupadī; श्रीः = was resorted to by श्यामला and others]. [इयं श्रीः is repeated and interpreted : इयं = वायुम् = Pure Vāyu not connected with Yudhiṣṭhira and others; श्रीः = श्रिता = Pure Draupadī resorted to Vāyu alone]. In the worldly existence when Yudhiṣṭhira and others **contacted Draupadī, Vāyu existing in them contacted her; whereas they contacted their respective wives** existing in her. In the heaven Vāyu and Bhāratī were in their pure forms unconnected with others. *Read* also : (i) **अदितेरियं श्रीरिति** - एतीति यन् सर्वदा गच्छन् सदागतिः तद्रतेः तद्विशेषाभिसंयोगात् अन्यदेहानाविष्टमरुदभिसंयोगात्। **इयं** इना कामेन इच्छयेति यावत् यातीति इयो वायुरुक्तः तं इयं मुख्यप्राणं । **श्रीः** श्रयते सा श्रीः संश्रिता परा। कोऽर्थः। यदा भूमावतिष्ठत् द्रौपदी, तदा युष्मद्भार्यया युक्ताऽभूदिति युष्मान् आविष्टो मरुत् बुभुजे। इदानीं युष्मद्भार्यायोगाभावात् शुद्धा भारतीदेहेन स्थितेति युष्मदनाविष्टः स्वेनैव देहेन मुख्यप्राण एनां भुङ्क्ते। एवं सति कथं भवद्योगमर्हति इयं इति न्यवारयत्।(टि). (ii) किंचेयं भारती **इयं श्रीरित्यपि** गीयते। एतेन इना कामेन स्वेच्छयैव वा याति प्रवर्तत इति इयो मुख्यप्राणस्तं श्रयत इति **इयं श्रीरिति** निर्वचनं कृतं भवति।(भ). **यदितेः** is also interpreted in a

slight different way : याति सर्वत्र गच्छति अवगच्छति इति सर्वज्ञः वायुः। तस्य इतिः (इण् गतौ क्तिन् प्रत्ययः) सम्बन्धः। तस्याः।(वि). The म.ता.नि. narrates : स तु प्रपश्यन् स्वजनं समस्तं स्वमूलरूपातिसमीपसंस्थं। ददर्श भीमं च मरुत्समीपे मध्ये ज्वलन्तं मरुतां गणस्य॥ ददर्श कृष्णामपि तत्समीपे श्रिया ज्वलन्तीं समतीत्य चान्याः। स्प्रष्टुं च संस्कारवशादियेष निषिध्य तं प्राह सुराधिराजः॥ एषा हि साक्षाज्जगतां प्रियस्य प्राणात्मनो जीववरेश्वरस्य। प्राणप्रिया श्रीरिति नाम यस्याः शमात्मकेऽस्मिन्नमते सदैका॥ युष्मच्चतुर्देहगतस्य वायोः वायुप्रिया भीमतनोस्तथैव। भोगाय स्रष्टा पुरुषोत्तमेन युष्मत्प्रियार्थं भवतां च दारैः॥ प्रीतिस्ततो ह्यभ्यधिका बभूव भीमस्य चास्यास्तदनु स्म पार्थे। ततो भवत्स्वेव यथाक्रमेण गुणानुसारेण समीरणस्य॥ एषा हि सा शुद्धतनुः प्रजाता शच्यादियोगापगताग्र्यदेहा। यूयं च सर्वे मरुतो विशेषसंयोगहीनाः स्वशरीरसंस्थाः॥(३२.११४-११९) अन्वेनं भारती साक्षाद्वेदिमध्यात्समुत्थिता। प्राणो हि भरतो नाम सर्वस्य भरणात् श्रुतः॥ तद्भार्या भारती नाम वेदरूपा सरस्वती। शंरूपमाश्रिता वायुं श्रीरित्येव च कीर्तिता॥ आवेशयुक्ता शच्याश्च श्यामलायास्तथोषसः। ताश्चेन्द्रधर्मनासत्यसंश्रयात् श्रिय ईरिताः॥ ...उमांशयुक्ताऽतितरां सर्वलक्षणसंयुता। पूर्वं ह्युमा च देव्यस्ताः कदाचिद्भर्तृभिर्युताः॥ विलासं दर्शयामासुर्ब्रह्मणः पश्यतोऽधिकम्। शशाप तास्तदा ब्रह्मा मानुषीं योनिमाप्स्यथ॥ तत्रान्यगाश्च भवतेत्येवं शप्ताः सुराङ्गनाः। विचार्य भारतीमेत्य सर्वमस्यै निवेद्य च॥ सहस्रवत्सरं चैनां शुश्रूषित्वा बभाषिरे। देवी नो मानुषं प्राप्यमन्यगात्वं च सर्वथा॥ तथापि मारुतादन्यं न स्पृशेम कथञ्चन॥ ... अतस्त्वयैकदेहान्नो नान्य आप्नोति मारुतात्॥ इतीरते तथेत्युक्त्वा पार्वत्यादियुतैव सा॥... एषा सा द्रौपदी नाम पञ्चदेवीतनुर्भवेत्॥ (१८-१०३-५, १०८-१२, ११६-७, १४८) [पादान्त्ययमक]

54) (पदच्छेदः) मनसां। अनसा। अमनसा। मनसा। यं। अनन्तं। अजस्रं। अवेत्। अनु। या। (अनुया)। विलयं। विलयं। विः। अयं। विलयम्(त्)। निखिलं। तु। अशुभं। प्रचकार। च। या। (यः)॥

This refers to the perfect purity and chastity of Draupadī who is always one with Vāyu in

remembering and meditating upon Lord Viṣṇu. Hence Indra prevented Yudhiṣṭhira from touching her as stated in the previous verse. Here the first quarter is split up as - **मनसाम्+अनसा+अमनसा+मनसा.** 1) Draupadī remembered (अवेत्) मनसा (with pure or desireless mind) 2) Vāyu is support or shelter (अनसा) of मनसाम् (all minds). 3) Vāyu is नसा (born from the nose) of अम (Infinite Lord). *Read* : या देवी द्योतनादेवी विद्युन्नाम्नी भारती मनसां सर्वमनसां **अनसा** शकटेन गौण्या वृत्त्या आश्रयेण विद्युत्पतिना स्वभर्त्रा वायुना सह। **यम् अनन्तं** देशतः कालतो गुणतश्चान्तररहितं भगवन्तं नारायणं। **अजस्रं** सदा। मनसा स्वेन मनसा। **अवेत्** सस्मार। स्मृतवती ध्यातवती च। ...कथंभूतेन प्राणेन। **अमनसा।** न विद्यते मा मानं परिमितिर्यस्य सोऽमः अनन्त इति यावत्। तन्नसा तस्य नासातो जातः। 'नासिकाभ्यां प्राणः प्राणाद्वायुरि'ति (ऐत.उ.१.१.३.) श्रुतेः।(टि). (ii) या. states specifically the purity and chastity of Draupadī : किञ्च या नारी स्वभर्त्रसन्निहिता विषयासक्त्या हरिविस्मरणशीला च तस्या एव कथंचित्परपुरुषसंयोगादिजनितं पापं सम्भावितं। द्रौपदी च न तथा किन्तु स्वभर्त्रा वायुना सह सर्वदा हरिस्मरणशीलैव। अतो न तस्याः धर्मादिसंयोगजनितं पापं सम्भावितमित्याशयेनाह **मनसेति। या च** द्रौपदी च। यं वायुं। **अनुया** ...तेन वायुना सह **मनसा** निष्काममनसैव **अनन्तं** हरिं। **अजस्रं** निरन्तरं। अवेत् अस्मरत्। तां स्प्रष्टुमिच्छन्तं न्यवारयदिति पूर्वेण सम्बन्धः। कथंभूतेन वायुना। **मनसां** सर्वमनसां। **अनसा** शकटेन तत्स्थानीयेनेत्यर्थः। सर्वमनसामाश्रयेणेति यावत्। पुनः कथंभूतेन। **अमनसा** न विद्यते मा मर्यादा त्रिविधपरिच्छित्तिः यस्य **सोऽमः अनन्तः** तस्य नस् नासिका आघ्राणकर्त्री यस्य स तथा **तेन विष्णुना** स्नेहवशादवघ्रातेनेति यावत्।(या). [According to ब. **Vāyu** is described here as परमज्ञानिन् and लोकपितामह. **मनसां** मनसा अनसां अनसेति च्छेदोऽन्वयश्च। 'मनु अवबोधने' अनसामप्यनसा = लोकपितॄणामपि जनकेन। 'अनस् = A parent (father or mother)' (V.S.Apte).] **अमनसा** is also interpreted as **Vāyu** the most beloved of the Infinite Lord : **अमनसा** अमोऽपरिमितो भगवान् तस्य नस् नासा मूर्धाघ्राणनकर्त्री यस्यासौ तथोक्तस्तेन

तदत्यन्तप्रियेणेत्यर्थः।(भ). Note also the following meanings : 1) **अनसा** - शकटो ह्यनः।(टी). **शकटेन गौण्या** वृत्या आश्रयेण।(टि) शकटेन तत्स्थानीयेनेत्यर्थः। **सर्वमनसामाश्रयेणेति** यावत्।(या). The word **अनस्** literally means **शकट** or **cart**. Then it implies आश्रय, support or shelter. 2) **अनन्तम्** - हरिं।(या) देशतः कालतो गुणतश्चान्तरहितं भगवन्तं नारायणं।... अत्र ध्याने अनन्तगुणोपसंहृतिरनन्तरूपेषु तथैवानन्तगुणतादृष्टिस्तन्मध्ये व्याप्तिदृष्टौ [("त्रैगुण्यान्परतः पश्येद्व्याप्तं शतगुणं हरिम्" इत्यनुव्याख्याने (३-४) ल.टि] त्रैगुण्यात्परतः शतं दृष्टिरित्येवं प्रकारेण दृष्ट्वा **सस्मारेत्यर्थः**।(टि). Lord Viṣṇu should be remembered, as done by Draupadī, as Infinite in time, space and qualities. 3) **अनुया** - (i) अनुसृत्य यातीत्यनुया। तदनुसारिणीति यावत्।(या). (ii) **या अनु** अनुसारिणी सामर्थ्यात्तस्य प्राणस्येति **शेषः**। अनेन अनन्तगुणोपसंहृतौ वायुभारत्योः साम्यप्राप्तौ विशेषतः क्रियोपसंहर्तुर्मुख्यप्राणात् सामान्यक्रियोपसंहर्त्र्या भारत्यास्तारतम्यमुक्तं भवति। अन्यथानुसारित्वायोगात्।(टि) (iii) **या** द्रौपदी **अनु** वायुमनु कक्षीकृत्य।(ना). All this means that Draupadī meditates upon Lord Viṣṇu, following Vāyu, who always meditates upon Him fully and perfectly. The second quarter is also read as **यमनन्तमजं तमवेदनुया** and interpreted as **तं परमात्मानं अजं अनादिं अनन्तं च अवेत्**। सर्वदाऽविलुप्तज्ञानेत्यर्थः। अजस्रमवेदिति क्वचित्पाठः। तदाऽनन्तं देशतः कालतः गुणतश्चापरिच्छिन्नं सर्वदा व्यजानादित्यर्थः।(ना). Here **अजं** (unborn, beginningless) is substituted for **अजस्रं** (always). There is no much difference in the meaning. The third quarter is split up as **विलयम्+विलयम्+विः+अयम्+विलयम्**(त) and interpreted together with the fourth quarter as follows :- (i) **यः अयं** श्रुतिसिद्धः **विः** विष्णुः **अशुभं** स्मर्तुरिति शेषः। **विलयं** विः विशिष्टो निर्मूलो लयो नाशो यस्य तत्तथा एवंभूतम्। **प्रचकार**। कीदृशं तं **विलयं** विशिष्टो लयो रयो वेगो यस्य विशिष्टरयसंयुक्तम्। **निखिलम्** अखिलं **विलयं** विर्विशिष्टो लयो यस्मात्स तथा तं मुख्यलयकर्तारम्। तथा चैतद्विशेषेणविशिष्टतया सदा भगवन्तं वेत्तीत्युक्तं भवति।(टि). (ii) **विलयं** वबयोरभेदात् बिलं संसारबिलं

यापयतीति विलयं एवंविधं **निखिलं** सर्वमशुभम्।(त). (iii) अत एव **विलयत्** बिलयत्। नरकादि**बिलयापक**मित्यर्थः।(भ). (iv) **यः अयं विः** परमात्मा 'विः पक्षिपरमात्मनो'रित्यभिधानात्। **निखिलमशुभं। विलयं** विशिष्टः आत्यन्तिकः लयः यस्येति एतादृशं। **चकार** कृतवान्। **सर्वमपि** स्वभक्तानिष्टं नाशितवान्। कीदृशं **विलयं** बिलं हृदयगुहा तस्यां यातीत्येतादृशं। बिलं संसारगुहां **यापयतीति** वा।(ना). (v) या इत्यस्य लिङ्गव्यत्ययेनावृत्तिर्विवक्षिता। विलयन्नित्यत्र रलयोरभेदेन विः अयमिति पदच्छेदो विवक्षितः। तथा **च** या **यः**। **अयं** बुद्धिस्थः। **विः** विष्णुः। **नु** विशेषेण लयो यस्य तत्तथा विनष्टमिति यावत्। सत् **प्रचकार** तमित्यन्वयः। कथंभूतमशुभं। **विलयं** विशिष्टो लयो रयः दुःखदाने वेगो यस्य तत्तथा। पुनः कथंभूतं। **निखिलं** ज्ञानभक्त्यादिकं। **विलयत्** विलापयत् नाशयदित्यर्थः।(या). Different interpretations are : a) **यः अयं विः निखिलं विलयं विलयं च अशुभं तु विलयं प्रचकार** (तं सस्मार) [विः (Viṣṇu)+ अयं (that) = विरयं = विलयं निखिलं (entire) qualifies अशुभ (sin). विलयं = वि (specific = complete) लयं (destruction). विलयं=वि (special) लय (=रय=speed). विलयं = विल (बिल=hole) यं (goes=takes)] Hence, Draupadī meditated upon that Lord Viṣṇu who causes complete destruction of entire sin (of the devotees) which takes them to the hole in the form of संसार with much speed. Now निखिलं is understood as qualifying विलयं referring to Lord Viṣṇu by टि. It means Draupadī meditated upon Viṣṇu as the real Destroyer of all. **विलयं+विलयं+विः+अयं+विलयं+निखिलं+तु+अशुभं+प्रचकार+च+या** (यः). त. reads one विलयं as बिलयं and understands it as taking to the hole in the form of worldly bondage. भ. reads विलयन्निखिलं as विलयत् (=बिलयत्) निखिलं and understands बिलयत् as taking one to holes in the form of hells. या. reads निखिलं as qualifying विलयत् and interprets - 'the sin which destroys all merits like knowledge, devotion and others'. टि. has explained the significance of तु – तुशब्दात् **आत्मविष्टोपहारिभिः** = स्वपरिचारिकैः गरुडशेषरुद्रादिभिः

सहेत्युक्तं भवति।(टि). That is, the word तु stands for 'together with His attendants like Garuḍa, Śeṣa and Rudra". In this verse there are four मनसाs in the first quarter and four विलयंs in the third quarter. That is, मनसा and विलयं are repeated four times. But they possess different meanings as shown above. So we have **पदावृत्तियमक**. The म.ता.नि. narrates (अ.२) : ततः पश्चाद् द्रौपदी च सर्वाभ्यो रूपतो वरा॥ भूभारक्षपणे साक्षादङ्गं भीमवदीशितुः। हन्ता च वैरहेतुश्च भीमः पापजनस्य तु॥ द्रौपदी वैरहेतुः सा तस्माद्भीमादनन्तरा॥ ...यस्याः प्रसादात्परमं विदन्ति शेषः सुपर्णो गिरिशः सुरेन्द्रः। माता च यैषां प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ॥ या मारुताद्गर्भमधत्त पूर्वं शेषं सुपर्णं गिरिशं सुरेन्द्रम्। चतुर्मुखांश्चतुरः कुमारान् सा द्रौपदी नाम बभूव भूमौ॥ (४१-४३, १७१-१७२) **[पादव्यासयमक / पदावृत्तियमक]**

55) (पदच्छेदः) **सः। अगात्। दूतमुखेन। प्रभुणा। इदं। वर्तते। यत्। ऊतं। उखेन। पार्थार्थे। बहुतनुतां। यत्र। प्र(प्रा) काशयत्। स्वयं। सबहुतनुताम्॥**

This refers to Kṛṣṇa's going to Duryodhana's assembly as the messenger of Pāṇḍavas. Generally it is believed that Kṛṣṇa went to bring about peace and prevent the great war. But here the commentators have explained that He went to prove that Kauravas were fit to be killed by Pāṇḍavas and to bring about their impending destruction. *Read* : (i) अतो दौत्यमुखेनासौ हन्तुमेव(ष) कुरूनगात्॥ (टी). (ii) यतो निजभक्ताः पाण्डवाः अतः **स** कृष्णो **दूतमुखेन** दौत्यमुखेन दौत्यरूपेण पाण्डवप्रेष्यरूपेण हन्तुमेव कुरून् **अगात्**। ननु दूतरूपेण स्वगमने कथं तेषां हननमिति उक्तं यत इति। यतस्तेषां कौरवाणां स्वमध्योत्थं स्वमध्यादुत्थं उत्थानं स्ववचनानादरेण तैरुत्थितं उत्थाय च स्वबन्धने विचारितं च, इति च = इत्यनेन प्रकारेण वध्यत्वं वधार्हत्वं तेषामानयन् तैः प्रापयन् स्वभक्तपाण्डवराज्यापहरणेन वधार्हत्वेऽपि भगवता वैषम्यपरिहाराय दूतरूपेण तेषां सकाशे गमिष्यामि,

तेभ्यो धर्मसंहितां वदिष्यामि ततो मद्वचनाश्रवणेन मद्बन्धविचारणेन च पूर्णापराधिनस्तान् कृत्वा पाण्डवैर्वधं तेषां संपादयिष्यामीति दौत्यमवलम्बितम्।(टि). (iii) सः श्रीकृष्णः। दूतमुखेन दौत्यमुखेन (दूतत्वस्य प्रदर्शनेन) अगात्। कुरून् हन्तुमिति शेषः। अथवा तेषां वध्यत्व(मध्यस्थत्व)निश्चयायेति शेषः।(या.). Kṛṣṇa intended to exhibit the worst type of arrogance and haughtiness of Kauravas and to prove that they deserved capital punishment wholly and solely. The part प्रभुणेदं वर्तते यदूतमुखेन is differently interpreted : a) (यत् इदं (जगत्) प्रभुणा उखेन ऊतं वर्तते।) येन प्रभुणा समर्थेन कृष्णेन यत् यस्मात् इदं जगत् ऊतं रक्ष्यत्वादिना अभिप्रेतं चित्ते कृतम्। यद्वा ऊतं रक्षितं अवते रूपमेतत्। अव रक्षणे इति पठन्ति। एवं भूतं सद् वर्तते। नित्यं वर्तते स्वव्यापारे प्रवर्तते स्म। केन कारणेन रक्षितं। उखेन उखगताविति धातोः उच्चज्ञानेन। यद्वा उत्कृष्टेन खेन ब्रह्मस्वरूपेण ज्ञानेन खं ब्रह्मेति श्रुतेः। ज्ञानशब्दस्य ब्रह्मवाचिकत्वात् ब्रह्मणश्च ज्ञानरूपत्वात्। विज्ञानमानन्दं ब्रह्मेति श्रुतेः॥(टि). This whole world exists being protected by the Lord by His excellent and perfect knowledge. b) (यत् इदं (पाण्डवकुलं) प्रभुणा उखेन ऊतं वर्तते।) यत् येन। प्रभुणा। ऊतं रक्षितं। इदं जगत् (पाण्डवकुलं वा) वर्तते प्रवर्तते। स इत्यन्वयः। अनेन रक्षितजगन्मध्ये कुरूणामप्रविष्टोक्तिबलेन तेषां वध्यत्वनिश्चयो लब्ध इति ज्ञातव्यम्। कथंभूतेन प्रभुणा। उखेन (उ उत्कृष्टं खं ज्ञानं यस्य स तेन) उच्चखेन उच्चज्ञानेन।(या) Pāṇḍavas function being protected by the Lord of excellent knowledge. c) [यत् इदं (कौरवकुलं) पार्थार्थे प्रभुणा उखेन ऊतं वर्तते।] (i) यद्वा तदा येन कृष्णेन यत् कौरवं कुलं ऊतं रक्षितम्। किमर्थं पार्थार्थे पाण्डवानां भूकंटककौरवसंहरणरूप-स्वसेवार्थम्। यदि भगवान् यदा तैः स्वबन्धनविचारः कृतः तदैव हन्यात् कथं तर्हि पाण्डवानां भूमाववतारप्रयोजनसिद्धिः स्यात् एवंभूतं सद्वर्तते किं(कं)चित्कालमित्यर्थः।(टि) (ii) अथवा ऊतं स्वामिप्रेतं इदं कौरवकुलं। पार्थार्थे पार्थसन्तानार्थे। ऊतं रक्षितमिति व्याख्येयं।(या). Kauravas exist temporarily being protected by the Lord for the sake of Pāṇḍavas to secure the credit of destroying them. It is also to receive service from Pāṇḍavas in

the form of lessening the burden of the earth, by destroying the wicked Kauravas. **बहुतनुतां यत्र प्र(प्रा)काशयत् स्वयं सबहुतनुताम्** refers to Kṛṣṇa's showing his **विश्वरूप**. It is also differently interpreted : a) **यत्र** कौरवसभामध्ये। **स** भगवान् कृष्णः। **बहुतनुतां** अनन्ततनुतां विश्वरूपतां **प्रकाशयत्** प्राकाशयत्। अडभावश्छान्दसः। किमर्थं। **पार्थार्थे** पार्यते व्याप्यते जगदनेनेति पार्थः। प्रापूरणे इत्यतः करणे थः पार्थः = व्यापक इति अर्थो ज्ञानं। ऋगतावित्यतो भावे थः। ततश्च अरणम् अर्थः ज्ञानमिति यावत्। स्वव्यापकत्वज्ञात्यै। तदपि किमर्थम्? अबन्धयोग्यताज्ञात्यै। नहि व्यापकं वस्तु बन्धयोग्यम्। मौढ्याद्यूयं मद्बन्धनायाध्यवसिता इति भावः। कीदृशीं बहुतनुतां। **सबहुतनुतां** सबेषु वबयोः सावर्ण्यात् सवेषु सर्वयज्ञेषु कायिकादिषु सोमेष्ट्यादिरूपेषु **हुतां** इष्टां आध्यात्मिकादिरूपेण पृथक्स्थितेन च रूपेण गृहीताऽऽहुत्यादिरूपपूजां सतीं **नुतां** स्तुतां उपलक्षणमेतत् उद्गीतां च। तदुक्तम् 'एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे' इति गीतायाम् (४-३२)। श्रुतौ च (ऐत.उ.) 'एतं ह्येव बह्वृचां महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा' इति।(टि) Here 1. बहुतनुता = [बहु = many, तनु = form;] having many forms; universal form. 2. पार्थार्थे = [पा = pervasive; अर्थ = knowledge; अर्थ = for the sake of.] For the sake of imparting knowledge of His all-pervasiveness. As All-pervasive, He cannot be tied up. 3) सबहुतनुता = [सब = सव = sacrifice; हुत = offering; नुत = praised.] The Lord is praised in all sacrificial offerings. This is interpreted as referring to Kṛṣṇa's showing His विश्वरूप to Arjuna at the beginning of the Mahābhārata war. ***Read*** : (i) किं च भगवान् कुरूनाज्ञाभङ्गेन वध्यान् संपाद्य पुनरुपप्लाव्यं गत्वा ततः कुरूक्षेत्रमागत्य युद्धसंनाहसंनद्धयोरुभयोः सेनयोर्मध्येऽर्जुनरथं स्थापयित्वा ततो नारायणद्विट्तदनुबन्धिनिग्रहं बन्धुस्नेहादधर्मत्वेनाशङ्क्य ततो निवृत्तार्जुनाय स्वातन्त्र्याखिलकर्तृत्वपूर्वाखिलगुणालयम् अनन्ततनुमात्मानं अदर्शयदित्यादिना **पार्थार्थे** अर्जुनार्थे यत्र **बहुतनुतां** विश्वरूपतां प्रकाशयदिति ग्रन्थो व्याख्यातः। टीकायां **यत्र** इत्यनूद्य यत्रापि इति व्याख्यातम्। ततश्चेत्थं योजना। **स्वयं** स्वतन्त्रः जगत्प्रभुः **यत्र** यत्रापि कुरुक्षेत्रेऽपि न

केवलकौरवसभामध्ये। यत्र कुत्र। यत् कुरूक्षेत्रं देवः अगात्। **कीदृशीं। बहुतनुतां** विश्वरूपतां **बहुतनुतां** बहूनां प्रत्येकं पूर्णानां। बहुः पूर्णायामिति धातोः। स्वातन्त्र्याखिलकर्तृत्वपूर्वाखिलगुणानां। तनुता आश्रयता यस्याः सा तां बहुतनुतामिति विग्रहः।(टि). Here according to टी, यत्र should be understood as यत्र कुत्रापि. The Lord is able to show His विश्वरूप wherever He wills. He showed it to Kauravas in their royal assembly and to Arjuna on the battle-field. **सबहुतनुता** is split up as स (Lord Kṛṣṇa) + बहु (पूर्णगुण) + तनुता(आश्रयता) - The Lord's universal form is the abode of infinite number of auspicious qualities each full in its entirety. The या. interprets in a little different manner : **यत्र** सैन्यद्वयमध्ये। **पार्थार्थे** अर्जुनाय। **बहुतनुतां** स्वस्य **विश्वरूपतां। प्राकाशयत्** प्रकटं कृतवान् इति वा। अत्र स्वस्यैव सर्वसंहर्तृत्वप्रदर्शनायेति शेषः। **स्वयं** स्वतन्त्रः। **स** इत्यस्य **विशेषणमिदं।** कथंभूतां बहुतनुतां। **सबहुतनुतां** बहुभिर्गुणैः तनुः विस्तृतिः तस्याः भावः बहुतनुता तया सहिता तामित्यर्थः।(या). Here **सबहुतनुता** is understood as बहुतनुतासहिता. His विश्वरूपता was one with vast expanse (तनु) of infinite (बहु) qualities. Note that **in the explanations given by the commentators some words have been read twice. So** या. **remarks** : अत्र ऊतं, पार्थार्थे, बहुतनुतां, यत्र, प्राकाशयत् इत्येतेषामावृत्तिः।(या). The म.ता.नि. (अ.२४) : इच्छताप्यखिलान् हन्तुं धार्तराष्ट्रान् दृढात्मना। भीमेनोक्तो वासुदेवो लोकसंग्रहणेच्छया॥ वधं तेषां धर्ममेव लोके ख्यापयितुं हरिः। आक्षिपन्निव भीमं तं युद्धाय प्रैरयद्दृढम्॥ ...अनन्तशक्तिः पुरुषोत्तमोऽसौ शक्तोऽपि दुर्योधनचित्तनिग्रहे। नैव व्यधादेनमथोक्तकारिणम् निपातयन्नन्धत-मस्यनन्तः ॥ (५२-३, ८३) **[पादान्त्ययमक]**

56) **(पदच्छेदः) गुरुकर्णनदीजादीन्। अवधीत्। चक्षुर्बलेन। जनदीजादी। इ (ईन्)। शक्त्या। निजया। परवान्। स्वजनान्। उद्रेचयन्। अनन्तया। अपरवान्॥**

This refers to Kṛṣṇa's famous statement : मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्। (गीता-११-३३). It is felt

that Bhīma, Arjuna and others brought about the destruction of Kauravas and their Army-chiefs like Bhīṣma, Droṇa, Karṇa and others. Hence, it is made clear that it was Lord Kṛṣṇa who destroyed them all, that too by His mere sight. **गुरुकर्णनदीजादीन्** = Droṇa, Karṇa, Bhīṣma and others. It is a fact that the proper order should have been Bhīṣma, Droṇa and Karṇa. So टि. explains : स्वरूपतारतम्यानुसारेणेयमुक्तिः। अथवा सेनानेतृत्वतारतम्यमनुसृत्य। क्रमस्त्वित्थम् भीष्मद्रोणकर्णादीन् इति। क्रमेण तेषां च सेनाप्रणेतृत्वात्तेनैव क्रमेण युद्धपतितत्वाच्च।(टि). Note : **चक्षुर्बलेन** दृष्ट्यैव **अवधीच्च**। न केवलं सारथ्यं कृतवानिति भावः।(टि). **दृष्टिसामर्थ्येन** हतवान्। 'परसैनिकायुरक्षणा हृतवती'ति वचनात्।(या). Is there any wonder in Kṛṣṇa's destroying them by mere sight? No. Because He is **जनदीजादी(न्)** - Devourer of even Brahmā and others at the time of *Mahāpralaya*. The term **जनदीजादी(न्)** is interpreted variously :- (i) जनद्या जातः जनदीजः (Brahmā born from Goddess Lakṣmī); तम् अत्तीति जननीजात् (Devourer of Brahmā) स चासौ इन् (Lord) च जनदीजादी। *Read* : 'जनदीजो विरिञ्चः। कथं 'जायमानः श्रियः सतः जनिताऽसौ महति यदिति जानती'ति जनदी प्रकृत्यन्तरमेतत्। सा चासौ ई च श्रीश्च सा जनदी सतः ब्रह्मणो जायमानः श्रियः जनिता जनयिता 'जनिता मन्त्र' इति निपातनात्। स्वात्मानमिति शेषः। क्व। महति महत्तत्वे। तथा च जनद्या जातो जनदीजः तदुक्तं 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' (गीताभाष्ये) इति। अव्यक्ताभिमानिन्याः श्रियो महत्तत्वाभिमानी विरिञ्चो जातः। अथवा सतः संकर्षणनाम्नो ब्रह्मणो जायमानः श्रियः प्रकृतिनाम्न्याः गायत्रीसावित्रीसरस्वतीति त्रिरूपायाः स्वपत्न्याः स्वात्मानं जनयति। तदप्युक्तम् 'गायत्री चैव सावित्री तथैव च सरस्वती। एवं त्रिरूपा प्रकृतिरि'त्यादौ। तथा च लक्ष्मीजो वा स्वभार्याजो वा विरिञ्चो जनदीजः तमत्तीति जनदीजात्। स चासौ इन् स्वामी च **जनदीजादी** नृहरिः प्रलय इति शेषः। कोऽर्थः। येन जगज्जनकविरिञ्चोऽपि स्वपुत्रो नृहरिरूपेण भक्ष्यते तस्य किं कौरववध इति।(टि) (ii) **जननीजादी** तृतीयोऽतिशये यतोऽतो दीकारे नीकारो बोध्यः। तथा च

जननी लोकमाता ततो जायत इति जनदीजो विधिः तमप्यन्तेऽत्तीति जनदीजादी। ननु जनयित्र्याः जननीशब्दप्रयोगः कथमिति चेत् जनिता सोम इत्यादिवदिति।(त). म has explained the significance of the use of **जनदी for** जननी : जननी जननवान् जायमानः स एव जनदी तृतीयोऽतिशय इति सूत्रात् इतरेभ्यो जननेऽतिशयप्रदर्शनाय नकारस्थाने दकारः। न हीतरवद्विरिञ्चजननम्। भगवन्नाभिकमलजातत्वात्। अथवा जननी रुद्रादिजननवान् तत्सृष्टिकर्ता। स एव जनदी। न हि कुलालादिसृष्टिवत्तस्य सृष्टिः किंतु विशिष्टैवेति ज्ञापनाय दकारः। स चासावीजो लक्ष्मीपुत्रश्चेति जनदीजो विरिञ्चस्तमप्यन्तेऽत्तीति तथोक्त इत्यर्थः।(भ) ना. understands जनदी as Rudra and ज as Brahmā : जनान् दीयते क्षिणोतीति जनदीः जगत्क्षयकर्तृत्वात् रुद्रः। दीङ्क्षये दैवादिकः क्विबन्तः। तं जनयत्यसौ जनदीजः ब्रह्मा तमप्यत्तीति। यद्वा दीश्च जश्च दीजौ जनदीजौ जनानां संहारजनकौ रुद्रविरिञ्ची। तावप्यत्तीति। ग्रह्यादित्वात् 'नन्दिग्रहिपचारिभ्यः' इत्यादिना णिनिः।(ना). Note : अत्र **जनदीजादी** इत्येव प्राचीनटीकाभिमतः। यादुपत्ये तु **जनीजादीन्** इति पाठमङ्गीकृत्य **जनदीजादी, ईन्,** इति छेदमाश्रित्य ईं लक्ष्मीं नयन् स्वजनान् प्रापयन्निति व्याख्यातम्।(भ). So या. reads as जनदीजादीन् and explains : कथंभूतः कृष्णः। **जनदीजादी।** अत्र नकारस्थाने दकारस्तृतीयोऽतिशयार्थः। तथा च जननी लोकमाता रमा तस्यां जायत इति जननीजः विरिंचः तस्य अदः अदनं अस्यास्तीति जननीजादी। प्रलयकाले विरिंचमपि यः संहरति तस्य गुरुकर्णनदीजादि-हननं तुच्छमेवेति भावः। अत एवोक्तं चक्षुर्बलेनेति। पुनः कथंभूतः। ईन् ईकारो लक्ष्मीवाची। तथा च स्वजनान् ईं लक्ष्मीं नयन् प्रापयन्।(या). So **जनदीजादी+ईन्** = Devourer of Brahmā and Bestower of wealth. The words **परवान्** and **अपरवान्** are interpreted variously understanding the word **पर** as firstly 'enemy' and secondly 'superior.' (i) पुनः कीदृशः तद्विरोधिभिः स्वभक्तविरोधिभिः **परवान्** शत्रुमान् स्वतः = स्वभक्तैस्तु **अपरवान्** अशत्रुमान् नित्यं। कुतः 'निरनिष्टो निरवद्य' इति श्रुतेः।(टि). **(ii) परवान्** शत्रुहंतृत्वात् शत्रुसहित इत्युच्यमानः। वस्तुतस्तु **अपरवान् शत्रुरहितः।** द्वेषादिदोषाभावेन द्वेष्यशत्रूणामप्यभावात्। ततश्च भक्तवत्सलतयैव तस्य दुर्योधनादिवैरिहंतृत्वं न स्वप्रयोजनायेत्युक्तं भवति।(या). The Lord by

Himself has no enemies. But He has enemies in the form of those who are His devotees' enemies. टि. has understood the second पर as 'superior' : **निजया** **स्वाभाविक्या** स्वस्यानन्तत्वात् **अनन्तया शक्त्या स्वजनं** जात्यभिप्रायेणैकवचनं स्वजनान् वर्धयन् **अपरवान्** न परवान् उत्तमवान् अपरवान् **स्वत एव** उत्तमहीनः। (टि). या. also understands पर as superior. यद्वा परशब्द उत्तमपरः। तथा च **निजया शक्त्या** तृतीया पंचम्यर्थे निजशक्तेरपि। **स्वजनान्** भीष्मादीन्। उद्रेचयन् अधिकशक्तियुक्तान् **प्रदर्शयन्सन्**। परवा-नित्युच्यमानः। वस्तुतस्तु **अपरवान्** स्वतः उत्तमशून्यः। कुतः निजया अनन्तया। शक्त्या युक्तः। अनेन स्वाभाविकानन्तशक्तियुक्तत्वादिति हेतुरुक्त इति ज्ञातव्यम्।(या). It is proper to understand the first पर as शत्रु and the second पर as superior. **स्वजनान् उद्रेचयन्** is understood differently : a) **कीदृशः** कृष्णः **स्वजनान्** स्वभक्तान् इह पाण्डवान् परत्र च ब्रह्मादीन् **उद्रेचयन्** उद्रेकं प्रापयन् वर्धयन्।(टि). The Lord makes His devotees viz. Pāṇḍavas here and Brahmā and others there, prosper. b) **स्वजनान्** भीष्मादीन्। **उद्रेचयन्** अधिकशक्तियुक्तान् प्रदर्शयन् सन् **परवान्** इत्युच्यमानः।(या) The Lord made Bhīṣma and others grow stronger to make them appear as superior to Him. Note : अत्र निजया, शक्त्या, परवान्, अपरवान् इत्येतेषामावृत्तिः। (या). [**पादान्त्ययमक**]

57) (पदच्छेदः) **यस्य। सुनीतिसहायात्। न। रिपून्। मेने। अर्जुनः। समेतसहायान्। समेतसहाः। यान्। अकरोत्। च। आसु। परासुप्रततिं। सेनासु। धावनासुपरासु॥**

It is generally felt that it was Arjuna who destroyed hosts of armies of Kauravas. But here it is made clear that, that feat was possible for Arjuna only because Lord Kṛṣṇa was his charioteer and adviser. The word **सुनीतिसहायात्** is accordingly explained : (i) यस्य सारथ्यबलतो यस्य न्यायबलादपि। (टी). (ii) सुष्ठु नीतिर्नयन-मश्वानां सा सुनीतिः सारथ्यमिति यावत्। **तस्याः** सहायात् तद्बलतः। यद्वा कृष्णस्य **सुनीतिसहायात्** शोभना नीतिः सामादिरूपा तस्याः सहायात्

बलात् यस्य सुनीतिबलादपि।(टि). (iii) सारथ्यात् तदीयशोभननीतिरूपसहायाच्च।(या). **समेतसहायान्** = **समेतसहा** + **यान्**. **समेत** = together; **सह** = tolerating; Arjuna tolerated their joint attack; i.e. he frustrated their attempts to harm him : समेतान् (मिलित्वागतान्)... सहमानः तेषां आटोपं विफलीकुर्वाणः।(टि). **यान्** is interpreted in two ways : a) अत एव तान् प्रति **यान्** अभिमुखं गच्छन्।(टि) Arjuna advanced towards them. b) आसमन्ताद्यातीति **यान्**। (या) Arjuna moved in all directions on the battle-field because of the skill of Lord Kṛṣṇa, the charioteer. या. understands **रिपून् न मेने** as 'Arjuna did not consider his enemies as fit for him' (एते रिपवो मद्युद्धयोग्या इति न ज्ञातवानित्यर्थः।). **परासुप्रततिं** = Rows of dead soldiers. परागता असवो येषां ते परासवः तेषां प्रततिं गतासूनां ततिं निचयम् **अकरोच्च**।(टि) **धावनासुपरासु** = धावन+असु+परासु. [पर = intending to protect असु = life by धावन् = running away.] असुषु प्राणेषु परास्तत्पराः असुपराः धावनेन पलायनेन असुपराः स्वजीवनपराः तासु। यद्यर्जुनमुखे स्थास्यामस्तर्हि मरिष्यामोऽतो नाभिमुखं गमिष्यामः किंतु शीघ्रं पराङ्मुखतया पलायनमेव कुर्म इति भावः।(टि). या. understands **असु** as **असुरक्षण** and **पर** as the motive or goal : अत्र असुशब्देन तद्रक्षणं लक्ष्यते। तथा च धावनेन पलायनेन असुरक्षणं प्राणरक्षणं परं उद्देश्यं यासां तास्तथोक्ताः तास्वित्यर्थः।(या). The म.ता.नि narrates (अ.२४) : तयोरागमने हेतुं श्रुत्वा प्राह जनार्दनः ॥ एकः पूर्वागतोऽत्रान्यः पूर्वदृष्टो मया यतः। समं करिष्ये युवयोरेकत्राहं निरायुधः ॥ अन्यत्र दशलक्षं मे पुत्राः शूराः पदातयः। इत्युक्ते फल्गुनः कृष्णं वव्रे तद्भक्तिमान्यतः ॥ अन्यस्तत्राभक्तिमत्त्वाद्वव्रे गोपान्प्रयुध्यतः! पार्थानामेव साहाय्यं करिष्यन्नपि केशवः ॥ तस्याभक्तिं दर्शयितुं चक्रे समवदीश्वरः ॥ (१८-२२) (अ.२५) तमाह भीष्मस्तेऽजेया देवास्ते धरणीं गताः ॥ विशेषतः केशवेन पालिताः तत्प्रियाः सदा। (४९-५०). [**पादान्त्ययमक**]

58) (पदच्छेदः) येन। जयद्रथमारः। पार्थः (पात्रा)। शत्रून्। अवापतत्। रथमारः। यद्विरहात्। अपि। देहे। सः। रथः। शश्वत्। स्थितेः। सदात् (सत्। आत्)। अपि। देहे॥

Here again it is clarified that whatever Arjuna achieved was because Lord Kṛṣṇa was his charioteer. A clear evidence of the effect of Kṛṣṇa's presence on the chariot was that when He got down from the chariot, it was burnt to ashes because of the burning missiles suffered by it. Kṛṣṇa's very presence had made the missiles ineffective. Only because of this reason Kṛṣṇa made Arjuna get down before Him. Arjuna could kill Jayadratha and others only because of Kṛṣṇa's grace. जयद्रथमारः has two meanings : a) सिन्धुराजो जयद्रथस्तं मारयन् पार्थः।(टि). Arjuna, the killer of Jayadratha. b) (i) जयन्तो हि रथा येषां ते सर्वे हि जयद्रथाः। (टी). (ii) जयन्तो हि रथा येषां ते सर्वे हि जयद्रथाः। तान्मारयतीति तथोक्तः।(टि). Arjuna, the killer of enemies fighting from their chariots which had won many victories. The word रथमारः also refers to Kṛṣṇa because He was responsible for all the power and lustre of Arjuna's chariot. *Read* : (i) कीदृशः अर्जुनः। येन कृष्णेन सारथिना निमित्तेन रथमारः रथस्य मया शोभया रमते। कोऽर्थः। हर्यधीनजयः।(टि). Arjuna's victory was due to Kṛṣṇa. (ii) कथंभूतोऽर्जुनः। येन सारथिना। रथमारः रथस्य मा श्रीः तया रमत इति तथोक्तः। रथशोभाजनितमुखविशेषवानिति यावत्। एवं हर्यधीनशोभः सः रथः। (या). Arjuna's chariot was lustrous due to Kṛṣṇa. यद्विरहात्+अपि+देहे+स+रथः। The chariot got burnt being separated by Kṛṣṇa : स रथः सोऽयं प्रसिद्धो रथः यदुपरि ब्रह्मास्त्रादीनां पातेऽपि न किंचिज्ञातं यावत्कार्यं भगवत्संकल्पात्। स एव रथो भगवत्संकल्पानुसारेण कार्यसमाप्तौ अर्जुनं रथात्प्रथममवतार्य पश्चात्स्वा-वतरणरूपात् यद्विरहात् यस्य कृष्णस्य वियोगात् देहेऽपि दग्धोऽप्यभूत्। (टि). The last quarter is a general statement applicable not only to Arjuna, but even to all embodied souls who reap the fruits of their deeds because of the presence of the Lord in their bodies. Only या.

understands the statement as applicable to only Arjuna : न केवलमर्जुनः श्रीकृष्णसहायेन बाह्यरथे सुखवान् किंतु देहेऽपि शरीरेऽपि। **शश्वत्** एकप्रकारेण। **स्थितेः** सन्निधानात्। कृष्णस्येति शेषः। **सदात्** सत् प्रशस्तं कर्म तज्जन्यं सुखविशेषमिति यावत्। आ सम्यगत्तीति तथोक्तः।(या) (सत् = good deeds; आ = properly; अत् = eating,enjoying properly the fruits of good deeds). Others explain the statement as applicable to all individual souls. (i) यत्स्थितेर्देहगोप्येष जीवोऽत्ता सुखदुःखयोः। (टी). (ii) न केवलमेतदेव यदर्जुनरथे भगवति स्थिते अर्जुनस्य जयः किंतु **यत्स्थितेः** यस्य भगवतः स्थितेः **देहेऽपि सदात्** सन् वर्तमानो देहगोप्येष जीवः अत्तीति आत् सुखदुःखयोः अत्ता संश्चासावात् चेति सदात् इति विग्रहः। तदुक्तं (छां.उ) 'स एष जीवेनात्मनोनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति' इत्यादौ।(टि). (iii) ...यद्वा देहे सत् विद्यमानो जीवः **आत्** अत्ता इति।(त). (iv) **सदा** अत्तीति **अत्** सुखदुःखभोक्ता जीवोऽपि। **देहे** यस्य हरेः **शश्वत्स्थितेः** अवस्थानबलादेव। स्वयमवतिष्ठत इति शेषः। 'ब्रह्मणा संपरित्यक्तो मृत इत्युच्यते नरः' इत्याद्युक्तेः। अत्र देहप्रवाहस्या-नादित्वापेक्षया देहे शश्वत्स्थितेरित्युक्तम्। लिङ्गदेहापेक्षया वा।(भ). ना. suggests a slightly different meaning understanding. अत् = अतति = संचरति also; **सरथः** देहाख्यरथसहितस्तदभिमानी जीवोऽपि **सदात्** सदासर्वदा अतति इतस्ततः संचरति। अत सातत्यगमने कर्तरि क्विप्। अत्तीति वा भोक्तृत्वादिव्यापारवान्। भवतीति शेषः।(ना). या. reads **पात्रा** for पार्थः and explains **पात्रा** सारथिभावमाश्रित्य पालकेन। being protected by Kṛṣṇa who helped Arjuna by becoming his charioteer. ब. understands रथ of रथमारः as रथिन् on the authority of V.S.Apte ['रथः = A hero (for रथिन्)' V.S.Apte] and translates as 'Arjuna who killed महारथs or great warriors fighting from their chariots]. The म.ता.नि. narrates (अ.२६) : तद्दृष्ट्वा भगवान्कृष्णो लोहितायति भास्करे। अजिते द्रोणतनये त्वहते च जयद्रथे। अर्जुनस्य जयाकाङ्क्षी ससर्ज तम ऊर्जितम्॥ तमो व्याप्ते गगने सूर्यमस्तंगतं मत्वा द्रोणपूर्वाः समस्ताः। विशश्रमुः सैन्धवश्चार्जुनस्य हतप्रतिज्ञस्य मुखं समैक्षत॥ तदा हरेराज्ञया शक्रसूनुः चकर्त बाणेन जयद्रथस्य। वह्निं विविक्षन्निव दर्शितःशिरः... ॥ (१८८-१९०) [**पादान्त्ययमक**]

59) (पदच्छेदः) **यद्भरितः। भरताभः। प्रभुः। अंभाभावितः। अभिभरताभः। भीमः। रभसा। अभिभवी। प्रसभं। भाभाभिभूः। भासा। भिभवी॥**

This and the following three verses state that whatever Bhīma accomplished in his life, it was due to Kṛṣṇa's grace : न केवलमर्जुन एव कृष्णानुग्रहेणैव जयादिकं प्राप्तः किन्तु भीमोऽपीत्याह यद्भरित इत्यादिश्लोकचतुष्टयेन।(या). The verse contains various epithets of Bhīma. I. **यद्भरितः भरताभः** has been interpreted variously : (i) अ) भरतो हरिरेवैकः स्वतोऽन्यन्त(प्रकृत्यन्त)विधारणात्। भरितस्तेन हरिणा भाति तद्वद्वृकोदरः॥ (टी). आ) स्वतः अत्यन्तविधारणात् स्वातन्त्र्येण मुक्तामुक्तविधारकत्वात् भरतो हरिरेवैकः। ...(तद्वदाभातीति भरताभः।)(टि). इ) येन भरतनामकेन हरिणा भरितः पूर्णः। तस्मात् **भरताभः** हरिसदृशः।(या). Bhīma was shining like the Lord denoted by the word 'Bharata'. (ii) अ) भरतः प्राणः स एव ह्यवतारगः। तद्वदाभाति भीमोऽयं संग्रामादौ महाबलः॥(टी). आ) बिभर्तीति भरतः स एवावतारगो भीमः तथा च भरतवत् मुख्यप्राणवत् आभातीति भरताभः अत्र स्वदृष्टान्तः। क्व भरताभः। संग्रामादौ महाबल इति तात्पर्यम्।(टि). इ) भरतो वायुः तस्याभेवाभा यस्य सः तदवतारत्वात्तत्सदृश इत्यर्थः।(या). Bhīma shines with his might like Vāyu denoted by the word 'Bharata'. (iii) अ) भरतो राजा वासुदेवपदाश्रयः। तद्वद्भीमः॥(टी). आ) भरतो राजा वासुदेवपदाश्रयः दौष्यन्तिः भरतः तद्वदाभातीति भरताभः। अत्र नीचदृष्टान्तः।(टि). Bhīma shines like king Bharata, son of Duṣyanta. (iv) अ) तं च तद्वंश्यान् भासयेत्।(टी). आ) भरतं तद्वंश्यान् भरतान् भाप(व(स)यतीति भरताभः। तद्वंश्यकीर्तिकृत् इत्यर्थः। (टि) इ) भरतो राजा तं आसमन्ताद्भासयतीति भरताभः तत्कुले स्वयमुत्पन्नस्सन् तत्प्रसिद्धिं करोतीति यावत्।(या). Bhīma made king Bharata and his race shine (=achieve fame) by taking birth in that race. II. **अम्भाभावितः** अ) अं बिभर्ति यतो नित्यं अंभृण्यंभेति कीर्तिता। तया पोषितः सोऽयमम्भाभावित ईरितः॥(टी). आ) अं ब्रह्म बिभर्तीति अंभृणी महालक्ष्मीः अंभाभावितः लक्ष्मीतनय इत्यर्थः। (टि). इ) अं परब्रह्म बिभर्तीति अंभा रमा तया भावितः पोषितः।(या).

ई) अं=पूर्णं ब्रह्म बिभर्ति = हृदये धरति = रमा। तया भावितः = पोषितः।(वि). Bhīma is nourished like a son by Goddess Lakṣmī who bears the Lord always in Her heart. III **अभिभरताभः** अ) अभितो भरता ये हि संग्रामेषु परस्परम्। समन्ताद्भाति तेष्वेको भीमसेनो महाबलः ॥ (टी). आ) सर्वतः ध्रियन्ते धार्यन्ते पोष्यन्ते ते वा अभिभरताः संग्रामेषु परस्परं सखायः तेषु सेनाद्वयस्थेषु अर्जुनादिषु तथा द्रौण्यादिषु आ समन्ताद् भातीति अभिमरताभः तेषु उभयपक्षस्थेषु महाबल इत्यर्थः। अत एव दुःशासनवधावसरे भीमबलं दृष्ट्वा द्वे अपि सेने रणभूमिं विसृज्य गते।(टि). ई) अभि अभितो भरताः दुर्योधनादयः पाण्डवाश्च संग्रामे येषु सैनिकेषु ते अभिभरताः तेषु आसमन्तात् सम्यक् वा भातीति तथोक्तः।(या). Bhīma was shining by his superior might in the midst of all the prominent warriors assembled on both the sides of Pāṇḍavas and Kauravas. IV. **रभसा भासा प्रसमं अभिभवी** अ) रभसाऽभिभवत्येष प्रज्ञयाऽ(सह्या)रीन् स्वतेजसा।(टी). आ) **रभसा** वेगेन अभिभवति शत्रून् इति रभसाभिभवी वायुत्वात्स्वस्य। तथा **भासा** प्रज्ञया तेजसा वा **अभिभवी** शत्रूनिति शेषः।(टि). इ) **प्रसभं** यथास्यात्तथा। **भासा** स्वतेजसा। **रभसा** वेगेन (अट्टहासेन)। **अभिभवी** शत्रुविषयकपरामववान्। (या). Bhīma overpowered his enemies forcibly and speedily by his might, intelligence and lustre. V. **भाभाभिभूः** अ) भारूपः सर्वतोऽन्येषां भारूपाणां समाश्रयः।(टी). आ) भा च प्रज्ञा च भा च तेजश्च भाभे(से)। ताभ्यां अभिभवति शत्रूनिति भाभाभिभूः। यद्वा भारूपः सर्वतः। भारूपाणामन्येषां समाश्रयः।(टि) इ) दीप्तिरूपत्वात् भाः स चासौ भारूपाणां रुद्रादीनां अभि सम्यक् भूः आश्रयश्च स तथा।(या). ई) स्वयं भारूपः। अन्येषां सर्वेषां भारूपाणां अभि = सम्यक् भूः आश्रयश्चेति तथोक्तः।(भ) Bhīma is the resort of all other lustrous beings like Rudra. ब. understands as 'surpassing less lustrous beings' : भं = नक्षत्रं तदाभान् = अल्पप्रमान् स्वतेजसा अतिशेते।(ब). ना. interprets differently both **भाभाभिभूः** and **भिभवी** reading as **अभिभवी** : (i) **भाभाभिभूः** भा दीप्तिः तया भातीति भामः सूर्यस्तमभिमति जयतीत्यर्थः।(ना). Bhīma overshines (अभिभूः) even the sun (भामः) who

shines through his lustre (भा). (ii) तत एव **अभि** अभिमुखः सेवार्थं **भवो** रुद्रः सोऽस्यास्तीति **अभिभवी** रुद्रेणापि वन्द्यः सन्।(ना) Bhīma is approached (अभि) by Rudra (भव) to offer his service. ब. understands differently : भासा अभिभवी = अतिशयी। अतिशयप्रभः।(ब). Note : अत्र सर्वत्र यद्धरित इति हेतुगर्भमनुवर्तनीयम्। तथा च कृष्णसन्निधानेनैव भीमेनैतादृशं माहात्म्यं प्राप्तमिति भावः।(भ). This is corroborated by या. also. VI. **भिभवी** अ) भमृक्षं भी शशी रुद्रो भवस्तद्वान्वृकोदरः। भिभवौ चन्द्ररुद्रौ यदभिमन्युघटोत्कचो ॥(टी) आ) **भं** भाते जयते भं तद्विद्यते यस्य स भी। अथवा भानि नक्षत्राणि तानि विद्यन्ते यस्य स भी। एवंभूतश्चन्द्रोऽभि-मन्युनिविष्टः तथा भवः रुद्रः घटोत्कचनिविष्टः तौ भिभवौ भीच भवश्चेति विग्रहः। तौ विद्येते यस्य स भिभवी॥(टि). इ) भं नक्षत्रं अस्यास्तीति भीचन्द्रः तेन तद्वान् अभिमन्युर्लक्ष्यते। भवो रुद्रः तेन तद्वान् घटोत्कचो लक्ष्यते तावस्य स्त इति भिभवी।(या). ई) भं = नक्षत्रं (नक्षत्रं ऋक्षं भं तारा तारकाप्युडुवा स्त्रियां - अमरकोश) भं अस्य अस्ति नियम्यतया इति भी = नक्षत्राधिपतिः चन्द्रः। भीच भवश्च भिभवौ तौ अस्य स्तः इति भिभवी। भीमः = भिभवी। अभिमन्युघटोत्कचयुक्तः इत्यर्थः। चन्द्रस्य अंशेन युक्तः अभिमन्युः 'भी' इत्यनेन गृह्यते। 'चन्द्रांशयुक्तोऽतितरां बुधोऽसौ जातः सुभद्राजठरेऽर्जुनेन।' महाभारततात्पर्यनिर्णय। **भवः** रुद्रः तदाविष्टः घटोत्कचः। 'देवोऽपि राक्षसतनुः पुरा यः आवेशयुक् च गिरिशस्य घटोत्कचाख्यः।' महाभारततात्पर्यनिर्णय।(वि). All this means that Bhīma was accompanied by Abhimanyu having the essence of Moon-god, and by Ghaṭotkaca possessing the essence of Rudra. The म.ता.नि. narrates (अ.२५) (i) अपीडयंस्तान् शरौघैर्धार्तराष्ट्राः समन्ततः॥ ररक्ष तान् वायुसुतो व्यसृजन् शरसंचयान्। तत्र भीमशरैर्नुन्ना धार्तराष्ट्राः समन्ततः॥(२१-२२) (ii) तमेकमग्र्यै रथिभिः परिष्कृतं निरीक्ष्य भीमोऽभ्यगमत्समस्तान्॥ द्रोणोऽत्र भीमप्रहितैः शरोत्तमैः सुपीडितः प्राप्तमूर्च्छः पपात। द्रौणिं कृपाद्यान्ससुयोधनांश्च चकार भीमो विरथान् क्षणेन॥ निवार्यमाणांस्तु वृकोदरेण घटोत्कचस्तान्प्रववर्ष सायकैः॥ (९१-९३) (iii) तद्युद्धमासीन्नृप-पार्थपुत्रयोर्विचित्रमत्यद्भुतमुग्ररूपम्। समं चिरं तत्र धनुश्चकर्त ध्वजं च राजा सहसाभिमन्योः॥ अथैनमुग्रैश्च शरैर्ववर्ष सूतं च तस्याशु जघान

वीरः। तदासदद्भीमसेनो नृपं तं जघान चाश्वान् धृतराष्ट्रात्मजस्य॥ द्रोणो द्रौणिर्भगदत्तः कृपश्च सचित्रसेना अभ्ययुर्भीमसेनम्। सर्वांश्च तान्विमुखीकृत्य भीमः स चित्रसेनाय गदां समाददे॥ (१०५-७). [पादान्त्ययमक]

60) (पदच्छेदः) **यदनुग्रह(हि)पूर्णत्वात्। भीमः। सर्वान्। अरीन्। अनहिपूः। नत्वा। आत्। अदहत्। बाहुबलेन। क्रोधाग्नौ। आहितान्। निजाहुबलेन॥**

This refers to Bhīma's destroying hosts of enemies, by the grace of the Lord. Generally भीम is भीमसेन. But टी. and टि. interpret भीम as भृतमः सूक्तवित् = knower of the मन्युसूक्त and वि. understands it as Bhīma the ज्ञानपूर्ण : भृताः माः यस्मिन् सः ज्ञानपूर्णः 'स वायुरेवाभवत् अत्र भीमनामा भृताः माः सकला हि यस्मिन्' महाभारततात्पर्यनिर्णय।(वि). **यदनुग्रहपूर्णत्वात्** is also read as **यदनुग्रहिपूर्णत्वात्** having not much difference in meaning : (i) **यदनुग्रहपूर्णत्वात्** - यस्य भगवतः कृष्णस्यानुग्रहो येषु ते यदनुग्रहास्तेषु पूर्णः तस्य भावस्तत्त्वं तस्मात् यदनुग्रहपात्रेषु भक्तेषु संपूर्णत्वात् सर्वोत्तमत्वात्।(टि). (ii) **यदनुग्रहिपूर्णत्वात्** - यस्य कृष्णस्यानुग्रहो एषामस्तीति **यदनुग्रहिणः** तेषु **पूर्णः** अधिकानुग्रहवान् तस्य भावस्तत्त्वं तस्मात्।(या) (ब. and वि. accept this reading) All mean that Bhīma was the foremost among those who had secured full grace of the Lord. The two epithets of Bhīma viz. **अनहिपूः** and **नत्वा आत्** are significant. **अनहिपूः** - (i) यस्मादनहिपूरेष जीवन्मुक्तान्पुनाति हि।(टी). (ii) नहः नहनं (बन्धनं) एषामस्तीति नहिनः बद्धाः न नहिनः अनहिनः जीवन्मुक्तास्तान् स्वदर्शनादिना पुनातीति अनहिपूः।(या). Bhīma purifies even जीवन्मुक्तs i.e. souls released but still living embodied i.e. realized souls. The टि. has given an additional meaning : नहो विधिनिषेधाभ्यां बन्धो येषां ते नहिनः न नहिन अनहिनः विधिनिषेधातीताः जीवन्मुक्ता इति यावत्। तान् पृणाति ददाति अभीष्टं पृणधातोरेव व्याख्यानम्। अथवा पुनाति शोधयति स्वानुग्रहेण निर्जितकामादिदोषान् करोतीत्यर्थः।(टि). That is, Bhīma fulfils the desires of

**जीवन्मुक्त**s. General meaning of **नत्वा आत्** is "One who eats after bowing down (to the Lord)". But here the commentators have understood special meanings with reference to Bhīma. (1) Bhīma cannot have any internal enemies like **काम** or desire as he enjoys everything after bowing down (offering) to Lord Viṣṇu : अ) एतावता न भीमस्य कामाद्या वर(द्यान्तर)वैरिणः। यस्मादनहिपूरेष जीवन्मुक्तान्पुनाति हि। कुतः कामादयो दोषा नत्वाऽत्तुर्विष्णवेऽखिलम्।(टी). आ) भीमस्य कामादयो दोषाः कुतः। कीदृशो भीमः। नत्वा आत्। अत्ता इत्यर्थः। नत्वा नमस्कृत्य प्रह्वीभूय। कोऽर्थः अरिबलं मदादिकं मद्देहेन्द्रियादिकं विष्ण्वावेशभूतं विष्णवे, मे मह्यं अखिलमुर्वरितं किंचिन्न इति मनसा ध्यात्वा तथा उक्त्वा च आसमन्तात् अत्ति समर्पयतीति आत्। कोऽर्थः। शत्रूनुभयविधान् जयन् श्रियं ज्ञानादिसंपत्तिं तथा तद्व्याप्तं राज्यमेव च ईशस्य समर्पयति संप्रदानत्व-विपक्षाभावात् षष्ठीप्रयोगः। कीदृशः। विष्णुना विहितं सदा कुर्वन्निति शेषः। तथा च कामनाभावेऽपि स्वस्वभावादेव सर्वं विहितं सदा करोति न तु विधिनिषेधभिया। कुतः तस्य 'कामचारेणैके' (ब्र सू ३-४-१५) इत्युक्तजीवन्मुक्तपतितवात्। 'स्तुतयेऽनुतिर्वा' (ब्र.सू ३-४-१४) इत्यादिना तथा समर्थितत्वात्। तदुक्तं 'बाल्यं च पाण्डित्यं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवे'ति श्रुतौ। एवं भूतस्य तस्य भीमस्यान्तररयः कुतः।(टि). Bhīma offers whatever he gains by defeating outer and inner enemies, at the feet of the Lord. (ii) तथा च यः स्वदर्शनादिना जीवन्मुक्तान् पवित्रीकरोति (तादृशकृष्णेन शत्रुभयंकरस्य) तस्य कामाद्यन्तःशत्रुहननं संभावितमेवेति ज्ञायत इति भावः। ननु बाह्यशत्रुविनाशे बाहुबलं साधनमुक्तं आन्तरशत्रुनाशे किं साधनमित्याशंकायां तत्साधनसूचकं विशेषणमुक्तम्। नत्वादिति। नत्वा नमस्कृत्य अरीन् अत्ति (संहरतीति) अत् अत्र नमस्कारो नाम "नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलमि"त्यनुसन्धानविशेषः। तथा च विहितानुष्ठानकाले (विहितविषयादनकाले) स्वविहितशत्रुसंहारादिकरणकाले उक्तानुसन्धानविशेषवतः कुतः कामाद्याः शत्रवः स्युरिति भावः।(या). Bhīma destroys the enemies having meditated upon the Lord as the Real Destroyer. **बाहुबलेन** = By the

strength of mere arms and not of the missiles : स्वबाहुबलेनैव। नास्त्रसंप्रयोगादिनेति भावः।(या). Note : **क्रोधाग्नौ सर्वान् अरीन् अदहत्।** Here क्रोधाग्नौ means नृसिंहाग्नौ – (i) क्रोधस्याग्निर्नेत्राभ्यां यस्य स क्रोधाग्निः नृसिंहाग्निः तस्मिन्।(टि). (ii) क्रोधो मन्युर्नृसिंहः स एवाग्निः तस्मिन्।(या). And अरीन् means बाह्यानान्तरांश्च = outer as well as inner enemies. The words **आहितान्** and **निजाहुबलेन** have been explained meaningfully : (i) **आहितान्** तृतीयोऽतिशये इत्यत आहुतान् सर्वोत्तमहोमे हुतानिति यावत्। केन मन्त्रेण **निजाहुबलेन** निजाह्वानवरेण निजश्चासौ आहुश्च आह्वानमिति यावत्। स **चासौ** वरश्च प्रातिलोम्येन रवश्चेति यावत् समाने लोपः [महाव्या] इत्यतः **वकारलोपः** 'यस्ते मन्यो' इति मन्युसूक्तेनेति यावत्।(टि). (ii) **आहितान्** आहुतान्। उकारस्थाने इकारस्तृतीयोऽतिशयार्थः। ननु केन **होममन्त्रेण** होम इत्यत आह **निजाहुबलेनेति।** निजं स्वसम्बन्धि आहुराह्वानं नृसिंहस्य यस्मिन् स निजाहुः स चासौ बलश्च (अत्र बस्य रत्वं लस्य वत्वं नस्य णत्वं च विवक्षित्वा रवेणेति संपद्यते) बलः रवः मन्त्रः स तथा तेनेत्यर्थः। नृसिंहाह्वानकरेण मन्युसूक्तेन नृसिंहरूप एवाग्नौ **वैरिबललक्षणं** हविर्हुत्वा भस्मीचकारेत्यर्थः। यथोक्तं 'स्मरन्नृसिंहं भगवन्तमेनं समन्युसूक्तं च ददर्श भक्त्ये'ति।(या) Bhīma had offered all his inner and outer enemies in the नृसिंहाग्नि enkindled by the recitation of the मन्युसूक्त. Hence he had, not at all any type of enemies. Note : 1. भ. reads **अनहिपूर्णत्वात्** as a single unit and explains :- **अनहिपूर्णत्वात्** न(ण)ह बन्धने नहनं नहः संसारबन्धः सोऽस्त्येषां ते नहिनस्तद्भिन्ना अनहिनो मुक्तियोग्यास्तेषु पूर्णत्वात् अभ्यर्हितत्वात्। मुख्यप्राणस्वरूपत्वादिति भावः।(भ). Bhīma is of the nature of मुख्यप्राण existing fully in the मुक्तियोग्यजीवs. 2) वि. understands बल in निजाहुबलेन as '**strength**' : आहुबलेन इत्यत्र आहुः आह्वानं। तस्य बलं-सामर्थ्यम्। **समर्थं** आह्वानं नामज्ञान-भक्तिभ्यां श्रीनृसिंहप्रतिपादकेन तत्प्रीतिप्रदेन **मन्त्रमयेन** मन्युसूक्तेन आह्वानमेव। "स्मरन् नृसिंहं भगवन्तमेनं स मन्युसूक्तं च ददर्श भक्त्या" - महाभारततात्पर्यनिर्णय (वि). 3) ब. connects **नत्वा** with निजाहुबलेन and explains : निजाहुबलेन नत्वा = वन्दित्वेत्यन्वयः। नमतिस्तु

स्त्युत्यर्थः। 'णमु शब्दे च'। It adds : भिन्नपदत्वेऽपि णत्वं यमके न दोषः। "यमकादौ भवेदैक्यं ...शषयोर्नणयोः" इत्युक्तेः। अयमेकस्थलेऽप्यस्तीदृशः संप्रदायः। 'कर्मणो ह्यपि बोद्धव्य'मित्यत्र कर्म नः इति च्छेद इत्याचार्या एवावोचन्।(ब). The म.ता.नि. narrates (अ.२७) : दृष्ट्वैव तं पवनसूनुरभित्वियाय क्रोधाद्दिधक्षुरिव कर्णममेयधामा। राजावनाय शिनिपुङ्गवपार्षतौ च सन्दिश्य कर्णमभिगच्छत आस रूपम्॥ अन्ते कृतान्तनरसिंहतनोर्यथैव विष्णोर्हरं ग्रसत आत्तसमस्तविश्वम्। तद्वेगतः प्रतिचचाल धरा समस्ता विद्राविता च सकला प्रतिवीरसेना॥ (३८-९) तथापि शत्रुप्रतिभीषणाय पपाविवास्वाद्य पुनः पुनर्भृशम्। स्मरन्नृसिंहं भगवन्तमीश्वरं स मन्युसूक्तं च ददर्श भक्त्या॥ (१४८). [पादान्त्ययमक]

61) (पदच्छेदः) कृष्णाभीमाप्ततमः। शीर्णं। येन। स्वकीयहृदयम्। आप्ततमः। (स्वकीयहृदयमाप्ततमः)। धृतराष्ट्रसुतान्। अवधीत्। भीमेन। स्थापितः। मनसि। सुसुतान्। अवधीत्॥

This again refers to Bhīma's achievements due to Lord Kṛṣṇa's grace and instrumentation. It is well known that Bhīma killed Dhṛtarāṣṭra's sons like Duryodhana and Duśśāsana. Such feats were possible due to Kṛṣṇa's blessings and inspiration. The verse also describes some other deeds of Bhīma. टि. following टी. understands तमः in कृष्णाभीमाप्ततमः as the darkness of ignorance, whereas others understand the compound as कृष्णाभीमयोः आप्ततमः *Read* : a) (i) द्रौपदीभीमयोः स्वाप्तस्व (श्चाप्तः स्व)भृत्यानां मनोगतम्। येनाज्ञानतमः शीर्णं॥(टी) (ii) कृष्णाभीमयोः आप्ताः तेषां तमः द्रौपदीभीमयोः स्वाप्तस्वभृत्ययोः तमः अज्ञानतमः।(टि). Here तमः = darkness in the form of ignorance; and आप्त = their own people i.e. servants or devotees. Then this is connected to स्वकीयहृदयम् and explained : कीदृशं तमः? स्वकीयहृदयं स्वकीयानां स्वभृत्यानां हृदयं हृत् प्रति अयति प्रविशति तत्तथोक्तं मनोगतं।(टि). So it means "(Kṛṣṇa destroyed) the darkness of ignorance which had entered the minds of the servants of Draupadī

and Bhīma." Further आप्ततमः is understood as अतिमित्रं पाण्डवानामिति शेषः।(टि). 'Kṛṣṇa, the greatest friend and well wisher of Pāṇḍavas'. But the interpretation given by all others seems to be cogent :- (i) **कृष्णाभीमाप्ततमः** द्रौपदीभीमयोः अतिशयेन आप्तः स कृष्णः।(भ). (ii) द्रौपदीभीमयोरतिशयेनाप्तः। स कृष्ण इति शेषः।(या). (iii) कृष्णा (द्रौपदी) च भीमश्च तयोः आप्ततमः।(वि). So कृष्णाभीमाप्ततमः is a compound and refers to Kṛṣṇa as the greatest well wisher of both Draupadī and Bhīma who are quite intimate to Him. And स्वकीयहृदयमाप्ततमः applies to Bhīma : (i) कथंभूतेन भीमेन। **येन। स्वकीयहृदयमाप्ततमः।** स्वभृत्यमनोगतं तमः अज्ञानं। **शीर्णं** नाशितम्।(या). (ii) स्वकीयानां = निजभक्तानां हृदयं आप्तं तमः येन = भीमेन शीर्णम्। हृदयं आप्तेत्यत्र नित्यसापेक्षत्वादेकदेशान्वयः।(ब). (iii) स्वकीयहृदयं = आप्तं च तत् तमश्च = आप्ततमः।(वि). It means that due to Kṛṣṇa's grace, Bhīma destroyed the darkness of ignorance pervading the minds of his devotees. Note : (i) एवंभूतः (कृष्णः) **भीमेन मनसि** स्वमनसि **स्थापितः** सन्।(टि). (ii) श्रीकृष्णः स्वमनसि स्वकीयानां वा मनसि विहितसमर्पणाय स्थापितः। (या). **सुसुतान्** is explained as connected with a sacrifice : (i) .... अवधीत् खलान्। धृतराष्ट्रसुतान् सम्यङ्निष्पिष्टानेव सोमवत्।(टी). (ii) खलान् **धृतराष्ट्रसुतान् सुसुतान्** सोमवत् सम्यङ्निष्पिष्टानेव अवधीत्। (टि). (iii) **धृतराष्ट्रसुतान्** दुर्योधनादीन्। **भीमेन** निमित्तेन (भीमं निमित्तीकृत्येति यावत्।) **अवधीत्** - जघान। ...कथंभूतान् धृतराष्ट्रसुतान्। **सुसुतान्** सुष्टुनिष्पिष्टान्। लुप्तोपमा वा सुष्टुनिष्पिष्टसोमतुल्यानिति। अनेन युद्धाख्ये यज्ञे दुर्योधनादीन् सोमतया प्रकल्प्य तन्निष्पेषणं कृत्वा हरये तत्समर्पितवानित्युक्तं भवति। अत एव मनसि स्थापित इत्युक्तम्। यथोक्तम् "युद्धाख्ययज्ञे सोमबुद्ध्यारिवक्ष" इत्यादि।(या). (iv) षु अभिषवे धातुः। सुष्टु निष्पिष्टान् इत्यर्थः। "सोमं तस्मै चार्पयत् शोणिताख्यम्। युद्धाख्ययज्ञे सोमबुद्ध्यारिवक्षः ॥" म.ता.नि.(वि) It all means that as Soma is offered in the Soma-sacrifice, Duryodhana and others were offered as oblations in the great sacrifice of Mahābhārata-war. **अवधीत्** is interpreted as "Kṛṣṇa

protected the proper code of conduct **or righteousness** through Bhīma". (i) अवधेरिन्धनाद्विष्णुरवधीदि(रि)ति कथ्यते। रक्षत्ययं सुमर्यादां तत्कण्टकवधेन हि।(टी) (ii) कीदृशः **कृष्णः। अवधीत्** अवधिं मर्यादां इन्धयति दीपयति रक्षयतीति अवधीत्। **तेन** तत्**कण्ट**कवधेन धर्ममर्यादां कण्टकभूतदैत्यवधेनेति यावत्। अत **एवोक्तं पद्मपुराणे** "स्वर्गा-स्वर्गत्वविच्छेदी देवेन्द्रानिन्द्रताहरः। रक्षोदेवत्वहृद्**धर्मा**धर्मत्वघ्नः पुरुष्टुत" इति (टि) (iii) ननु भीमेन निमित्तेन दुर्योधनादीन् ~~हत्वा भूकण्टकं समुद्धृत्य~~ कृष्णः पुनः किं चकारेत्याशंकायामुक्तं **अवधीदिति।** भीमेनेति वर्तते। अवधिं धर्ममर्यादां ईरयतीति ईत् जात इति **शेषः।** भीमेनैव निमित्तेन धर्ममर्यादाप्रवर्तको जात इति भावः। एतदर्थमेव **भीमस्य स्वकीया**ज्ञान-नाशकत्वं तन्मनसि कृष्णस्थापकत्वं चोक्तमिति ज्ञातव्यम्।(या). It means अवधि = धर्ममर्यादा = **proper conduct = destruction** of the wicked. It **was brought about by Kṛṣṇa through** Bhīma during the Mahābhārata-war. '**Why did** He not do Himself?' Because He had vowed **of Himself** not fighting. *Read* : **अवधीत्।** अवधिर्मर्यादा तम् **एति** पाल**यतीत्**यवधीत् (ईरगतौ) कर्तरि क्विप्। 'ह्रस्वस्य पिति कृति तुक्' (**६.१.७१**) इति **तु**गागमः। युद्धे मया शस्त्रं न धार्यमिति प्रतिज्ञापालनार्थं तथा **न कृत**मिति **भावः**।(ना). Note : अत्र यद्यपि **हृदयाप्ततम** इति **वक्तव्यं तथापि छान्दसो** मुमागमो अलुक्समासो वा विवक्षित इति न **कोऽपि दोषः।(स्वकीयहृदयं** आप्ततम इति पदच्छेदे विशेषणयोगो नित्यसाकांक्षत्वात्साधुः)**(या)**. The म.ता.नि. narrates (अ.२८) : तौ शिक्षाबलसंयुक्तौ **मण्डलानि विचेरतुः।** तत्र भीमं वंचयितुं धार्तराष्ट्रश्शिरः क्षितौ॥ व्यधादुच्छ्रित**सक्थी**कस्तदा कृष्णाभ्य-नुज्ञया। पृष्ठमूलेऽहनद्भीमो भिन्नसक्थिश्च सोऽपतत्॥ **(७४-५). [पादान्त्ययमक]**

62) (पदच्छेदः) **भीमनिपातित(विपाटित)देहान्। अदर्शयत्। स्वान्। अरीन्। विपाटितदेहान्। कृष्णायाः। हितकारी। सम्यक्। (हि) ईरप्रियः। सदा। अहितकारी॥**

This also refers to the all-**round destruction** brought about by Bhīma by killing **Duryodhana** and others due to the grace of Lord **Kṛṣṇa. Lord Kṛṣṇa** is described by three epithets : 1) **कृष्णायाः हितकारी** - द्रौपद्याः

हितं करोतीति सः।(या). Draupadī's benefactor. 2) **सम्यग्धी(गी)रप्रियः** - Definitely and properly the beloved of god Vāyu. या. explains the connection between these two epithets : कृष्णाहितकरणे को हेतुरित्यतस्तत्सूचकं विशेषणान्तरमाह **सम्यगीरप्रिय** इति। ईरः मुख्यवायुः तस्य सम्यक्प्रियो यतोऽतस्तद्भार्यायाः कृष्णायाः हितकारीति भावः। (या). 3) **सदाऽहितकारी** - Destroyer of His devotees' enemies : तद्वैरिमर्दनः पाण्डवादिस्वभक्तवैरि-मर्दनः। अहितान् वैरिणः कारयति कालयति कल संहरण इत्यतः संहरति तथा कल विद्रावण इत्यतः द्रावयतीति वा अहितकाली रलयोरभेदात्। (टि). Again या. explains the connection with 1) : कृष्णेन कृतं द्रौपदीहितं कीदृशमित्यतस्तद्दर्शयितुमन्यद्विशेषणमुक्तं **सदाहितकारीति।** सदा निरन्तरं स्वभक्तानामहितान् वैरिणः कालयति संहरतीति सदाहितकारी। रस्य लत्वं कलसंहरण इति धातोः। यद्वा सतां भक्तानां आ सम्यक् समन्ताद्वा (हितं करोति इति वा) हिताः सदाहिताः तेषां कालः कलनं करणं अस्यास्तीति तथोक्तः। तथा च द्रौपदीवैरिसंहरण-रूपहितं कृष्णेन कृतमित्यनेन दर्शितमिति ज्ञातव्यम्।(या). The second meaning viz. 'Kṛṣṇa does all round good of His devotees', is obtained by splitting up as **सत्+आ+हितकारी which is accepted by ब.** [सतां आ = परितः हितकारी] but not by वि. According to वि. Kṛṣṇa destroyes all ills of His devotees : अहितकारी = अहितकाली। रलयोरभेदः। र=ल। अहितं कलयतीति = संहरतीति। (कल संहरणे इति धातुः।)(वि.) The word **भीमनिपातितदेहान्** is read as **भीमविपाटितदेहान्** by या., ब, and वि. This latter reading even though has a similar meaning seems to be acceptable to go with विपाटितदेहान् figuring in the second quarter. All the explanations are quoted here below. They give the meaning that Bhīma destroyed or cut the bodies of the enemies into pieces : (i) भीमेन पाति(टि)ता देहा येषां वै बहुधा रणे।(टी). (ii) भीमेन निपातिताः देहा येषां ते तथोक्तास्तान्। कस्मात्। रणे वधात्।(टि). (iii) भीमेन विपाटिताः छिन्नाः देहाः येषां ते तथोक्तास्तान्।(या). The second **विपाटितदेहान्** is interpreted by splitting as

**वि+प+अटित+द+ईहान्** which means that huge birds were hovering over those bodies to eat their flesh, which were somehow tried to be warded off by some bodies still possessing life, by their broken limbs like hand and feet. The sight even though terrific for others must have been quite amusing to Draupadī who ~~was ardently~~ waiting to witness such sight since many years. Her wish was fulfilled by Kṛṣṇa. (i) यद्धस्तपादचेष्टाश्च विपानामटितप्रदाः।(टी). (ii) कीदृशान् **विपातित-देहान्** वीन् पक्षिणः पान्तीति विपाः पक्षिश्रेष्ठाः काकगृध्रादयस्तेषां अदितं भक्षितं भक्षणमिति यावत् तत् ददाति ताः विपातितदाः एवंभूताः ईहाः यद्धस्तपादचेष्टा येषां ते तथोक्तास्तान्।(टि) [अतितं तृतीयोऽतिशये इति दस्य तः अदितम्।ल.टि] (iii) **विपाटितदेहान्** विपानां पक्षिश्रेष्ठानामटितमटनं भ्रमणं ददतीति विपाटितदाः। तादृशा ईहा हस्तपादादिचेष्टा येषां ते तथोक्ताः तान्। भीमविपाटितवैरिदेहभक्षणार्थमागताः पक्षिश्रेष्ठास्तदीयहस्त-पादादिचेष्टाभिर्मृतिसमयजाताभिर्वारिताः सन्तः इतस्ततो भ्रमन्ति। एवंविध-चेष्टायुक्तानदर्शयदिति भावः।(भ). (iv) या & वि explain similarly as भ. (v) विपैः = **पक्षिश्रेष्ठैः** अटितः = आलोडितः देहः येषां तान्।(ब). Birds plucked the bodies for flesh. Note : **कृष्णायाः** should be understood twice : 1) कृष्णायाः हितकारी। 2) कृष्णायाः (कृष्णायै) अदर्शयत्। [a) अर्थवशाद्विभक्तिविपरिणामः।(टि) b) कृष्णायाः इति **षष्ठी** चतुर्थ्यर्थेऽपि योज्या।(या)]. The म.ता.नि. narrates (अ.२८) : तत आश्लिष्य भर्तृणां देहान्प्ररुदतीः स्त्रियः॥ सर्वा दुर्योधनादीनां दर्शयामास केशवः। कृष्णायै सा च तं देवमस्तुव-त्पूर्णषड्गुणम्॥ (२३२-३). [पादान्त्ययमक]

63) (पदच्छेदः) **अथ। हरिणा। अपि। इतबलं। द्रौणेः। अस्त्रं। महारिणा। पीतबलं। दधता। अवासोमरणं। नीतं। चक्रे। अभिमन्युजं। सोमरणम्॥**

This refers to the birth of Abhīmanyu's son Parīkṣit who had been tried to be killed, even when he was in the womb of Uttarā, by Aśvatthāman

through the *Brahmāstra*. Lord Kṛṣṇa protected him even in his mother's womb. Here अथ means 'Then' i.e. after the great Mahābhārata-war when Yudhiṣṭhira was coronated : 1. कौरववधेन पाण्डवानां राज्यदानानन्तरम्।(टि) 2) वैरिसंहरणानन्तरम्।(या). There are slight variations in the reading of the words : a) **अथ हरिणाऽपीतबलं द्रौणेरस्त्रं महारिणा पीतबलम्**।(टि.टी.या.ब.) b) **अथ हरिणा पीतबलं द्रौणेरस्त्रं महारिणाऽपीतबलम्** ॥ (वि). Of course, there is not much difference in meaning. **इतबलं** = Having its own strength and **पीतबलं** = The strength of which had been drunk or destroyed. It is explained in both ways – a) **इतबलमपि पीतबलम्** (या.ना.ब.वि.) and b) **पीतबलमपि** (टि.टी) *Read* : a) (i) **इतबलमपि** बलेन इतं युक्तं इतबलं सामर्थ्ययुक्तमपि। **द्रौणेः** अश्वत्थाम्नः। **अस्त्रं** ब्रह्मास्त्रं। **पीतबलं** पीतं नाशितं बलं यस्य तत्तथोक्तं। कृतमिति शेषः।(या). (ii) इतबलमपि = सामर्थ्योपेतमपि। (ब). b) (i) लीनसामर्थ्यमपि प्राप्तबलं स्वतः।(टी). (ii) **पीतबलमपि** पीतं कदर्थीकृतं बलं सामर्थ्यं यस्य तत्तथा। लीनसामर्थ्यमपि। **इतबलं** स्वतः प्राप्तबलम्। स्वभावतो दुःसहमित्यर्थः।(टि). ना holds इतबलं = इतवरं and explains : कीदृशमस्त्रम्। **इतबलमपि** इतं प्राप्तं बलं वरो वा येन तत्। ब्रह्मवरोपेतत्वात् बलाढ्यमपीत्यर्थः।(ना). Even though it had been endowed with Brahmā's boon it was made futile by Lord Kṛṣṇa. Note : 1. **महारिणा** = By Lord Kṛṣṇa, Holder of Sudarśana disc. [महान्तोऽरा हि यस्य स्युः महारं तत्सुदर्शनम्। तद्वता (टी)]. 2. **दधता** = By the protector of the womb or of the Pāṇḍavas' family [गर्भपोषकेण।(या) इदं पाण्डवकुलं धारयता पुष्णता च।(टि)]. The third quarter is read variously :- a) **दधताऽवासोमरणं** (टि.टी) b) **दधता वासोऽमरणं** (या.भ.ब.वि). And it is explained : a) **अवासोमरणं** न विद्यते वासः आच्छादकं उल्बं यस्यासौ अवासाः अवाससा भावप्रधानो निर्देशो द्रष्टव्यः अवासस्त्वेन मरणं। **नीतं** प्राप्तं। **चक्रे**। कस्मात् प्रसूतितः। योनिरन्ध्र-निष्पीडनात्।(टि). b) (i) **यः** कृष्णः। **अभिमन्युजं** परिक्षितं। गर्भाद्बहिरिति शेषः। **नीतं** निर्गतं। प्रसूतमिति यावत् चक्रे। कथंभूतं। **वासोऽमरणं**।

वाससि उत्तरायाः तत्वां **उल्बे (वासस्सदृशे** गर्भवेष्टनचर्मपुटकरूपजरायौ) अमरणं न विद्यते मरणं यस्य तं। स्वरक्षणेनामृतं।(या.) (ii) **वासोऽमरणम्** वासः उल्बं। तस्मिन् **अमरणं** = मरणरहितमेव, प्रसूतितः = गर्भात्, बहिर्नीतं चक्रे। न तु **तत् संहरणसमर्थमासीदिति** भावः।**(भ).** The *Brahmāstra* could not effect death to Parikṣit lying in Uttarā's womb because of the protection provided by Lord Kṛṣṇa. The word **सोमरणम्** is understood as qualifying a) **अस्त्रम्** and also b) **अभिमन्युजम्**. a) **(i) सोमरण**-मित्यस्त्रविशेषणम्। उमया सहितः सोमः शिवस्तस्य **रणः** संग्रामो येनेत्यर्थः। येनास्त्रेण शिवः संग्राममकरोत्तदेव तेनास्मै दत्तमिति भावः। शिवावतारत्वादश्वत्थामैव वा सोमस्तस्य रणो येनेति वा।(ना). (ii) अत्र रणशब्देन तत्संबंध्यस्त्रं लक्ष्यते। उमया सहितः सोमः रुद्रः तदात्मा द्रौणिः तस्य रणः रणसंबन्ध्यस्त्रं यस्मिन् स तथा तं। द्रौण्यस्त्रलक्ष्यमिति यावत्। "तत्रैव पातयाम्यस्त्रमुत्तरागर्भकृन्तने" इति वचनात्। तथा च द्रौण्यस्त्रलक्ष्यभूतः परीक्षित् गर्भे प्रसूत्यनन्तरं बहिरपि हरिणा रक्षितो न मृतः। अतस्तदीयमस्त्रं नाशितबलं हरिणा कृतमिति ज्ञायत इति भावः। (या). This states that the *Brahmāstra* had been used by Rudra in his warfare. Now, Aśvatthāman being the incarnation of Rudra used it to kill Parīkṣit lying in the womb of Uttarā. But Lord Kṛṣṇa protected him. ब. quotes a verse from the Bhāgavata : द्रौण्यस्त्रविप्लुष्टमिदं मदङ्गं सन्तानबीजं कुरुपाण्डवानाम्। जुगोप कुक्षिंगत आत्तचक्रो मातुश्च मेयः शरणं गतायाः ॥ b) कीदृशमभिमन्युजं। **सोमरणम्। सोमस्य** रणगं उमया सहितः सोमः किरातरूपी रुद्रः तस्य मृगैः सह यो **रणस्तं** गतं तद्वशमित्यर्थः। तदुक्तं 'मर्त्येन यो गुरुसुतं परलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धमि'ति। सोमस्य रणो यस्मिन्निति विग्रहः तद्वधोद्देश्यमपीति यावत् ॥ (टि). The म.ता.नि. narrates (अ.२८) : स दुःखशोकाभिहतो विनिन्द्य पार्थान्मया भूप किमत्रकार्यम्। इत्याह निष्पाण्डवतां कुरुष्वेत्यमुं व्यधात्पांस्वभिषेकिणं नृपः ॥ उच्छिद्य सन्ततिं पाण्डोः कृत्वा स्वक्षेत्रसन्ततिम्। तया भूरक्षणहृदा सोऽभिषिक्तस्तथेत्यगात् ॥ (११९-१२०) वासुदेवः पुनः प्राह यदि हन्तव्य एव ते। गर्भस्तथापि नैवास्त्रं पातयास्मिन्कथञ्चन ॥ अभिमन्योर्मृतस्यैव देहे पातय मानद। एवं त्वदस्त्रनिहितं गर्भमुज्जीवयाम्यहम् ॥

पातये गर्भ एवाहमित्यूचे गौतमीसुतः। अथाह वासुदेवस्तमीषत्क्रुद्ध इव प्रभुः॥ दुर्मते पश्य मे वीर्यं यत्ते शक्यं कुरुष्व तत्। उज्जीवयाम्यहं गर्भं यततः शक्तितोऽपि ते॥ सन्ततिर्वर्षसाहस्रं पाण्डवानां भवेद्भुवि। मत्पालितां न कश्चित्तां तावद्धन्तुं क्षमः क्वचित्॥ जानामि ते मतिं दुष्टां जिघांसोः पार्थसन्ततिम्। चिकीर्षोर्धार्तराष्ट्रस्य तन्तुं भूयः सुदुष्करम्॥ मदाज्ञया सा विफला भवित्री वाञ्छा मुमुक्षोर्विमुखस्य विष्णोः। यथैव तेनैव नराधिरूढो गम्यस्तव स्यान्न च भूमिभागः॥ (१७९-१८५). **[पादान्त्ययमक]**

64) (पदच्छेदः) तस्य। च। रक्षा। सुकृता। जनार्दनेन। ईशशेषकेक्षा-सुकृता। पार्थेषु। प्रेमवता। नित्यं। भर्त्रा। असुतासुविप्रेम्। अवता॥

The verse intends to state that it was Lord Kṛṣṇa who protected Parīkṣit not only when he was in his mother's womb, but also when he came out and lived in the world. *Read* : न केवलं द्रौण्यस्त्रलक्ष्यभूतः परीक्षित् गर्भे प्रसूत्यनन्तरं बहिरपि हरिणा रक्षितः (न मृतः), किन्तु यावज्जीवं रक्षितश्चेत्याह **तस्येति**।(या). The word **जनार्दनेन** is explained in two ways : a) (i) चक्रपाणिना।(टी). (ii) जनं दुष्टजनं अर्दयति इति जनार्दनं चक्रं तदस्यास्तीति **जनार्दनः**। मत्वर्थेऽच्। तेन चक्रपाणिना कृष्णेन।(टि). b) (आयुर्घातकजनमर्दकेन कृष्णेन।) (या). According to a), जनार्दन refers firstly to सुदर्शनचक्र and then to Lord Kṛṣṇa bearing it, whereas according to b), जनार्दन refers to Lord Kṛṣṇa directly. Both mean the same : "Destroyer of the wicked". The word **ईशशेषकेक्षासुकृता** is meaningful : a) **[ईश+शेष+क+ईक्षा+सु+कृता]** ईशश्च शेषश्च कश्च ते तथोक्ताः सुष्ठु कुर्वन्ति स्वस्वव्यापारं ये सुकृतः, ईक्षया स्वकृपादृष्ट्या सुकृतः ईक्षासुकृतः, ईशशेषकाः ईक्षासुकृतो येन स तथोक्तस्तेन। यो ब्रह्मादीनां स्वकृपाकटाक्षेण स्रष्टृत्वादिनियामकस्तस्य परीक्षिद्रक्षणं न विचित्रमिति भावः।(टि). Even gods Rudra, Śeṣa and Brahmā perform their functions due to the grace of the sight of the Lord. Further, even their act of creation &c. is under the control of the Lord. Then what to say about His protecting Parīkṣit? b) या. splits up differently :

**[ईश+शेष+क+ईक्षा+असु+कृता]** and explains. ब्रह्मादिरक्षकस्य परीक्षिद्रक्षणं नाश्चर्यमित्याशयेन कृष्णं विशिनष्टि **ईशशेषकेक्षासुकृतेति।** ईशः रुद्रः शेषः अनन्तः को ब्रह्मा च ईशशेषकाः। तेषां ईक्षया कृपाकटाक्षेणैव असून् प्राणान् करोतीति ईशशेषकेक्षासुकृत् तेनेत्यर्थः। संहारकेषूत्तमत्वाच्छेषरुद्रयोः स्रष्टृषूत्तमत्वात्कस्य च ग्रहणमिति ज्ञातव्यं।(या) The Lord gives life to (i.e. creates) even Rudra and Śesa, the foremost ~~destroyers and to Brahmā, the~~ foremost creator. Hence there is no surprise in His giving life to Parīkṣit. According to या, **पार्थेषु प्रेमवता** and **भर्त्रा** indicate the purpose of protecting Parīkṣit : ननु परीक्षिद्रक्षणे किं निमित्तमित्यत उक्तं **पार्थेषु प्रेमवतेति।** पाण्डवेषु प्रीतियुक्तेन। **भर्त्रा** (तेषां) स्वामिनेति च। तथा च पार्थानां स्वभृत्यत्वात्तेषु प्रेमवता कृष्णेन तद्वंशधारकस्य परीक्षितः रक्षणं कृतमिति भावः।(या). The Lord protected Pariṣkit because He loved Pāṇḍavas and He was their Lord. The last quarter is split in two ways : **भर्त्रा+असुतासुविप्रेम्+अवता** and **भर्त्रा+सुतासुविप्रेम्+अवता.** General meaning is - "The Lord safeguards the fruitfulness of the cursing power of brahmins". But it is interpreted in two ways as referring to (i) the birth of Parīkṣit who had been the victim of Aśvatthāman's *Brahmāstra* before being revived by the Lord; and (ii) the death of Parīkṣit even though protected throughout by the Lord. Parīkṣit was allowed to die before his birth to safeguard the fruitfulness of *Brahmāstra* and he was allowed to die by serpent-bite to safeguard the effect of the curse ṣuffered by him. (1) **असुतासुविप्रेम् अवता।** असुताः अदान्ताः असवो मन आदयो येषां ते असुतासवः। तपोहान्यर्थं प्राप्तक्रोधा इत्यर्थः। ते च ते विप्राश्च असुतासुविप्राः तेषां ईम् श्रियं अस्त्रशापादिरूपाम्। **अवता** अंशेन = भागेन रक्षता। कोऽर्थः ब्राह्मण-महत्त्वरक्षणार्थं तत्प्रयुक्तास्त्रशापादिकमपि अमोघीकुर्वता अत एव गर्भे रक्षितस्यापि परीक्षितोऽस्त्रमाहात्म्यरक्षणार्थमेव बहिर्निर्गतस्य मृतिं संपाद्य

पुनः सहस्रवर्षपर्यन्तं पाण्डववंशस्थापनरूपस्वसंकल्परक्षणाय पुनरुज्जीवनं कृतवान्।(टि). Lord Kṛṣṇa allowed Parikṣit to die to honour the *Brahmāstra* and revived his life as per His will of protecting the progeny of Pāṇḍavas. [*Read* also : च शब्दोऽप्यर्थः। मृतस्येति शेषः। कृष्णो हि परीक्षितं गर्भे ब्रह्मास्त्रतो रक्षन्नपि स्वकृतरक्षणप्रकटनाय प्रसवसमये व्यवहितो बभूव। तदा तद्ब्रह्मास्त्रं तमहनत्। हतं च परीक्षितं पुनरुज्जीवयामासेति हि भारती कथा। तथा च प्रसूत्यनन्तरं मृतस्यापि **तस्य** परीक्षितो **रक्षा जनार्दनेन सुकृता**।(भ).] According to ना. the Lord guarrantees the effect of the cursing power of brahmins even when they use it under undue influence of passion, anger and other internal enemies, i.e. when they unduly lose their self-control : **असुताविप्रेम्**। ...ईः श्रीः अस्त्रवरशापादि-सामर्थ्यरूपा भाग्यसंपद् तां। **अवता**। क्वचिदंशेन रक्षता। अदान्तमनस्क-त्वादिना कामक्रोधादिवशात् क्वचिदयोग्यविषयेऽपि वरशापं अस्त्रादिकं च प्रयुञ्जाना ये ऋष्यादयो विप्राः यथा भृगुर्लत्ताप्रहारं स्ववक्षसि कृतवान्, यथा वा 'जनयिष्यति वो मन्दाः मुसलं कुलनाशनमि'त्यादिविप्रशापः यथा च कृतोऽश्वत्थाम्ना गर्भोपर्यस्त्रप्रयोगः इत्यादिकं ब्राह्मणानां चरित्रं तदीयगौरवसंरक्षणार्थं किंचित्सहते क्वचित्प्रतिकरोति चेत्येतत्तदीयास्त्रप्रभावं प्रदर्श्य स्वप्रभावमपि प्रादर्शयदिति भावः।(ना). वि. explains similarly : सुताः पिष्टाः निगृहीताः। न सुताः अनिगृहीताः असवः प्राणाः इन्द्रियाणि येषां। तेषां विप्राणां ईं लक्ष्मीं शापात्मिकां सम्पदं इति यावत्। (वि). But या. raises a pertinent question : जनार्दनेन तस्य रक्षा सुकृता चेत् कथं सः मृतः? ['If Parikṣit was well protected by Lord Kṛṣṇa, how is it that he died ?'] And the reply is given by **असुतासुविप्रेमवता**, meaning Lord Kṛṣṇa allowed him to die in order to safeguard the effect of the curse of the brahmins drawn by Parikṣit on himself : नन्वेवं परीक्षिन्नित्यं कृष्णैकरक्षितश्चेत्कथमसंपूर्णायुः विप्रशापेन मृत इत्यत उक्तं **असुतासुविप्रेमवतेति**। असुताः अनिष्पिष्टाः अदान्ताः असवः प्राणाः इन्द्रियाणि येषां ते असुतासवः अजितेन्द्रियाः क्रोधवशा इति यावत् ते च ते विप्राः ब्राह्मणाश्च तेषां ईं श्रियं शापरूपां

अवता रक्षतेत्यर्थः। तथा च क्रोधाविष्टविप्रशापरक्षणं कर्तुं (विप्रशापं सत्यं कर्तुं) शापपर्यन्तमेव रक्षा कृतेति भावः।(या). ब. agrees with या. in this interpretation even though it reads as सुतासुविप्रेमवता – सुतासूनां = जितेन्द्रियाणां विप्राणां ईं = शापरूपां लक्ष्मीं अवतेति पदद्वयमिदम्। कृष्णरक्षितोऽपि विप्रशापादेवासम्पूर्णे वयसि ममारेत्यर्थः। विप्रप्रियत्वात् कृष्णोऽपि नैतदन्यथाचकार।(ब). And या. and ब. appear to be correct. ना. understands also as referring to राज्यलक्ष्मी of Pāṇḍavas taken away by Kauravas : अथवा असुतासवः अदान्तेन्द्रियाः कामक्रोधाभिभूताः कौरवास्तेभ्यस्तैर-पहृतामिति यावत्। विशेषेण प्रकृष्टां ईं राज्यलक्ष्मीं पाण्डवार्थं अवता। कौरवान्हत्वा पाण्डवेभ्यः अत्युत्कृष्टराज्यलक्ष्मीं प्रयच्छतेत्यर्थः।(ना). The म.ता.नि. narrates (अ.३०) : आगच्छत्स्वेव पार्थेषु व्यासे च पुरुषोत्तमे। प्रविवेश पुरं कृष्णस्तदाऽसूतोत्तरा मृतम्॥ द्रौण्यस्त्रसूदितं बालं दृष्ट्वा कुन्त्यादिकाः स्त्रियः। शरण्यं शरणं जग्मुर्वासुदेवं जगत्पतिम्॥ प्रत्यक्ष-मात्मना गर्भे रक्षितं प्रसवे हतम्। पुनरुज्जीवयामास केशवः पार्थतन्तवे॥ तदैव विविशुः पार्थाः सकृष्णाः सघनोच्चयाः। सर्वे मुमुदिरे दृष्ट्वा पौत्रं केशवरक्षितम्॥ (८८-९१). [पादान्त्ययमक]

65) (पदच्छेदः) **ज्ञानं। परमं। प्रादात्। भीष्मगतः। सृतिविमोक्षचरमं। प्रादात्। पाण्डुसुतानां। अधिकं। चक्रे। वेदं। गुणोत्तरं। स्वनामधिकम्॥**

This refers to Bhīṣma's preaching Yudhiṣṭhira in the *Śānti-parvan* of the *Mahābhārata* which includes the *Mokṣadharma-parvan*. It is generally believed that Bhīṣma himself imparted all that knowledge regarding ***Mokṣa*** or final release from worldly bondage, to Yudhiṣṭhira accompanied by his brothers and others. But this verse clarifies that it was not Bhīṣma who preached that knowledge. The real preacher was Lord Kṛṣṇa Himself residing in Bhīṣma. The **प्रादात् = प्र+अ+द+अत्**. It means प्र = excellent; अ = not; द = give; अत् = eat, destroy. Lord Kṛṣṇa destroyed Kauravas who did not give to

Pāṇḍavas the excellent kingdom due to them. ***Read*** : (i) पाण्डवेयं प्रकृष्टं यद्राज्यं नो ददति स्म ते। प्रादास्तेषां स्वयं ह्यत्ता प्रादात्तस्माज्जनार्दनः ॥ (टी) (ii) प्रकृष्टं न ददति ते प्रादाः पाण्डवानां राज्यादातारः कौरवास्तानत्तीति प्रादात् कृष्णः।(टि). The second **प्रादात्** means प्रददौ = gave. Note : **परममुत्तमं ज्ञानं** च न केवलं राज्यमिति यावत्। पाण्डवानां **प्रादात्** प्रददौ।(टि). **सृतिविमोक्षचरमं** qualifies **परमं ज्ञानं** and is explained in two ways. a) (i) सृतेः संसारान्मोक्षः स चरमो यस्मिन् विषयतया तत् विमोक्षचरमं मोक्षधर्मान्त-विषयं 'अन्तेषु रेमिरे (वी)धीरा न ते मध्येषु रेमिरे' इति (भारत)प्रमाणात्।(टि) (ii) मोक्षधर्मान्तविषयकमिति यावत्।(या). Lord Kṛṣṇa, residing in Bhīṣma, preached the knowledge of all topics ending with the final release. b) अथवा सृतिविमोक्षस्य चरमं संपूर्णसाधनं मुख्यसाधनमिति यावत्। 'न किंचिदन्तराधाये'त्यादि-प्रमाणात्।(टि). (ii) सृतिविमोक्षरूपे साध्ये चरमं चरमकारणरूपम्।(या). He preached the most effective knowledge to secure Mokṣa. Here टि. clarifies that even though Pāṇḍavas were incarnations of various gods, they needed that knowledge imparted to them : तत्र भीमादितरेषां अवतारेष्वा-परोक्ष्योज्झितेः तिरोहितलाभोऽपूर्वलाभश्च। भीमस्य त्वापरोक्ष्योज्झितेरभावात् सिद्धस्यैव पुनर्युक्त्यादिभिर्विशेषीकरणीयम्। तदुक्तं 'ब्रह्मणस्तु प्रायो नाप्रातिभासितमि'ति। स एव न्यायो वायाविति। 'वायुत्वे किंचिदूनते'ति प्रमाणात्।(टि). The second half of the verse is interpreted variously as referring to the *Mahābhārata* which contains the *Viṣṇusahasranāma,* understanding **वेद** as the history of the Pāṇḍavas : किंच पाण्डुसुतानां। **वेदं** पाण्डव-प्रतिपादकं इतिहासरूपं पंचमं वेदं (भारतं) **अधिकं** ऋगादिवेदापेक्षया उत्तमं। **चक्रे** (प्रतिपादितवान्)।(या). The *Mahābhārata* is believed to be superior to even the Vedas : निर्णयः सर्वशास्त्राणां भारतं परिचक्षते। भारतं सर्ववेदाश्च तुलामारोपिताः पुरा॥ देवैर्ब्रह्मादिभिः सर्वैः ऋषिभिश्च समन्वितैः। व्यासस्यैवाज्ञया तत्र त्वत्यरिच्यत भारतम्॥ (म.ता.नि. २.९-१०) The two adjectives **गुणोत्तरं** and **स्वनामधिकम्** state the reasons for such superiority of the

*Mahābhārata* over the Vedas : कुत इत्यतस्तत्रहेतुगर्भं इतिहासविशेषणद्वयं **गुणोत्तरं स्वनामधिकमिति** च। **गुणोत्तरं** उत्तराः उत्कृष्टाः गुणाः भगवद्गुणाः प्रतिपाद्याः यस्य सः गुणोत्तरः तं ऋगादि-वेदानुक्तस्वगुणप्रतिपादकमिति यावत्। **स्वनामधिकं** स्वस्य नामानि विश्वं विष्णुरित्यादिसहस्रनामानि धीयन्ते अस्मिन्निति स्वनामधिः स्वनामधिरेव स्वनामधिकः स्वार्थे कप्रत्ययः तं तथा च भारतरूपो वेदः प्रसिद्धवेदानु-क्तस्वगुणप्रतिपादकत्वात् प्रत्येकं बह्वर्थसहस्रनामवत्त्वाच्च ऋगाद्यपेक्षयोत्तम इति प्रतिपादितवानिति भावः ॥ (या). The two reasons for the superiority of the *Mahābhārata* are : 1. It describes excellent qualities of the Lord which have not been described even in the Vedas. And 2. It contains the *Viṣṇusahasranāma,* a list of one thousand names of Lord Viṣṇu, each of which has many meanings. The टि. explains a little differently without mentioning the name of the *Mahābhārata* : कृष्णस्तेनैव ज्ञानेन **पाण्डुसुतानां वेदं** तदधीतं वेदम् **अधिकं** अन्येभ्योऽतिशयेन **गुणोत्तरं** स्वगुणख्यापकं चक्रे। कीदृशं वेदं **स्वनामधिकं** सु सुतराम् अस्य अकारवाच्यस्य विष्णोः नामानि धीयन्ते यस्मिन् स्वनामधिः स्वनामधिरेव स्वनामधिकस्तम्।(टि). Lord Kṛṣṇa made the knowledge of Pāṇḍavas excel the knowledge of others by making it bring out His qualities and contain His names. This hints at the composition of the *Mahābhārata* which expounds the knowledge of the Pāṇḍavas and the *Viṣṇusahasranāma*.. ना. gives a different explanation. The knowledge grasped by Pāṇḍavas was superior to what was grasped by others like Dhṛtarāṣṭra who were present to listen to the instructions imparted by Bhīṣma to Yudhiṣṭhira : तेनोपदेशेन **पाण्डुसुतानां** पाण्डवानां इतरेभ्योऽधिकं यथा स्यात्तथा **वेदं** ऋगादिकं स्वनामानि धीयन्ते निधीयन्ते यस्मिन्निति स्वनामधिः उदधिशब्दवत् स एव **स्वनामधिकः** स्वार्थे कप्रत्ययः तथाविधं। **चक्रे** भीष्मस्थे भगवत्युपदिशति सति धृतराष्ट्रादयो बहवः श्रोतारोऽभूवन्। तन्मध्ये च पाण्डवैर्वेदतात्पर्यमधिकं ज्ञातं सर्वाण्यपि वेदाक्षराणि भगवद्गुणकर्मप्रतिपादकानि

भगवन्नामान्येवेति। तथा ज्ञानमन्येषां नाभूदिति भावः।(ना). Pāṇḍavas understood all the teachings of the Vedas and realised that all the Vedic words are the names of the Lord expounding His qualities and actions. Others were unable to grasp this knowledge. The म.ता.नि. narrates (i) पृच्छेत्युक्तः स भीष्मेण पप्रच्छाखिलमञ्जसा। अत्रोवाचाखिलान्धर्मान्कृष्णो ~~भीष्मशरीरस्थः॥~~... विष्णुर्वैष्णववाक्येन हानिः पापस्य कर्मणः। इत्यादि धर्मसर्वस्वं भीष्मस्थेनैव विष्णुना॥ पार्थानां गदितं...॥ (२९.१४, ४७-८). (ii) नमो भगवते तस्मै व्यासायामिततेजसे। यस्य प्रसादाद् वक्ष्यामि नारायणकथामिमाम्॥ वासुदेवस्तु भगवान् कीर्तितोऽत्र सनातनः। प्रतिबिम्बमिवादर्शे यं पश्यत्यात्मनि स्थितम्॥ नास्ति नारायणसमं न भूतं न भविष्यति। एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम्॥ आद्यन्तयोरित्यवदत् स यस्माद् व्यासात्मको विष्णुरुदारशक्तिः। तस्मात्समस्ता हरिसद्गुणानां निर्णीतये भारतगा कथैषा॥(२.६७-७०) *Read* also : भारतं सर्वशास्त्रेषु भारते गीतिका वरा। विष्णोः सहस्रनामापि ज्ञेयं पाठ्यं च तद्द्वयम्॥ शास्त्रेषु भारतं सारं तत्र नामसहस्रकम्। वैष्णवं कृष्णगीता च तज्ज्ञानान्मुच्यतेऽञ्जसा॥ न भारतसमं शास्त्रं कुत एवानयोः समम्॥ स्वयं नारायणो देवैर्ब्रह्मरुद्रेन्द्रपूर्वकैः। अर्थितो व्यासतां प्राप्य केवलं तत्त्वनिर्णयम्। चकार पञ्चमं वेदं महाभारतसंज्ञितम्॥ भारतान्नाधिकं विष्णोर्महिमावाचकं क्वचित्। भारतान्न विरागाय भारतान्न विमुक्तये॥ (Q. *Mahābhārata-tātparyanirṇaya* (Ed. Prof. V. Prabhanjanacharya) (Kannada), Akhila Bharata Madhwa Maha Mandala, Bangalore, 1993, p.128]. [पादान्त्ययमक]

66) (पदच्छेदः) तेन। अवापि। सुजातैः। हरि(य)मेधः। तुरगावर्तने। अपि। सुजातैः। पाण्डुसुतैः। सवसूकैः। आप्तैः। व्यासात्मना। च। सुसवसूकैः॥

This refers to the Aśvamedha-sacrifice performed by Pāṇḍavas, due to the grace and help of Lord Kṛṣṇa and His incarnation, Sage Vyāsa. The main clause is तेन व्यासात्मना पाण्डुसुतैः हरिमेधः अवापि। And सुजातैः, तुरगावर्तनेऽपि सुजातैः, सवसूकैः, आप्तैः and सुसवसूकैः are

adjectives qualifying Pāṇḍavas. They are explained as follows : 1) **सुजातैः** - (i) सु जातं जन्म येषां ते तथोक्तास्तैः सुजन्मभिः। अथवा **सुजातैः** सुन्दरैः। **पुनः कीदृशैः। सुजातैः** सु जातं जन्म येषां ते तथोक्तास्तैः महायुद्धेषु सुपूर्णाङ्गैः सम्पूर्णसाधनैरित्यर्थः। (टि). (ii) सु समीचिनं जातं जन्म **येषां** ते तथोक्तास्तैः। अनेन यज्ञाधिकारस्सूचितः।(या). **सुजातैः** is interpreted in four ways : (i) nobly born; (ii) beautiful; (iii) well equipped for the war; and (iv) eligible to perform sacrifices. 2) (i) **तुरगावर्तनेऽपि सुजातैः** - अवन्यां **अश्वस्य** परिवर्तनेऽपि परिभ्रामणेऽपि **सुजातैः** यजयोः सावर्ण्यात् सुयातैः सुष्टु यातं यानं अश्वाप्रतिबन्धेन गमनं येषां ते तथोक्ताः तैः।(टि). (ii) सुष्टु जः = जातः अतः = अतनं = अटनं = पर्यटनं येषां ते।(वि). **Pāṇḍavas were experts** in allowing their sacrificial **horse to wander everywhere,** without anyone daring to obstruct its movements. [*Read* : सुजातैः = सफलकर्मभिः तुरगभ्रामणे सफलैरिति यावत्। 'सुजातः = Well made or produced' (V.S.Apte)(ब)] 3) **सवसूकैः** - The simple meaning is सधनैः or by possessors of wealth. Pāṇḍavas had sufficient wealth to perform the sacrifice : **वसुना सहिताः सवसुकाः। अतिशये** दीर्घः। तैः।(वि) and also (ब). But the word is explained stating that Paraśurāma dwelling in Rudra bestowed wealth to them : (i) ओः रुद्रस्य **कः** स्वामी **उकः** रुद्रदेहस्थितो विष्णुः परशुभृद्विभुः स वै देवः स एव देवः सवसुश्च वसुना यज्ञोच्छिष्टद्रव्येण सह वर्तमानः यज्ञोच्छिष्टधनाधिप इति यावत्। तदुक्तं (ऐत.ब्रा.५ मं., २ अ. ९ खं) 'तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तुहमि'ति। **वास्तुहं** यज्ञोच्छिष्टं। अत एव स्विष्टकृद्धोमानन्तरं होमो रुद्रदैवतः क्रियते। तथा च सवसुः उको येषां ते सवसूकास्तैः रुद्रदेहस्थितपरशुरामोपकृतैरिति यावत्।(टि). (ii) वसुना द्रव्येण सहितः सवसुः उकारवाच्ये रुद्रे नियामकतया स्थितः उः कः आनन्दरूपः परशुरामो येषां ते तथोक्ताः तैः। अश्वमेधयज्ञार्थं धनशून्यानामेषां यज्ञोच्छिष्टद्रव्याधिपरुद्रदेहान्तर्गतः परशुरामः धनं ददातीति भावः। यद्वा वसुना सहितः सवसुः स चासौ उश्च सवसूः।

यज्ञोच्छिष्टधनाधिपरुद्रान्तर्गतपरशुरामः कः कार्यकर्ता येषां ते तथोक्ता-स्तैरित्यर्थः।(या). Rudra is considered to be the lord of all the wealth remaining after a sacrifice. And Lord's form of Paraśurāma is the inner controlling deity of Rudra. Hence Pāṇḍavas had been bestowed wealth by Paraśurāma residing in Rudra. टि. further adds : अत एव **सवसूकैः** तत्प्रसादेन सवनैः वसुना द्रव्येण सहिताः सवसवः सवसवः एव सवसूकाः दीर्घोऽतिशयद्योतनार्थः। व्यासपरशुरामयोरैक्यात् तत्सन्तति-रूपाणां पाण्डवानां परशुरामसन्ततित्वेन तद्धनार्हत्वान्न भिक्षुकवत् दानपात्रीकृतत्वमात्रेण सधनत्वमित्यर्थः।(टि). 4) **आप्तैः** - (i) तमेव शरणं प्राप्तैः। हतपित्रादिभ्यः बालकेभ्यो यागार्थं धनं न ग्रहीष्यामिति युधिष्ठिर(रो ?) मनोनिर्बन्धात् (निरबध्नात् ?) यागश्च कर्तव्यः धनं विना यागानिष्पत्तेः इति भावेन **शरणं** यातैरिति भावः।(टि). (ii) (धनं प्राप्तैः) तमेव शरणं प्राप्तैः। (या). आप्तैः can mean धनं प्राप्तैः। But it is better to understand it as शरणं प्राप्तैः = those who had resorted to Lord Kṛṣṇa to gain wealth. The reason is stated by टि. Yudhiṣṭhira had vowed that he will not receive wealth needed for the sacrifice from those who had lost their fathers in the great war. There were very few such wealthy persons left. So Pāṇḍavas had to approach Lord Kṛṣṇa for wealth. 5) **सुसवसूकैः** - (i) शोभनश्चासौ सवोऽश्वमेधश्च सुसवस्तं सुवते षू प्रसव (षूङ् प्राणिगर्भविमोचने ?) इति धातोः ते सुसवसुवः। ते च ते के च प्रशस्ताश्च ज्ञानिन इति यावत्। ते सुसवसूकास्तैः ज्ञानपूर्वकं स्वस्व(श्व)मेधकर्तृभिरित्यर्थः।(टि). (ii) सु समीचिनः सवः यज्ञः तं सुन्वन्ति कुर्वन्तीति सुसवसुवः ते च ते उकाः उत्कृष्टप्रकाशरूपाश्च बुधा इति यावत्। अथवा सुसवस्य समीचीनयज्ञस्य सुः सवनं करणं तस्मिन् उः उत्कृष्टः कः प्रकाशः ज्ञानं येषां ते तथोक्तास्तैरित्यर्थः। यज्ञकरणोपयुक्तज्ञानवद्भिरिति भावः।(या). [सु+सव+सु+उ+कः] सु = perfect; सव = sacrifice; सु = performing; उ = excellent; क = knowledge. Pāṇḍavas had excellent knowledge regarding the performance of the sacrifice. The म.ता.नि. narrates (अ.३०) : आश्वासितश्च कृष्णाभ्यां धर्मजो

दुःखितः पुनः। पराशरसुतेनोक्तः कृष्णेनानन्तराघसा॥ अपापे पापशङ्कित्वादश्वमेधैर्यजाच्युतम्। कुरुष्व राज्यं च धर्मेण पालयापालकाः प्रजाः॥ इत्युक्तः स तथा चक्रे त्यक्त्वा भोगांश्च कृत्स्नशः। गोव्रतादिव्रतैर्युक्तः पालयामास मेदिनीम्॥(२-४) .... धनस्य देवता विष्णुर्जामदग्न्योऽखिलेश्वरः॥ स शङ्करशरीरस्थो यज्ञोच्छिष्टधनाधिपः॥ (७९-८०) ... ततः कृष्णाभ्यनुज्ञाताः पाराशर्यसदस्यकाः। आरेभिरेऽश्वमेधं ते मुनिभिर्ब्रह्मवादिभिः॥ सर्वयज्ञात्मकं तेषामश्वमेधं जगत्पतिः। कारयामास भगवान्कृष्णद्वैपायनः स्वयम्॥(९४-९५) ... ततः स यज्ञो यदुवीररक्षितो व्यासोपदिष्टो मुनिभिः प्रवर्तितः। अशोभतालं सकलैर्नृपैश्च समागतैर्विप्रवरैश्च जुष्टः॥ स कृष्णयुग्मेन च भार्गवेण त्रिधा विभक्तेन परेण पुंसा। अधिष्ठितोऽशोभत विश्वमेतत् विश्वादिरूपेण यथैव तेन॥(१३३-४) ... नैतादृशः कश्चन भूतपूर्वो मखो विना रामविरिञ्चवज्रिणाम्। मखानिति प्रोचुरशेषलोका दृष्ट्वा मखं तं पुरुषोत्तमेरितम्॥ स एवमद्धा हरिदैवतः क्रतुः पञ्चाश्वमेधात्मक उच्चकल्पः। दिने दिने स्वृद्धगुणो बभूव मुदावहो वत्सरपञ्चकत्रयम्॥(१४४-५). [पादान्त्ययमक]

67) (पदच्छेदः) तदनु। सुपाण्डुतनूजैः। रेमे। क्ष्मां। पालयन्। सुपाण्डुतनूजैः। अनुपमसुखरूपः। अजः। परमः। श्रीवल्लभः। स्वधिकरूपः (सति। सुखरूपः।) जः॥

This refers to Pāṇḍavas' ruling the earthly kingdom due to the grace of Lord Kṛṣṇa. Here the second सुपाण्डुतनूजैः qualifies the first सुपाण्डुतनूजैः which refers to Pāṇḍavas. The adjective means : (i) सुपाण्डुतनूजैः शोभना चासौ पाण्डुश्च शुद्धा च सुपाण्डुः सुपाण्डुश्चासौ तनूश्च सुपाण्डुतनूः सुपाण्डुतन्वा जायन्त इति सुपाण्डुतनूजाः सशुद्धं विज्ञानं तनुं गच्छद्भिः मोक्ष इति शेषः।(टि). (ii) सु अत्यन्तं पाण्डुः शुद्धा च सा तनूश्च बाह्यदेहः स्वरूपदेहश्च तां यान्तीति सुपाण्डुतनूयाः जययोरभेदः तै बाह्यदे(हे)हैः स्वरूपदेहं प्राप्तवद्भिरिति भावः।(या). (iii) सुपाण्डु अतिशुद्धं यद्विज्ञानं तदात्मिकां तनुं यान्ति गच्छन्ति अवगच्छन्तीति सुपाण्डुतनूजाः। सुशुद्धविज्ञानात्मकस्वस्वरूपसाक्षात्कारवन्तः तैः। बाह्यशरीरादावभिमानशून्यैरित्यर्थः। अत्र यकारस्थाने जकारः।(भ). All this means that Pāṇḍavas had pure and fair bodies in this world and

had the perfect knowledge of attaining Mokṣa where they will possess their own pure bodies. The second line contains several epithets of Lord Kṛṣṇa : 1) **अनुपम-सुखरूपः** - Lord's form consists of unparalleled bliss. He is always Blissful. 2) **अजः** - Lord is Unborn. 3) **परमः** - Lord is the Supermost Being. He has none superior to Him. टि. explains : **परमः** परः सर्वकार्येभ्यः देहद्वाराजनिमत्वाज्जीवाः कार्याणि। अव्यक्तं तु विकारत्वात्। इतरत् जडमव्यक्तकार्यम् ब्रह्माण्डादिकं तु कार्यकार्यम्। एवं सर्वाणि कार्याणि। तेभ्यः जीवजडात्मकेभ्यः परः विलक्षणः अक्षरात्पर इत्यर्थः।(टि). He is superior to all souls, material objects and even to Goddess Lakṣmī. 4) **स्वधिकरूपः जः** (reading of टि). तत्प्रभेदिते तस्य उक्तस्य गुणत्रयात्मकस्य प्रभेदेन गुणत्रयन्यूनाधिक्यरूपेण जाते महदादिपृथिव्यन्ते प्राकृते तद्विकारे विकृतसंज्ञे बृहदण्डे ब्रह्माण्डेऽपि नियामकतया सुत-रामधिकानि रूपाणि यस्य सः **स्वधिकरूपः** अनन्तरूपः **जः** प्रादुर्भूतः। तदुक्तं 'तत्सृष्ट्वा तदेवानुप्राविशत्', 'अजायमानो बहुधा विजायते' इत्यादौ। (टि). [सु+अधिक+रूपः+जः] सु = too much, अधिक = more; रूप = forms; जः = manifested. The Lord manifested His infinite number of forms residing as Inner Controller in all infinite objects in this universe. This is read differently and explained : (i) सर्वपालकस्य विशिष्य क्ष्मापाल-नोक्तिर्लोकदृष्ट्यनुसारेणैवेति भावेनोक्तम्। **सति ज** इति। जः यः सति सच्छब्दः कार्यवाची। महदादि पृथिव्यन्ते सर्वस्मिन्कार्ये तथा ब्रह्माण्डेऽपि नियामकतया अनेकधा वर्तते स भगवानित्यन्वयः।(भ). The Lord resides as Inner Controller in the innumerable material objects in this universe. (ii) **सति सुखरूपः अजः** - **सति** महदादिकार्ये **सुखरूपः** सु निर्दुष्टं यथा भवति तथा खेन आकाशेन दृष्टान्तेन रूप्यत इति सुखरूपः। आकाशवत्सर्वकार्येषु प्रविष्टतया ज्ञेय इति भावः। (अथवा खैः ब्रह्मादीन्द्रियैः रूप्यते ज्ञायत इति खरूपः।) **अजः** जननरहितः (नित्यमुक्तः) स इति संबंधः।(या). (iii) **सति खरूपोऽजः** - सति = कार्यविषये खरूपः = खमिव सर्वत्रानुविष्टः। अन्तर्यामी। अथाप्यजः खमिवैव।(ब). (iv) **सति खरूपो जः** कार्येषु प्रविष्टस्य

आकाशस्य इव हरेरपि विकारो न मन्तव्यः। [जः=यः] (वि.) All this means that the Lord resides in all objects in this universe, like *Ākāśa* or ether. Note : या. and ब. understand first जः as यः (जययोरभेदः) and they understand second जः = अजः - unborn. वि. reads first जः as अजः = unborn and second जः=यः. टि. reads first जः as अजः = unborn and second जः is understand as प्रादुर्भूतः = manifested. The म.ता.नि. narrates (अ.३०) : द्विरूपकृष्णप्रहितेषु पाण्डुषु क्षितिं प्रशासत्सु न कश्चनातुरः। न चाक्रमान्मृत्युरभून्न नार्यो विभर्तृका नो विधुरा नराश्च॥ शब्दादयश्चासुरतीव हृद्या निकामवर्षी च सुरेश्वरोऽभूत्। प्रजा अनास्पृष्टसमस्ततापा अनन्य-भक्त्याच्युतमर्चयन्ति॥ पृथ्वी च गावः ससरस्वतीका निकामदोहा अभवन्सदैव। अब्दाब्धिनद्यो गिरिवृक्षजङ्गमाः सर्वेऽपि रत्नप्रसवा बभूवुः॥ कृष्णाश्रयात्सर्वमिदं वशे ते विधाय सम्यक्परिपालयन्तः। दिवीव देवा मुमुदुः सदैव मुनीन्द्रगन्धर्वनृपादिभिर्युताः। समुज्ज्वला पाण्डवकीर्तिनारी पदं विधायासुरपक्षमूर्धसु। वराभये चैव सतां कराभ्यां कृष्णप्रसूता जगदण्ड-मावृणोत्॥ पातालपादां पृथिवीनितम्बामाकाशमध्यां करसन्तताशाम्। ग्रहर्क्षताराभरणद्युवक्षसं विरिञ्चलोकस्थित(स्थल)सन्मुखाम्बुजाम्॥ विकुण्ठ-नाथाभयहस्तमादरान्मूर्ध्ना वहन्तीं वरभारताख्याम्। निशम्य तामीक्ष्य समस्तलोकाः पवित्रिता वेदिभवामिवान्याम्॥ (२४-३०). [पादान्त्ययमक]

68) (पदच्छेदः) सुगतिं। प(च)रमां। अददात्। निजयोग्यां। ज्ञानिसुततिपरमां। अददात्। पार्थानां। सयदूनां। सः। पितृप्रेष्यादिनामिनां। सयदूनां॥

This refers to Lord Kṛṣṇa's granting *mokṣa* to Pāṇḍavas and others according to their individual *yogyatā* or fitness or what they deserve as per their own *svarūpayogyatā* or inherent fitness. The word अददात् has been interpreted in three ways : a) अददात् = प्रादात् = gave, granted. [Note : अददात् अदादिति वक्तव्ये दकारस्याभ्यासः छान्दसः सचातिशयार्थः अतिशयेनादादिति।(या). 'डुदाञ् दाने' लङ्। अदादिति वक्तव्ये दकारस्याभ्यासः छान्दसः इति यादुपत्यं

भ्रममूलमेव प्रक्षिप्तं भवेत्। दात्रः लङ् स्वरसत एव रूपसिद्धेः छान्दसत्वकल्पनप्रसङ्गाभावात्।(ब)] (See Appendix - VIII) b) (i) **अददात्** - अत्तीति अत् (अदत् ?) आकारवाच्यं चापरं कार्यरूपं ब्रह्म चतुर्मुखः अददाः तमत्तीति **अददात्**।(टि). (ii) **अददात् अत्तीत्यदन्** अदंश्चासावश्च ब्रह्मा च सोऽददः तं अत्तीति अददात् कृष्ण इत्यर्थः।(या) [अदत् = Devouring; अ = Brahmā; अत् = Swallowing] Lord Kṛṣṇa swallows even Brahmā who devours at the time of *pralaya* even Śeṣa, Rudra and others. This is understood as *sāyujya-mukti* or final release in the form of entering the body of the Lord. This is made clear by commentators : - (i) अदच्चाकारवाच्यं चापरं ब्रह्माददा मतम्। तदत्ता **ह्यददादेव** सुरोदरविधिं ग्रसन्। अन्नारो(दोऽ)हं हरेरन्नं क्ष्मांऽम इत्यादिवाक्यतः। सायुज्यदो हरिस्तस्य।(टी.) (ii) सुरोदरविधिं ग्रसन् सुरा रुद्राद्या उदरे यस्य सुरोदरः स चासौ विधिश्च तं ग्रसन् स्वोदरे निवेशयन् तस्य सायुज्यद इति यावत्॥ ननु भक्षणमन्नस्य घटते चतुर्मुखस्यानन्नत्वात्कथं भक्षणमित्यतोऽदनमुपपादयति टीकाकारः अन्नारोहमिति। कीदृशं विधिम्। अन्नारोहम्। अन्नरूपे पृथिव्युदके आरोहति तत्राभिमानित्वेन वर्तमानस्तम्। तदुक्तं 'आपश्च पृथिवी चान्नमेतन्मया यानि ह्यन्नानि भवन्ति। स ईक्षतेमेनु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा' इत्यादौ।(टि). (iii) **अददात्** अशब्दवदाशब्दोऽपि ब्रह्मवाची। 'व्यमीमिषदा इत्यध्यात्ममि'त्यादिश्रौतप्रयोगात्। 'पूर्णत्वाद्या' इति तद्भाष्योक्तेश्च। प्रकृते तु आ पदेन चतुर्मुखाख्यमपरं ब्रह्म ग्राह्यम्। तथा च **अदत्** गरुडशेषादि-सर्वदेवादनकर्तृ यत् आकारवाच्यमपरं ब्रह्म चतुर्मुखाख्यं तदत्तीति तथोक्तः। प्रलयकाले सर्वे सुराः क्रमेण स्वोत्तमेषु लीनदेहाः अन्ततो विरिञ्चोदरं प्रविशन्ति। सोऽपि भगवन्तं प्रविशतीति प्रसिद्धम्। यथाह तैत्तिरीयश्रुतिः 'अहमन्नादोऽहमन्नादोऽहमन्नादः अहमन्नमि'ति। अद्यत्वादन्नं देवजातमत्तीत्यन्नादः। सोऽहं भगवतोऽन्नमदनयोग्योऽस्मीत्यर्थः। मुक्तब्रह्मवाक्यमिदम्। उक्तं च भागवते - 'क्ष्माम्भोऽनिलानलवियन्मनइन्द्रियार्थभूतादिभिः परिवृतः प्रतिसंजिघृक्षुः। अव्याकृतं विशति यर्हि गुणत्रयात्मा कालं परं स्वमनुभूय परं(रः) स्वयंभूः' इति। तथा च सर्वसुरोदरविधेः सायुज्यप्रद इत्यर्थः।(भ.) (iii) अत्र ब्रह्मणः शेषाद्यदनं कृष्णस्य ब्रह्मादनं प्रळये स्वदेहनाशार्थमागतानां ग्रसनं मुक्तौ सायुज्यं चेत्युभयविधं विवक्षितमिति ज्ञातव्यम्।(या) But ब.

understands अददात् as 'Destroyer of demons' : **अददात्** - चरमपादस्थ 'सयदूना' मित्यनेनास्य सम्बन्धः। यन् = वायुः, उः = शंकरः, आभ्यां सहितानां समेषामपि देवानां ददन्ते हविरादिकमिति ददाः = सन्तः। 'दद दाने'। संप्रदानत्वाविवक्षया षष्ठी। ते न भवन्तीत्यददाः = दैत्याः तानत्तीति तादृशः।(ब). The word **ज्ञानिसुततिपरमां** states that the status of final release attained by Pāṇḍavas, Yadus and others was higher than the status attained by gods having God's knowledge : (i) ज्ञानिषु सुपूज्या ततिः ज्ञानिसुततिः तत्र परमा उत्तमा ताम्। कोऽर्थः। यतो ज्ञानिषु देवसमूह उत्तमः अतः ततोऽप्युत्तमामित्यर्थः।(टि). (ii) ज्ञानिनां देवादीनां सु शोभना ततिः समूहो य(स्यां सा)स्यास्सा तथोक्ता ताम्। **परमां** इतरदेवतापेक्षयोत्तमाम्।(या) The **परमां** or **चरमां** qualifying **सुगतिं** indicates that Pāṇḍavas and others were granted the highest *sāyujya* state of final release among four states viz. *sālokya, sāmīpya, sārūpya* and *sāyujya.* चरमां सायुज्यरूपामिति वा।(या). The last two words **पितृप्रेष्यादिनामिनां** and **सयदूनाम्** are quite meaningful : 1) **पितृप्रेष्यादिनामिनाम्** (i) पितृनामवन्तो वसुदेवाद्या प्रेष्यनामवन्त उद्धवाद्याः पुत्रनामवन्तश्चारुदेष्णाद्या सखिसुहृन्मातुलेयनामवन्तः पार्थाः एवंभूतानामित्यर्थः।(टि). (ii) अत्र प्रेष्यशब्दः पुत्रपरः प्रकर्षेण पितुरीषणाविषयत्वात्। तथा च वसुदेवाद्याः पितरः, चारुदेष्णाद्याः प्रेष्याः पुत्राः, आदिपदेन पाण्डवाः पैतृष्वसेयाः, भीष्मकाद्याः श्वसुराः, गदादयो भ्रातरः, शूरादयः पितामहाः इत्येवं नाममात्रवतामित्यर्थः।(भ). (iii) वसुदेवादयः पितरः उद्धवादयः प्रेष्याः आदिपदात् प्रद्युम्नादयः पुत्राः पार्थाः पितृष्वसुः पुत्राः बलभद्रादयो भ्रातर इत्यादि ग्राह्यम्। तथा च पितृप्रेष्यादिनामानि शब्दाः एषां सन्तीति तथोक्ताः तेषामित्यर्थः। अनेन वसुदेवादिषु पित्रादिशब्दमात्रम्। नत्वर्थः। कृष्णस्य जननाभावादिति सूचयति। तेन चैतेषां कृष्णेन शरीरसंबन्धप्रयुक्तस्नेहेन मोक्षो दत्त इति शङ्का निराकृतेतिज्ञातव्यम्।(या). It is clarified that Lord Kṛṣṇa granted *mokṣa* to all His kinsmen not because they were related to Him, but because they deserved because of their *svarūpayogyatā.* 2) **सयदूनाम्** (i) यन्ति मोक्षमार्गे सदा चलन्ति ते यन्तः

मरुतः भूतभविष्यद्वर्तमानाः सूत्रात्मानः तथा वः रुद्राः यन्तश्च वश्च यदवस्तेषाम्। यन्नामिनां उनामिनां भूतभविष्यद्वर्तमानानां रुद्राणां च सुगतिं प्रादात्। तथा च यदुभिः वायुरुद्रैः सहिताः सयदवस्तेषां पार्थानां सुगतिप्रदः अनेन कैमुत्यं ध्वनितम्। यो ब्रह्मादीनां सायुज्यादिदस्तस्य यदुपार्थगतिदानं किं चित्रमिति।(टि). (ii) न केवलं पार्थानां यदूनामेव गतिमदात्, किं तु **स श्रीकृष्णो यदूनां** नित्यं यान्तीति यन्तो मरुतः। उकारवाच्या रुद्राः यन्तश्च अवश्च यदवस्तेषाम्। उपलक्षणमेतत्। मरुद्रुद्रवस्वादित्याद्यवतारभूतानां पाण्डुभूरिश्रवःप्रभृतीनां पार्थिवानां च सुगतिमददात्।(भ). (iii) यान्तीति यन्तो मरुतः उकारवाच्यो रुद्रः तैस्सहिता गरुडाद्या देवाः सयदवः तेषाम्। अत्र रुद्रवाचकेन उकारेण रुद्रो न ग्राह्यः। किंतु शेषो ग्राह्यः। रुद्रस्येदानीं मुक्त्यभावात्। कर्मणि षष्ठी। (यातीति यन् गरुडः द्वीपांबुराशिकुलाचलादि चालकवेगवद्गरुद्भ्या-मुड्डीयोड्डीयगन्तुर्गरुडस्य अब्भक्षो वायुभक्ष इतिवदसाधारण्येन व्यपदेशमाश्रित्य ग्रहणात् गरुडादिदेवा इति वा)। तथा च सयदून् मरुच्छेषादिदेवसहितान् गरुडादीन्।(या). [स = together with; यत् = Maruts; उ = Rudra or Śeṣa;] Lord Kṛṣṇa granted *mokṣa* to Pāṇḍavas together with Maruts, Rudra, Śeṣa, Garuḍa and others. When the Lord grants *mokṣa* to such higher gods what to say of His granting it to Pāṇḍavas and Yadus. Note that the first **सयदूनाम्** means यदुभिः सहितानाम् = Together with Yadus or Yādavas. या. adds : अत्र पितरः शेषाद्याः पुत्राः इन्द्राद्याः प्रेष्या भृत्याः केचिदित्यवगन्तव्यम्। अत्र चेदं विशेषणं जन्यानां जनकेषु भृत्यानां स्वामिषु देहलयो भवतीति सूचयितुम्।(या). **[पादान्त्ययमक]**

69) **(पदच्छेदः) रेमे। तत्र। अपिसुखी। परमः। अनन्तः। ननन्द। तत्र। अपि। सुखी। प्राणेन। इन्दिरया। च। प्रयुतः। नित्यं। महागुणेन्दिरया। च॥**

टि. states the gist of this verse : तेषां महात्मनां ब्रह्मादीनां सायुज्यादिदः स वै स एव नारायणः **तत्र** स्वर्गादौ देवलोके। ... रेमे। मूलरूपतां प्राप्तैः सयदुभिः पार्थैरिति शेषः।(टि). Lord Kṛṣṇa sported in heavenly regions with Pāṇḍavas and others

who had been granted release by Him. First **तत्र** = स्वर्गादौ देवलोके।(टि); तेषां मध्ये। (या) वैकुण्ठे।(भ) = in heavenly regions like Vaikuṇṭha. The words **अपिसुखी,** (first **तत्रापिसुखी = तत्र + अपिसुखी] परमः, अनन्तः** and **सुखी** [second **तत्रापिसुखी = तत्र+अपि+सुखी]** all qualify Lord Kṛṣṇa : 1) (i) **अपिसुखी** अविसुखी सुखाद्विपरितं दुःखं विसुखं तदभावोऽविसुखं तदस्यास्तीति--अविसुखी नित्यसुखी।(टि). (ii) अत्र तृतीयोऽतिशय इत्यतो बकारस्थाने पकारः वबयोश्चाभेदः। तथा च विसुखं सुखविरुद्धं दुःखं तदस्यास्तीति विसुखी दुःखी स न भवतीत्यविसुखी सर्वथा दुःखास्पृष्ट इत्यर्थः।(या). [**अपिसुखी** = अ+पिसुखी = अ+विसुखी = अ+दुःखी = दुःखरहित.] Lord Kṛṣṇa is never touched by any kind of sorrow or misery. Because He is **परम** and **अनन्त.** 2) **परमः** = i) सर्वोत्तमः।(या). **The Lord is the Supermost** Person having none superior to Him. टि. explains **परमः** मा = नास्ति परः = उत्तमो यस्मात्स परमः स्वव्यतिरिक्तसर्वोत्तमरहितः। following टी-न तस्मादुत्तमोऽन्योऽस्ति॥ 3) **अनन्तः** - Infinite in all ways - in space, in time and in qualities : देशतः कालतः गुणतश्चान्तरहितः।(टि). 4) **तत्रापिसुखी** - (i) **सुखी** सर्वत्रापि सुखी पूर्णं सुखं यस्य सः सुखी भूमनिन्देति वचनात् पूर्णसुखो नारायणो देवः सर्वत्रापि पूर्णसुख एव **तत्रापि** वैकुण्ठेऽपि **ननन्द। कस्मात्** अतिसमृद्धितः अत्युद्रिक्तानन्दसमृद्धितः। कैमुत्याभिप्रायमिदम्। यो भूम्यादिलोकेषु पूर्णसुखः सन् रेमे स नित्यचिदात्मकलक्ष्म्यात्मके वैकुण्ठे **पूर्णसुखः** सन् ननन्देति किमु वक्तव्यम्।(टि). (ii) **सुखी** सर्वत्रापि सुपूर्णसुखो देवः (नित्याभिव्यक्तसुखः।) **तत्रापि** वैकुण्ठादिस्थानेष्वपि **ननन्द** अतिसमृद्धितया व्यक्तोऽभवदिति यावत्।(या). The Lord is सुखी, full of infinite and undiluted bliss, even in other regions. In Vaikuṇṭha, He manifests with the same fullest, infinite and undiluted bliss. ना. understands differently : **तत्रापिसुखी** अपिरभिव्याप्तौ पूर्णसुखवान्। **नन्दतः समृद्धितः** टु नदि-समृद्धाविति धातोः। **रेमे** चिक्रीडे। कीदृशः **तत्रापिसुखी** तान् त्रायन्त इति तत्राः 'आतोऽनुपसर्गे कः' (पा ३.२.३) पार्थादीनां' रक्षकः, पातीति पः सोऽस्यास्तीति पी न पी अपी रक्षकरहितः, सुशोभनान्यप्राकृतानि

खानीन्द्रियाणि सन्त्यस्येति सुखी तत्राश्चासावपि चासौ सुखी चेति त्रिपदः कर्मधारयः।(ना). First **तत्रापिसुखी** means fully pervaded by bliss holding अपि = अभि = pervaded. Second **तत्रापिसुखी** = तत्र+अपि+सुखी. a) तत्र = तान् त्रायते = protector of Pāṇḍavas. b) अपि = न पः अस्य = Having no protector. c) सुखी = सु खानि अस्य = Having divine organs. All the three refer to Lord Kṛṣṇa. He is the Protector of Pāṇḍavas; He does not have a protector for Himself and He has divine organs. The words **प्राणेन इन्दिरया च प्रयुतः** also qualify the Lord : (i) तत्रापि रमया नित्यं प्राणेन **प्रयतः** प्रभुः। अन्यैस्तु युत एवायं तारतम्येन तेषु च॥(टी). (ii) **प्राणेन** भूतगत्या ब्रह्मणा **इन्दिरया च प्रयुतः** सायुज्यरूपप्रयुतिमद्रमाब्रह्मयुतः। प्रशब्देन विशेषणात्। अन्यैः मुक्तगरुडशेषादिभिर्युतस्तेषां सर्वाङ्गसायुज्याभावात्। तत्रापि तारतम्य-मनुसंधेयमित्याह तारतम्येति।(टि). (iii) **प्रयुतः** प्रकर्षेण साक्षादेव युतः। अनेन शेषादीनां तारतम्येन योगमात्रं श्रीप्राणयोः प्रकृष्टो योग इति सूचितम्।(या). The word **प्रयुत** is significant. In *sāyujya-mukti,* Vāyu and Lakṣmī pervade (प्रयुत) Lord's entire body, whereas other deities pervade (युत) only a part of Lord's body. The word **प्रयुतः** should also be read with **नित्यं महागुणेन्दिरया च**. This phrase clarifies that there is gradation between Vāyu and Lakṣmī even though both, at *sāyujya* pervade Lord's body entirely. ***Read*** : (i) ननु तर्हि रमाब्रह्मणोः सर्वाङ्गसायुज्यभाजोः साम्यं प्राप्तमित्यत आह **नित्यं महागुणेन्दिरया च** नित्यं सर्वदा महान्तो गुणा आनन्दादयो यस्याः सा महागुणा सा च इन्दिरा च तया। अथवा महती ब्रह्मादिभ्य उत्कृष्टा गुणेन्दिरा गुणश्रीर्गुणसम्पत्तिर्यस्याः सा तथोक्ता तया च। **नित्यं प्रयुतः** तादात्म्येनैव संयुतः. अर्धनारीनारायणात्मेत्यर्थः। अनेन ब्रह्मसाम्यपरिहारः। तस्य प्रागविद्यमानमेव सायुज्यं भगवदुपासनेन प्राप्तं अतः सावधिकं भगवत्यास्तु सार्वकालिकम् उपासनानिरपेक्षं च। तदुक्तं - 'समाना चासृत्युपक्रमादमृतत्वं चानुपोष्ये'ति (४।२।७) ब्रह्मसूत्रे। क्षीरनीरसायुज्यवत् ब्रह्मणः सायुज्यम्। क्षीरस्थघृतवत् लक्ष्मीसायुज्यं स्वभावसिद्धमिति सायुज्येऽतिविशेषः।(टि). (ii) श्रीप्राणयोरपि किं प्रयुक्तत्वं समानम्।

नेत्याह **महागुणेन्दिरया च प्रयुत** इति। महान्तः प्राणापेक्षयोत्कृष्टाः गुणाः यस्यास्सा तया इन्दिरया प्रकर्षेणार्धदेहात्मना च युत इत्यर्थः। अत्र महागुणत्वं हेतुतयोक्तं। यद्वा महागुणेन्दिरा स्वरूपभूतलक्ष्मीः तया प्रयुतः तादात्म्येन संगत इत्यर्थः। (प्राणे इन्दिराद्वारा रेमे न तु द्वारपरित्यागेन। इन्दिरायां स्वात्मकस्त्रीरूपेन्दिरया प्रयुतः रेमे स्वरमणत्वात्।)(या). Vāyu or Brahmā attain *sāyujya* whereas Lakṣmī exists always in *sāyujya* state. ना. understands differently : महागुणेन्दिरयेति इन्दिराविशेषणम्। महागुणानां ज्ञानानन्दादीनामिन्दिरा शोभा यस्याः सा तया।(ना). The Lord sports with Lakṣmī who has the beauty or lustre due to excellent qualities like knowledge, bliss, and so on. **[पादान्त्ययमक]**

70) (पदच्छेदः) **एवं। सर्वाणि। हरेः। रूपाणि। श्रीपतेः। सुपर्वाणिहरेः। पूर्णसुखानि। सुभान्ति। प्रततानि। निरन्तराणि। सुभान्ति॥**

Lord Kṛṣṇa is an incarnation of the Supreme Lord Viṣṇu. Śrī Madhvācārya has summed up main events of Lord Kṛṣṇa's life in the previous 69 verses. In this verse, he declares that in a similar way all the incarnated forms of the Lord like Matsya, Kūrma and others should be understood to be **पूर्णसुखानि**, सुभान्ति, **प्रततानि**, **निरन्तराणि**, **सुभान्ति** and so on. *Read* : (i) (सर्वाणि मत्स्यादिरूपाणि भारतप्रतिपाद्यकृष्णरूपवत् ज्ञानिभिर्ज्ञेयानीत्यर्थः)।(या). (ii) एवं प्रादुर्भावप्रभृति परंधामप्राप्तिपर्यन्तं कृष्णावतारचरितं वाचयित्वा परमात्मनो मूलरूपवदेव पूर्णत्वं प्रतिपाद्य तथैवावतारान्तरेष्वतिदिशति - **एवं सर्वाणि हरेरिति**।(ना). The words are explained : 1. **रूपाणि** - मत्स्यादिरूपाणि = Incarnated forms (अवतार) like Matsya, Kūrma and others. 2) **सुपर्वाणिहरेः** - (i) 'सुपर्वाणः सुमनस' इत्यभिधानात् सुपर्वाणो देवास्तेषाम् आणिः आधारः स चासौ हरिः = स्वस्थानादेः वैरिभ्यो दैत्येभ्य आहर्ता तथा दैत्यमर्दनश्चेति सुपर्वाणिहरिः तस्य। तदाह 'आणिं न रथ्यममृताधितस्थुरिह ब्रवीतु य उ तच्चिकेत तत्' इति (ऋ.मं.१.सू.३४.मं.६) श्रुतिः।(टि) (ii) सुपर्वाणः देवाः तेषां आणिः (चाचलिः ?) मुख्याश्रय इति यावत्। स्वस्थानादेः दैत्यान् हरतीति हरिः।

सुपार्वाणिश्चासौ हरिश्चेति विग्रहः तस्येत्यर्थः।(या). So सुपर्वाणः = gods; आणिः = support; हरिः = destroyer. The Lord is the Support of all gods and the Destroyer of all demons. ना. explains differently : **सुपर्वाणिहरेः** सुपर्वणां देवानामणिः अण गतौ अणनं अणिः गमनज्ञानादिव्यापारं हरति स्वकार्योन्मुखं करोतीति सुपर्वाणिहरिः तस्य सकलप्रेरकाणामपि तत्त्वाभिमानिदेवानां प्रतीतिप्रवृत्त्यादिनियामकस्येत्यर्थः।(ना). सुपर्वणाम् = of the gods; अणिः = functions like moving and knowing; हरिः = draws towards Himself. That is, the Lord draws towards Himself all the functions of the gods like moving and knowing. He makes them to move towards Him and know Him more and more. 3) **पूर्णसुखानि** = सम्पूर्णसुखरूपाणि = Full of complete and perfect bliss. 4) **सुभान्ति** = अन्ति अन्तिके सुभानि सुप्रभाणीति सुभान्ति (टि) = Shining with the most brilliant lustre. 5) **प्रततानि** = प्रकर्षेण ततानि व्याप्तानि (टि) = Fully and completely all-pervasive. 6) **निरन्तराणि** - परस्परं निर्गतान्तराणि निर्भेदानि। तदुक्तं 'एकमेवाद्वितीयं', 'नेह नानास्ति किंचने'ति। 'उदरमन्तरं कुरुते अथ तस्य भयं भवती'ति विपक्षे दण्डश्चोक्तः। 'उदरं ब्रह्मेति शर्कराक्ष्या उपासत' इति श्रुतेरुदरशब्दो ब्रह्मवाची। अत एव श्रुतिगीतायां 'उदरमुपासते यर्हि वर्त्मनि सूक्ष्मदृश' इति व्याख्यानम्।(टि). None should think that there is distinction of any type among the several incarnated forms of the Lord. They are inherently identical in all respects. 7) **सुभान्ति** - a) स्वयं तु नितरां सुष्ठु भान्ति च ज्योतिषा सह। स्वप्रकाशानीत्यर्थः। (टि). They are self-lustrous. b) सुष्ठु भा प्रभा येषां ते सुभाः (लक्ष्म्यादयो देवाः) तेषां अन्ति अन्तिके (हृदये बहिः समीपे वा) स्थितानीति शेषः।(या). Lord's forms reside in the hearts of lustrous deities like Lakṣmī and also outside but nearby them. It is quite worthy to note टि's introduction to this verse : मन्वादि केचिद्ब्रुवते ह्यास्तिकादि तथाऽपरे। तथोपरिचराद्यन्ये भारतं परिचक्षते॥ इति भारत-व्याख्यानसंप्रदायमव(नु ?)रुध्य श्लोकं व्याख्याति एवं **सर्वाणीति**। हरेः

नारायणस्य समस्तगुणसम्पूर्णं सर्वदोषविवर्जितं प्राधान्येनोक्तमार्गतः आस्तीकादिभारताख्या(तव्या)नविषयः यत् श्रीकृष्णरूपं वर्णितम्। अथवा मन्वादिना प्रकारेण क्रमात्समस्तगुणसंपूर्णं सर्वदोषविवर्जितं भारताख्या(तव्याख्या)नविषयो यत्सर्वान्तर्यामिकं रूपं वर्णितम्। एवं तद्वत् कृष्णरूपवत् अन्तर्यामिरूपवच्च सर्वाणि रूपाणि मत्स्यादिरूपाणि समस्तगुणसम्पूर्णानि सर्वदोषविवर्जितानीत्यवधार्यताम्।(टि). This has reference to the following म.ता.नि. verses : मन्वादि केचिद्बुवते ह्यास्तीकादि तथाऽपरे। तथोपरिचराद्यन्ये भारतं परिचक्षते॥ सकृष्णान् पाण्डवान् गृह्य योऽयमर्थः प्रवर्तते। प्रातिलोम्यादिवैचित्र्यात् तमास्तीकं प्रचक्षते॥ धर्मो भक्त्यादिदशकः श्रुतादिः शीलवैनयौ। सब्रह्मकास्तु ते यत्र मन्वादिं तं विदुर्बुधाः॥ नारायणस्य नामानि सर्वाणि वचनानि तु। तत्सामर्थ्याभिधायीनि तमौपरिचरं विदुः॥(२.१३८-१४१) The म.ता.नि. narrates : इत्थं विचिन्त्य परमः स तु वासुदेवनामा बभूव निजमुक्तिपदप्रदाता। तस्याज्ञयैव नियताऽथ रमाऽपि रूपं बभ्रे द्वितीयमपि यत्प्रवदन्ति मायाम्॥ संकर्षणश्च स बभूव पुनः सुनित्यः संहारकारणवपुस्तदनुज्ञयैव। देवी जयेत्यनुबभूव स सृष्टिहेतोः प्रद्युम्नतामुपगतः कृतितां च देवी॥ स्थित्यै पुनः स भगवाननिरुद्धनामा देवी च शान्तिरभवच्छरदां सहस्रम्। स्थित्वा स्वमूर्तिभिरमूभिरचिन्त्यशक्तिः प्रद्युम्नरूपक इमांश्चरमात्मनेऽदात्॥ निर्देहकान् स भगवाननिरुद्धनामा जीवान् स्वकर्मसहितानुदरे निवेश्य। चक्रेऽथ देहसहितान् क्रमशः स्वयंभुप्राणात्मशेषगरुडेशमुखान्समग्रान्॥ पञ्चात्मकः स भगवान् द्विषडात्मकोऽभूत्पञ्चद्वयी शतसहस्रपरोऽमितश्च। एकः समोऽप्यखिलदोषसमुज्झितोऽपि सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूत्॥(१.६-१०) मत्स्यकूर्मवराहाश्च सिंहवामनभार्गवाः॥ राघवः कृष्णबुद्धौ च कृष्णद्वैपायनस्तथा। कपिलो दत्तऋषभौ शिंशुमारो रुचेः सुतः॥ नारायणो हरिः कृष्णस्तापसो मनुरेव च। महिदासस्तथा हंसः स्त्रीरूपो हयशीर्षवान्॥ तथैव वडवावक्त्रः कल्की धन्वन्तरिः प्रभुः। इत्याद्याः केवलो विष्णुर्नैषां भेदः कथञ्चन॥ न विशेषो गुणैः सर्वैर्बलज्ञानादिभिः क्वचित्॥(२.२५-९). [पादान्त्ययमक]

71) (पदच्छेदः) राम। राम। महाव। अहो। माया। ते। सुदुरासदा। वाद। सादद। कः। लोके। पादौ। एव। तव। आसजेत्॥

This is a unique verse in the entire range of Sanskrit literature. Firstly, the next verse (72) is a reversal of this verse. [समस्तस्य श्लोकस्य प्रातिलोम्येन पाठे पुनरन्य एव श्लोको भवतीति प्रतिलोमयमकमिदम्।-B.] [रामरामेति श्लोकस्य प्रत्यक्षरप्रातिलोम्येन जेत्सदेति श्लोको भवति इति प्रत्यक्षरप्रति-लोमोऽयं श्लोकः अतिचित्रकवितां दर्शयितुं रचितः।(ल.टि.)] Secondly, ना. has shown how this same verse describes twelve incarnations of Lord Viṣṇu including that of Rāma mentioned by name in this verse. [See Appendix-II] At the outset of its commentary on this verse, टि. justifies describing Rāma, even though all the events described in this work viz. *Yamakabhārata,* relate to the story of the ***Mahābhārata*** and not that of the ***Rāmāyaṇa.*** Accordingly, it should be remembered that the *Mahābhārata* does contain the story of the *Rāmāyaṇa* as narrated by sage Markāṇḍeya : भगवन्तं रामं नित्यापरोक्षितं हनुमद्रूपस्वेष्टदैवतं स्तौति रामेति। न च वक्तव्यं रामायण-व्याख्यानावसरोचितं रामस्तवनं इदं तु भारतव्याख्यानम् इति। अत एव पूर्वश्लोके मत्स्यादीनां प्रस्तुतिं चकार। न च विशिष्य रामस्तवने का पूर्वसंगतिरिति वक्तव्यम्। श्रीमन्महाभारते मार्कण्डेयसमाख्यायां रामकथाया अप्युक्तत्वात्।(टि) [*Read* : उक्ता रामकथाप्यस्मिन् मार्कण्डेयसमाख्यगा॥ म.ता.नि.२-५१] As in other verses, this verse also contains very meaningful words : 1) राम = हे राम = O Rāma. 2) राम - This single word has been explained severally. (i) रं अग्निबीजं तथा च र इत्यस्यार्थो दाहकेति। आमः अपक्वः पापार्द्रः। दुष्टजनमनोदेहादीनां पाको हरिभक्त्यादिसम्पादनम्। तदुक्तं 'क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः। ज्ञानिनामनुतापं वा विपत्तिं तदजानतामि'ति।(भाग.१० स्कं)(टि.) Rāma burns to ashes the sins of sinners. (ii) अमानां अपक्वानां दुष्टानां र इति रामस्तस्य संबुद्धिः हे रामेति। अशेषदुष्टानां दाहक।(टि). र अग्ने। रकार-स्याग्निबीजत्वात्। दुष्टदाहकेति यावत्। (या). Rāma burns to ashes the wicked. (iii) आमो रोगः तापरूपः तद्दाहक स्वभक्तानां

तापत्रयनिवारक।(टि) **आम अपाक**। अत्र पाकशब्देन तापो लक्ष्यते। तथा च अतापेत्यर्थः। तापत्रयपरिहर्तरिति (रहितेति ) यावत्। रश्चासावमश्च रामः।(या). Rāma removes all kinds of miseries of His devotees. (iv) **रैः** दाहकैः तापत्रयैः अम अमेय अविषयीक्रियमाण नित्यं तापत्रयोज्झितेत्यर्थः।(टि). (v) राणां तापत्रयाणां आ समन्तात् मा निषेध उज्झितिर्यस्य स तथोक्तस्तत्संबुद्धिः हे राम।(टि). (iv) & (v) Rāma is ever free from miseries. (vi) रमुक्रीडायामिति धातोः रमते सः रः क्रीडाश्रयः तत्संबुद्धिः रेति। गुणगुणिनोरभेदात् क्रीडारूपेति। माङ् माने न विद्यते मा मानं परिमितिर्यस्य सोऽमः। तत्संबुद्धिः अमेति। अप्रमेयेत्यर्थः।(टि) रः क्रीडारूपः अमः अप्रमेयः रश्चासावमश्च रामः तस्य संबुद्धिः। र अमेति वा।(या). Rāma is of the form of sport and is Infinite. टि. remarks "इति धन्यैर्निरपेक्षैर्मुक्तामुक्तैर्ब्रह्मादिभिः संबोध्यते।" Thus Rāma, the Supreme Lord is addressed by all good souls, released as well as unreleased, beginning from Brahmā downwards. [*Read* : अग्निबीजं रमित्येतदामोऽपक्वोऽभिधीयते। क्रीडायां रम्वमोमानवर्जितश्चोच्यते यतः॥ दाहकाऽशेषदुःखानां नित्यं तापत्रयोज्झित। क्रीडारूपाप्रमेयेति धन्यैः सम्बोध्यते हरिः॥ (टी)]
3) **महाबाहो** - (i) **महाब** + (ii) **अहो** : (i) a) **महाब** = महाबल।(टी) नामैकदेशग्रहणेन नामग्रहणमिति न्यायाच्च महाबलेति व्याख्यानम् (टि). Rāma is mighty and strong. b) **महाब** = महाव (बवयोरभेदात्)। महत् बं बलं तथा वं ज्ञानं (वा गतिगन्धनयोरिति धातोः) वान्ति गच्छन्ति परं ब्रह्म येन तत् ज्ञानं, यस्मात्स तथोक्तत्संबुद्धिः।(टि). Rāma is Mighty, Perfect knower and Source of knowledge. या. agrees. c) **महाब** = महाम (मबयोरभेदात्). महती मा ज्ञानं यस्य स महामः। महाज्ञानेति वा। (या). Rāma possesses the purest knowledge (ii) **अहो** - आश्चर्यरूप। तथोक्तं गीतायां 'सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखमि'ति।(टि). Rāma is of wonderful form.
3) अ) **महाबाहो** - महान्तो बाहवो यस्य स तथा तत्संबुद्धिः।(टि). Rāma has strong arms. 4) **ते माया** - मयं सामर्थ्यमुद्दिष्टमिति वचनात् **माया** महिमा स्वातन्त्र्यादिरूपः।(टि). Rāma's greatness is of the form of independence, overlordship and the like.

5) सुदुरासदा - मुक्तैः ब्रह्मेशपूर्वकैः दुष्प्राप्या।(टि). Rāma's greatness cannot be reached by even Brahmā, Rudra and other gods. 6) **वादसादद** a) **वाद+सादद** (i) **वाद** - वं ज्ञानं आ समन्तात् ददाति तत्संबुद्धिः।(टि). Giver of knowledge. (ii) **वादसादद** अखिलभक्तानां ब्रह्मादीनां ज्ञानं वादः तेनैव स्वयोग्यज्ञानेन सादद षद्लृविशरणगत्यवसादनेष्विति धातोः सादो गतिः तां ददाति तत्संबुद्धिः स्वगतिप्रदेति यावत्।(टि). Giver of release according to one's fitness and knowledge. (iii) वा गतिगन्धनयोरिति व्याख्यानात् वं गन्धनं भोगः सुखादेः तं आ समन्ताद्ददातीति वा वाद तत्र = मोक्षसुगतौ घ्राणादिभोगदेति यावत्।(टि). Giver of comforts of enjoying perfumes in the released state. (iv) सादोऽवसादनं तद्ददातीति तत्संबुद्धिः। अमरशत्रूणां तमोभिधनाशद। तदुक्तं 'निहता तेन दानवा' इति। 'अथ च दैत्यहतिस्तमसि स्थिरे'ति (ता.नि.२.६५). व्याख्यानात्। (टि) Giver of dark hells to demons. (v) वादस्य व्यक्तवचनस्य साकल्येन वचनस्य सादद खेदद। कस्मात्। 'विष्णोर्नु कमिति' श्रुतेः। साकल्येन लक्ष्म्यादिभिरपि वक्तुमशक्येत्यर्थः। (टि). Rāma, the Lord, is beyond the words to express fully, even by Goddess Lakṣmī. टि. adds यन्महिमानं वक्तुमशक्यो जीवराशिः असौ परमात्मा कथं भवेत्। तस्मादैक्यवादो भ्रान्तिमूलः। (टि). As no individual soul is able to describe fully the greatness of the Lord, any talk of the identity between the Lord and the soul is a clear illusion. Read also : वादसाददेत्येकं पदं वा। वादस्य वादकथायाः सादः अवसानं (संपूर्तिः) तत्प्रद। विष्णुविषये (गुरुशिष्ययोः) वादकथा केनापि साकल्येन कर्तुमशक्येति भावः।(या). No discussion between a preceptor and his pupil can exhaust the description of the greatness of Lord Viṣṇu. 7) **को लोके पादावेव तवासजेत् = लोके कः एव तव पादौ आसजेत्। लोके =** ज्ञानिवर्गे। (टि) जगति सत्यादिलोके। (या). In the entire universe (of knowers), **कः** = करोति स्ववशे शिवादीनिति कः वशीकृतशिवाहीशवीशपूर्वश्चतुर्मुखः।(टि). Brahmā. **आसजेत्** = आश्रयेत्. In the whole Universe, only Brahmā is fully attached to the holy feet of the Lord, because of his undiluted

devotion : अत एव भगवता ब्रह्माणं प्रति उक्तं 'न त्वामतिशयिष्यन्ति मुक्ता अपि कथंचन। मद्भक्तियोगाद्ज्ञानाच्च सर्वानतिशयिष्यसी'ति ॥ (टि). Note : न कोऽपि इत्याक्षेपार्थो वा कः।(टि). It means : No soul in this universe has the capacity to grasp fully the greatness of the Lord and submit to His feet completely, continuously and permanently. As said above, this is a unique verse which when reversed results into the next verse. The grandeur and majesty of Lord Rāma can be found described in म.ता.नि. in the following and other verses : स तैः समावृतो विभुर्ययौ दिशं तदोत्तराम्। अनन्तसूर्यदीधितिर्दुरन्तसद्गुणार्णवः॥ सहस्रसूर्यमण्डलज्वलत्किरीटमूर्धजः। सुनीलकुन्तलावृतामितेन्दुकान्तिसन्मुखः॥ सुरक्तपद्मलोचनः सुविद्युदाभकुण्डलः। सुहासविद्रुमाधरः समस्तवेदवाग्रसः॥ दिवाकरौघकौस्तुभप्रभासकोरुकन्धरः। सुपीवरोन्नतोरुसज्जगद्धरांसयुग्मकः॥ सुवृत्तदीर्घपीवरोल्लसद्भुजद्वयाङ्कितः। जगद्विमथ्य सम्भृथः शरोऽस्य दक्षिणे करे॥ ... समस्तसारसम्भवं शरं दधार तं करे। स वामबाहुना धनुर्दधार शार्ङ्गसंज्ञितम्॥ उदारबाहुभूषणः शुभाङ्गदः सकङ्कणः। महाङ्गुलीयभूषितः सुरक्तसत्कराम्बुजः॥ अनर्घ्यरत्नमालया वनाख्यया च मालया। विलासिविस्तृतोरसा बभार च श्रियं प्रभुः॥ स भूतिवत्सभूषणस्तनूदरे वलित्रयी। उदारमध्यभूषणोल्लसत्तटित्प्रभाम्बरः॥ करीन्द्रसत्करोरुयुक्सुवृत्तजानुमण्डलः। क्रमाल्पवृत्तजङ्घकः सुरक्तपादपल्लवः॥ लसद्धरिन्मणिद्युती रराज राघवोऽधिकम्। असङ्ख्यसत्सुखार्णवः समस्तशक्तिसत्तनुः॥ (९. ७५-७९, ८२-८७). [प्रत्यक्षरप्रतिलोमयमक]

72) (पदच्छेदः) **जेत्। सवातव। वेदाप। आकेलोकोदद। सादव। अ। दासर। आत्। उसुतेयाम। आ(अ)ह। उवाह। आ। मम। राम। रा (राः)॥**

The unique feature of this verse is that it constitutes the reversal of the order of letters in the previous verse (71). It is found that this verse is not written in the Tuḷu manuscript of the text as verse no. 72. But it has been placed at the end. [पूर्वश्लोकप्रातिलोम्येन

सम्पद्यमानोऽयं श्लोको मूलकोशेषु न ग्रन्थमध्ये पठितः। ग्रन्थावसान एवोल्लिखितः। B.] But it is included as verse no. 72 in all other manuscripts and published works. It should be noted that the verse contains quite meaningful and significant words. भ. comments : अत्र रामेति संबोधनेन **भारततात्पर्यनिर्णयोक्ता** रामकथापि संगृहीतेति ज्ञातव्यम्। **तत्संक्षेपत्वा-देतद्ग्रन्थस्य।**(भ). The solemn declaration of Śrī Madhvācārya is राम आ मम राः - "O Rāma, Thou art my all wealth." समन्तान्मम राम त्वं सुवित्तं नैव चेतरत्।(टी) ...इतरत् हिरण्यादिरूपं वित्तम्। मम नैवेत्यर्थः ॥ (टि) This shows Śrī Madhvācārya's sole and exclusive devotion towards the Lord : (**श्रीरामस्यैवाचार्यद्रव्यरूपत्वकथनेन** आचार्याणामपि ब्रह्म-वदच्छिन्नभक्तत्वं सूचितम्।)(या). All other words are vocatives addressing Lord Rāma, the incarnation of Lord Viṣṇu. 1) **जेत्** - Conqueror. जि जये जयतीति जित् तत्संबुद्धिः जेत्। छान्दसो गुणः।(टि). 2) **सवातव** - Prompter of the universe inclusive of god Vāyu : वातेन वायुना सहितं सवातं जगत् तद्वर्तयति प्रवर्तयतीति सवातवः तस्य संबुद्धिः। हे सवातव, **सवातजगतो** वर्तक।(टि). 3) **वेदाप** - (i) Protector of Vedas : (वेदान् **आसमन्तात्** व्यासरूपेण पातीति वेदापः तस्य संबोधनम्।)(या). (ii) Known from the Vedas : वेदैराप्यतेऽसौ वेदापः तस्य संबुद्धिः वेदाप आगमगम्यभाः। (टि) वेदगम्य। (या). (iii) Not known fully even from the Vedas : (प्यते गम्यत इति पः। स न भवतीत्यपः। **वेदैः** अपः वेदापः। साकल्येन वेदागोचर इति यावत्। तस्य संबोधनं वेदागम्येति।) (या). (iv) **वेदापाकेलोकोदद** is split as **वेदापा+आके+लोकोदद** and **वेदापा** is split into **वेदाप+अ** and commented as follows by भ, understanding **अ** as 'lustre'. 'Thy lustre is known from the Vedas.' *Read* : अथवा अकारो भावाची। एवं **वेदापेत्यत्रापि** वेदापा इति। दीर्घान्तं पदं विच्छिद्य वेदापो वेदगम्यः अः **भाः** यस्यासौ तथोक्तस्तस्य संबोधनं **वेदापेत्यपि** व्याख्येयम्। अत एव **पूर्वटीकायां** आगमगम्यभाः अनन्तगुणाख्यभा इति व्याख्यातम्। (भ). 4) **आकेलोकोदद** - a) It is understood as one word - "Bestower of

knowledge and action to the entire world, nearer and farther". आके दूरे समीपे च लोकानां उदं ज्ञानं तथा उदं कर्म उभे ददातीति लोकोददस्तत्संबुद्धिर्लोकोदद। लोकानां ज्ञानद कर्मद।(टि). b) It is understood as two vocatives (i) **आके** and (ii) **लोकोदद** (i) **आके** - "Nearer to merits and far away from demerits", "Full of merits and Bereft of demerits" : **आके** समीपे दूरे च। 'आकं दूरसमीपयोरित्यभिधानं'। दोषाणां जगतश्च दूरे, गुणानां समीपे च स्थितेति शेषः। (आके सर्वजगदन्य सर्वदोषविरूद्धेति वा। सर्वगुणपूर्ण सर्वदोषाभाववन्निति यावत्)।(या)। (ii) **लोकोदद** - 'Bestower of knowledge and action to the entire world' : उदेत्यनेन मोक्ष इत्युदं ज्ञानम्। उदेत्यनेन ज्ञानमित्युदं कर्म वा। लोकस्य उदं ददातीति लोकोददः तस्य संबुद्धिः।(या). [Read : हे **आकेलोकोदद आके** दूरे समीपे च लोकानां उदं ज्ञानं तथा उदं कर्म उभे ददातीति लोकोददस्तत्संबुद्धिर्लोकोदद। लोकानां ज्ञानद कर्मद। कथमुदं कर्म तथा ज्ञानमित्यत आह उदेत्यवनमज्ञन इति। अवनमज्ञनः अधः पतन् जनः उदेति ज्ञानेन कर्मणा च। तथा च उदेति उत्कृष्टो भवत्यनेनेति उदमिति व्युत्पत्तिः ॥ (टि).] 5) **सादव** - "Destroyer of devotees' fear" : तेन ज्ञानेन सत्कर्मणा च भक्तानां सादं = भयं नाशं वा वारयतीति सादवस्तत्संबुद्धिः ॥ (टि). 6) **अ** - The letter **अ** has many meanings - (i) opposite (ii) distinct (iii) absence and (iv) lustre : अकारस्य च त्रयोऽर्थाः। विरुद्धत्वमन्यत्वमभावश्चेति। ... अथवा अकारो भावाची।(भ) . Hence the four meanings, all applicable to the Lord : (i) Opposite to demerits; (ii) Distinct from all else; (iii) Devoid of defects; and (iv) Fully lustrous. *Read* : अ) सर्वदोषविरुद्धान्य सर्वस्माज्जगतः सदा। अभावाशेषदोषाणा(अभावदोषाशेषाणा)मित्यनन्तगुणाख्य भाः।(टी). आ) हे **अ** सर्वदोषविरुद्ध तथा सर्वस्माज्जगतः सदा अन्य। तथाऽशेष-दोषाणामभाव इत्यनेन प्रकारेण 'अकारो वै सर्वा वागि'ति श्रुतेः। तथा 'अकारः सर्ववागात्मा परब्रह्माभिधायक' इति स्मृतेश्च सर्ववागर्थभूतानन्तगुण आख्य = अकारवाच्य। भा इति संबुद्धिः। भगवन्निति पूज्येत्यर्थः।(टि). 7) **दासर**- Joy-giver to Lord's servants and Destroyer of the wicked, as **दास** has two meanings : servant and

robber or wicked and र means 'please' and 'burn'. *Read* : अ) दासो दस्युस्तथा भृत्यो रोऽग्निः क्रीडां चरन् यतः। दस्युदाहक भृत्यानां नित्यमेव रतिप्रद॥(टी). आ) **दासस्य** दस्योर्वेत्य (शत्रु ?)जनस्य **र** दाहक तथा **दासस्य** स्वभृत्यस्य ब्रह्मादेः **र** रमयतीति रः तत्संबुद्धिः। भृत्यानां नित्यमेव रतिप्रद।(टि). 8) **आत्** = Swallower of god Sun : (i) **आद्** इत्यत्तर्(आदित्यात्तर्)अथान्तःस्थ तथाऽऽदेय महात्मभिः।(टी). (ii) आ अत् इति पदच्छेदः। तथा च **आ** आदित्यः तं अत्तीति **आत्** आदित्यभक्षक। अनेन सौरमतं निराकृतमिति ज्ञातव्यम्। (या). (iii) **आत्** इत्यत्र **आ** **अत्** इति पदं विभज्य नामैकदेशेन नामग्रहणमिति न्यायानुसारेण **आ** आदित्यस्य **अत्** अत्तरिति व्याख्याय सौरमतनिरासोऽप्यत्र साक्षादेव कृतो बोध्यः।(भ). टि. gives other meanings : हे **आत्** अत्तीति आत् तत्संबुद्धिः। हे अत्तरित्यर्थः। अथवा **आ** समन्तात् अन्तरित्यर्थः। ततो तनोतीति (?) तत् अन्तःस्थेत्यर्थः। तथा च आदीयते उपादीयत इति **आत्** महात्मभिरादेयेत्यर्थः।(टि) (i) Swallower (ii) Indweller (iii) To be grasped by the great. 9) **उसुतेयाम** - Controller of Rudra, Skanda, Gaṇapati and Lakṣmī. (i) ओः रुद्रस्य सुतौ कुमारविघ्नपौ उसुतौ च ई च श्रीश्च ताः उसुतयः उसुतयं याम यच्छतीति **यामस्तत्संबुद्धिः** कुमारविघ्नपश्रीणां नियामकेत्यर्थः। 'यो मनसि तिष्ठन्नि'ति श्रुतेः। मनोभिमानिस्कन्दनियामक। 'यस्तेजसि तिष्ठन्नि'ति (बृ) श्रुतेः। 'तेजः परस्यां देवतायामि'ति तेजःशब्दवाच्यश्रीनियामकस्तत्मात्प्रमितोऽयमिति भावः।(टि) (ii) उः रुद्रः तस्य सुतौ स्कन्दविघ्नेशौ ईः लक्ष्मीः शक्तिनाम्नी तासां याम नियामक। अनेन शैवस्कान्दगाणपतशाक्तेयमतानि निराकृतानीति ज्ञातव्यम्।(या). [उः = Rudra; उसुतौ = Rudra's sons, Skanda and Gaṇapati; ईः = Lakṣmī, Goddess Śakti; याम = Controller. उ+सुत+ई+याम = उसुतेयाम]. 10) **अह** - Unfit to be abandoned. (i) हीयत इति हः स न भवतीत्यहः अहेय। अहीनेति वा।(या). (ii) अहीन।(भ). But टि. reads as आह - हे **आह** ओ हाक् त्यागे इति धातोः आ समन्तात् न हीयते न सज्जते इति आहः तत्संबुद्धिः। सर्वथैव शुभेच्छुभिरहीनतया हीनत्वाभावेन अहेय स्वीकार्य। उपजीव्येत्यर्थः।(टि). Seekers of welfare should always resort to the Lord. 11) **उवाह** - Rider of *U* or Rudra.

(i) उवाह - नृहरे मेषरूपशंकरवाहन।(टी). (ii) उः रुद्रो वाहो वाहनं यस्य स उवाहः तत्संबुद्धिः। मेषरूपशंकरवाहन। 'नारायणः मेषरूप-रुद्रवाहन' इति प्रमाणम्।(टि). Purāṇas state that the Lord in the incarnation of Narasiṁha rode on Rudra who had taken the form of a ram. It should be noted that at the end of the verse we have only रा and not राः meaning 'wealth'. The reason for the absence of *Visarga* is that this verse is the reverse of the previous verse which begins with 'रा' only. ***Read*** : ममरामराः इति भवितव्ये रेति विसर्गाभावो रामराममहाबाहो इति श्लोकस्य वर्णक्रमविपर्यासेनास्य श्लोकस्य कृतत्वात् द्रष्टव्यः।(टि). या. reads as राः, adding the विसर्ग. (हे राम त्वमेव मम राः धनमित्यर्थः।) (या). And it explains holding it as रा, without विसर्ग. आ मम राम रेति पाठे आ मम राः अमर इति पदानि। तथा च हे अमर त्वं आ समन्तात् मम राः धनं विष्णो त्वमेव मम धनं नान्यदिति भावः।(या). [It should be remembered that in यमक सविसर्ग = अविसर्ग; so, रा=राः] We have already noted depending upon या. and भ. that this verse contains a refutation of the views, which hold each of the gods, Sun, Rudra, Skanda and Gaṇapati as well as goddess Śakti (Lakṣmī) as supreme controller of this universe. The followers of these views are respectively called as सौर, शैव, स्कान्द, गाणापत्य and शाक्तs. This is stated by others too : (i) अथवा प्रातिलोम्येन पठितेनानेन श्लोकेन मूलरूपं भगवन्तं स्तुवंस्तस्यावताररूपैरभेदं च साधयन् शाक्तसौरगाणापत्यस्कान्दशैवमतानि निराकुर्वंस्तमेव प्रार्थयते। (ना. at the end of verse 71) (ii) शाक्तेयशैवकौमारसौरवैनायकान्यपि। निरस्तानि॥(टी). (iii) एवं स्तवनस्य फलमाह शाक्तेयेत्यादिना। श्रीनियामकोक्त्या शाक्तं, उवाहेति रुद्रनियामकोक्त्या पाशुपतं, रुद्रसुत-स्कन्दगणपतिनियामकोक्त्या स्कान्दं, गाणपत्यं च, 'य आदित्यमन्तरो यमयती'ति श्रुतिबलात् नियम्यपङ्क्तिनिविष्टसूर्यनियामकोक्तेरुपलक्षणया सौरं, चेत्यनेन प्रकारेण दुर्मतानि निरस्तानि भवन्तीत्यर्थः।(टि) But ना. comments quite differently. According to ना. this verse

contains the contents of the *Brahmāsutras* beginning from the second *sūtra* जन्माद्यस्य यतः। (See for details Appendix-II). **[प्रत्यक्षरप्रतिलोमयमक]**

73) **(पदच्छेदः) देवानां। पतयः। नित्यं। नो। मतं। यस्य। जानते। तस्मै। देव। नमस्ये। अहं। भवते। असुरमारये॥**

According to commentators, through this verse, Śrī Madhvācārya bows down to Lord's incarnation as Buddha : (i) तस्मै विशुद्धिशुद्धाय बुद्धायासुरघातिने।(टी). (ii) बुद्धाय सर्वज्ञाय ... एवं बुद्धावतारवर्णनम्॥(टि). (iii) बुद्धं नमति। अनेन बुद्धावतारस्यापि मुमुक्षुज्ञेयत्वं सूचितं भवति।(या). The principal clause is - **तस्मै देव नमस्ये अहम्।** "I bow down to Thee, O God". Other part of the verse describes God. (i) देवानां पतयो नित्यं नो मतं यस्य जानते (टी)। or देवानां पतयो नित्यं मतं यस्य न जानते।(या). **देवानां पतयोऽपि यस्य मतं** बौद्धशास्त्रोक्तमभिप्रेतं सिद्धान्तं **नित्यं नो जानते**। तदुपदेशमन्तरा ज्ञातुं न समर्था भवन्ति। किन्तु तदुपदेशेनैव जानते।(भ) Even lords of gods like Brahmā cannot understand Buddha's teachings without being instructed by the Lord Himself. Here **भवते** is understood differently also as Possessor of pure lustre and knowledge : **भवते** भं प्रकाशो नैर्मल्यमिति यावत्। तद्वते विशुद्धिशुद्धाय इत्यर्थः। अथवा भं ज्ञानं तद्वते। बुद्धाय सर्वज्ञाय इत्यर्थः। एवंभूताय तुभ्यं **नित्यमहं नमस्ये** इत्यन्वयः।(टि). **नित्यं** is connected with **न जानते** also : अथवा **नित्यं** न **जानते** कदाचिदेव तदनुग्रहेण जानते।(टि). They can understand only when they obtain Lord's grace. **टि.** adds : एवं **सति** त्रैपुराः पुनरागताः पुनरुत्पन्नाः जिनादयोऽसुरा न जानन्तीति किमु वक्तव्यम्। अत एव **असदादि-शब्दार्थानवबोधेन मोहिता** आपाततः **प्रतीतार्थ** एवाभिनिविष्टाः तादृशदुर्मतं प्रपञ्चयांचक्रुः। ब्रह्मादीनां तु भगवानेव असदादिशब्दार्थकथनेन शीघ्रं मोक्षदायिनीं स्वविद्यां प्रशान्तनाम्नीमुपदिदेश। तदुक्तं भगवत्पादैः (भा.ता.नि. ३२.१६१) 'यामाश्रितामचिरेण मुक्तिरि'ति। (टि). ना understands somewhat differently : तस्मै कस्मै यस्य नित्यं मतं

नियतमभिप्रेतमर्थं देवानां पतयोऽपि रुद्रादयो न जानते नावगच्छन्ति। कुतो दैत्याः ये प्राङ्निहताः ते पुनर्भूमाववतीर्य यागादिवैदिककर्मानुष्ठानेन मोक्षाद्यर्थं प्रवृत्ताः यन्मोहनार्थं भवानवततारेति भावः।(ना). The **असुरमारये** is interpreted as referring to demons as well as to gods : a) (i) असुरान् मारयति असुरमारिः तस्मै असुरघातिने। (टि) (Destroyer of demons) (ii) असुराणां मा सम्यग्ज्ञानं तस्यारये दैत्यज्ञानारये। (टि) (Enemy to the knowledge of demons) (iii) मा शोभा तदरये।(टि) (Enemy to the beauty of demons) b) (i) असुभिः रमन्त इत्यसुराः देवाः तेषु मा ज्ञानं शोभा वा तस्याः रये दात्रे इति वा।(या). (Bestower of knowledge or beauty to gods). (ii) यद्वा **सुरमारये** सुरेषु मा सम्यग्ज्ञानं श्रियं च राति ददातीति सुरमारः तृतीयोऽतिशय इत्यतः सुरमारः एव सुरमारिः तस्मै।(टि). (Bestower of knowledge or wealth to gods). म. agrees. Note : When it is dissolved as असुराणां (सुराणां वा)मां राति इति the compound should be असुरमारः(सुरमारः वा). Then how did it become असुरमारिः (सुरमारिः वा ?) The reply is according to the *sūtra* 'तृतीयोऽतिशये'. *Read* : ननु रा दाने इति धातोः रः इति पदेन भाव्यं तथा च तत्र इकारः कुत्रत्यः इति चेत् 'तृतीयोऽतिशय' इति सूत्रबलात् अकारे इकारो बोध्यः। तथा च रः इत्यस्य रिः इति प्रथमा। तस्य चतुर्थी रये इति। अत्र अतिशयः स्वयं ऊहनीयः। एवमन्यत्रापीति।(त). This is the verse which contains a new type of यमकालङ्कार. Note : (अनेन बुद्धावतारस्यापि मुमुक्षुज्ञेयत्वं सूचितं भवति।(या) The म.ता.नि. narrates (अ.३२) : यस्त्रैपुराणां प्रथमोऽत्र जातः शुद्धोदनेत्येव जिनेति चोक्तः। क्षेत्रे गयाख्येऽस्य शिशुं प्रजातं संप्रास्य दूरेऽत्र बभूव विष्णुः॥ अजानमानाः स्वशिशुं गतं तं शिशुं हरिं वीक्ष्य निजं स्म मेनिरे। तेषां तदा वैदिककर्म वीक्ष्य सम्प्राहसत्तद्वपुषैव केशवः॥ तं जातमात्रं प्रहसन्तमीक्ष्य सुविस्मितैः पृष्ट उवाच विष्णुः। बुद्धोऽहमित्येव स नित्यबोधात् जगाद चैषामथ बुद्धदर्शनम्॥(१४३-५). प्रशान्तविद्येत्यभिदं तथाऽन्यद्बुद्धोक्तशास्त्रं त्रिदशा अवाप्य। तोषं ययुर्वेदसमस्तसारं यामाश्रितानामचिरेण मुक्तिः॥(१५८) Apparently this verse seems not to possess any *Yamakālaṅkāra*. Guttal finds only अनुप्रासालङ्कार in it.

[७३ तमे पद्ये अनुप्रासः। यथा "पतयो नित्यं" "नो मतं जानते" इत्यत्र "सुरमारये" इत्यत्र च। - इदमत्रावधेयम्, पृ.२] But B. has discovered a new type of यमकालङ्कार wherein letters 1 & 19 (दे), 5 & 17 (त), 10 & 22 (म), 15 & 21 (न), 16 & 27 (ते), 29 & 31 (र) are same with different meanings. Hence it is a **नवीनयमक.** [अयं श्लोकः नवीनबन्धविशेषात्मक इव प्रतीयते। तथा ह्यत्र प्रथमपञ्चमदशमपञ्चदशान्यक्षराणि एकोनविंशसप्तदशद्वाविंशैकविंशत्वेन पुनरावर्त्यन्ते। षोडशं च पुनः सप्तविंशतया। एकोनत्रिंशं चैकत्रिंशतयेति। -B.]

74) (पदच्छेदः) **समस्तदेवजन। कवासुदेवपरामृत। वासुदेव। परामृत। (पर। अमृत।) ज्ञानमूर्ते। नमः। अस्तु। ते॥**

This refers to Lord's incarnation as Kalkin : (i) ... कलिकात्कारतो (को) हरिः। कल्की संस्तूयते किं च **कलं** ज्ञानं सुखं च कम्। तद्वान् कल्की॥(टी). (ii) हे ज्ञानमूर्ते हे परामृत इत्याभ्यां पदाभ्यां कल्किरूपं संबोध्यते। **कलं** = ज्ञानं **कं** = सुखं च कल्कं निरुक्तत्वाल्लकारस्थाकारलोपः। कल्कं विद्यते यस्य सः **कल्की**। 'अत इनिठनौ' [पा.५.२.११५] अत इनिः। **ज्ञानमूर्ते** इत्यनेन **कलशब्दो** व्याख्यातः। **परामृतेत्यनेन** कशब्दो व्याख्यातः। परं पूर्णं (अनन्तं) अमृतं आनन्दः (सुखं) यस्य स तथोक्तः अनन्तसुखाम्बुधिः। तथा च **हे कल्किन्** इति फलितोऽर्थः। हे **कल्किन् ते** तुभ्यं **नमोऽस्तु**।(टि). (iii) **कल्किनं** नमति **समस्तेति।... वासुदेव** वा ज्ञानं सु सुखं ताभ्यां देव। **अनेन** हे कल्किन्निति सबोधनं कृतमिति ज्ञातव्यम्। समानार्थत्वात्। **कलं ज्ञानं** कं सुखं तद्वान् कल्की इति।(या). All this means that **कल** = ज्ञान = knowledge and क = सुखं = bliss. Only the Lord possesses perfect knowledge and bliss and hence He is called Kalkin. ना. explains : हे **वासुदेव** कृतयुगादीनां चतुर्णां वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाः क्रमेण प्रवर्तकाः नियामकाश्च। **कल्की** च कलेरन्ते धर्मयुगप्रवर्तकः वासुदेवकार्यकारित्वात्तदभेद(देन ?)**संबोधितः**। **परामृतज्ञानमूर्ते** सुखज्ञानदेह **परामृत** उत्कृष्ट। कल **कामधेनाविति** धातोः कलतीति **कल** इति क्विबन्तः। कं सुखं पूर्णमस्यास्तीति **की**। भूम्नि इनिप्रत्ययः। कल् चासौ की चेति **कल्कीति**।(ना). Accordingly Lord Vāsudeva, the Supreme God, Himself is Kalkin,

who performs Vāsudeva's duty of establishing Dharma or righteousness at the end of Kaliyuga. God Vāsudeva (Kalkin) is qualified by several epithets : (1) समस्तदेवजन - Here समस्त = सम्+अस्त (completely destroyed) and देवजन = दुर्जन = Wicked people or kings : (i) देवाश्च ते जनाश्च देवनामानश्च ते जनाश्चेति मध्यमपदलोपाश्रयणेन वा देवजनाः 'दीनत्वाद्देवनामान' इति प्रमाणात्। कलौ उत्पन्नाः त्वरकादि (तुरुष्क)दुर्जनाः समस्ताः सम्यगस्ता निरस्ता हिंसिता देवजना येन सः समस्तदेवजनस्तत्संबुद्धिः हे समस्तदेवजन। तदुक्तं पद्मपुराणे 'समस्तम्लेच्छदुष्टघ्नः सर्वशिष्टद्विजातिकृदि'ति।(टि) (ii) देवाश्च ते जनाश्च देवजनाः नृदेवजनाः दुष्टराजान इति यावत्। सम्यगस्ताः परास्ताः देवजनाः येन सः तस्य संबुद्धिः हे समस्तदेवजन। कलेरन्ते कुनृपान् कल्की जघानेति प्रसिद्धिः।(या). (2) कवासुदेवपरामृत - It is split as क+व+असु+देव+परामृत and understood as क=सुखं=bliss; व=ज्ञानं=knowledge; असु=प्राणः=life-breath; देव=देवनं=sports; and परामृत=मोक्षः=Liberation. These are possessed by Lord Vāsudeva for the sake of granting them to befitting devotees. *Read* : कं च वं च असुश्च देवश्च परामृतं च तानि कवासुदेवपरामृतानि तानि विद्यन्ते देयत्वेन यस्मिन्स तथोक्तः तत्संबुद्धिः। सुखज्ञानप्राणनदोषनिरसनक्रीडादिसप्तकमोक्षदेत्यर्थः।(टि). 3) वासुदेव - O God Vāsudeva. वासुदेवनामक। कोऽर्थः। कृतयुगे देवानुत्पाद्य तैर्वासुदेवरूपेण तद्युगे उपास्येत्यर्थः। तदुक्तं 'कृते शुक्ल' इत्यादौ।(टि). Refer also to ना. quotation given above. It means that the Lord should be worshipped as Vāsudeva in Kṛtayuga, as Saṅkarṣaṇa in Tretāyuga, as Pradyumna in Dvāparayuga and as Aniruddha in Kaliyuga. All forms of the Lord are identical. 4) परामृत - पर+अमृत = Supreme among the immortals or liberated souls. That is, ever-liberated; others are not so; they secure liberation by His grace. (i) अमृतेभ्यो मुक्तेभ्यः पर नित्यमुक्तेत्यर्थः। अन्येषां तत्प्रसादेन मुक्तत्वान्न परामृतत्वम्।(टि). (ii) उत्तममुक्त अनन्तसुखेति यावत्। पर उत्तम। अमृत मरणरहितेति वा।

(या). 5) **ज्ञानमूर्ते** - O Lord of the form of knowledge. **ज्ञानस्वरूप**।(या). The commentators have also a different interpretation of these epithets of the Lord : (i) **यद्वा समस्तदेवानामुत्पत्त्यादियुगादिकृत्। चतुर्ष्वादियुगादित्वाद्वासुदेवेति कथ्यते॥ परामृत त्वमेवान्ये त्वत्प्रसादात्तु मोक्षिणः। ज्ञानरूपासुदेव त्वं परोऽसि जगतः पते॥ अ (म् अ) मन्तक सुदुष्टानां सदैवैकप्रकारतः। ऋतमित्युच्यते** देव ज्ञानमूर्ते नमोऽस्तु ते॥(टी). (ii) a) The first line is split as a) **समस्तदेवजनक**+ b) **वासुदेव**+ c) **परामृत**. a) दीव्यन्ति ज्ञानेन क्रीडन्ति ते देवाः तेच ते जनाश्च देवजनाः सुजना इत्यर्थः। देवजनानां समस्तमिति समस्तदेवजनम् देवजनकलिकल्मषं तत् कृणोति निराकरोतीतिसमस्तदेवजनकः तत्संबुद्धिः। तथा सुजनकलिमलविध्वंसिन्निति कलिशब्दनिरुक्तिः।(टि). [समस्त+देव+जन+क] Destroyer of sins of good souls. b) (i) **वासुदेव** वाति जानाति अनेनेति **वं** **शुद्धं** सत्त्वं अन्तःकरणं सत्त्वगुणो वा तेन **आ** समन्तात् विस्तारक्रमतः = अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवनारायणरूपाणां मनोबुद्ध्यहंकारमहत्तत्त्वगुण-त्रयाव्यक्तनिष्ठ(ष्ठानां) व्याप्तिव्यक्तिक्रमतः **सु** **दीव्यते** सुष्ठु गम्यते ब्रह्मादिभिरिति वासुदेवः तत्संबुद्धिः। तदुक्तं 'ऊर्ध्वं गच्छन्ति सत्त्वस्थाः' इति गीतायाम्। भागवते च। 'सभूतसूक्ष्मेन्द्रियसन्निकर्षात्सनातनोऽसौ भगवाननादिः। मनोमयं देवमयं विकार्य संपाद्य मत्या सह तेन याति॥ विज्ञानतत्त्वं गुणसन्निरोधं तेनात्मनात्मानमुपैति शान्तिम्। आनन्दमानन्द-मयोऽवसाने सर्वात्मनि ब्रह्मणि वासुदेवे॥ एतां गतिं भागवतो गतो यः स वै पुनर्नेह विषज्जतेऽङ्ग॥' इति (टि). (ii) सत्त्वं विशुद्धं वसुदेवशब्दितमिति वचनात् **वसुदेवो** विशुद्धसत्त्वं तद्गम्यत्वाद्वासुदेवः। भक्तानामन्तःकरणं विशुद्धं कृत्वा तद्गम्यो भवतीति तथोक्त इति भावः। तस्य संबुद्धिर्हे **वासुदेव**।(भ). [व+आ+सु+देव] O Lord, Attainable properly through *Sattva-guṇa* or pure heart. [Note also : अथवा **समस्तदेवजनक**। समस्तदेवानां जनो जननं यस्मिंस्तत्समस्तदेवजनं देवयुगं कृतं तत्करोति समस्तदेवजनकः तत्संबुद्धिः। समस्तदेवान् जनयति स तथोक्तः तत्संबुद्धिरिति वा। एवंभूत **वासुदेव** वासुदेवानामक। कोऽर्थः ? कृतयुगे देवानुत्पाद्य तैर्वासुदेवरूपेण तद्युगे उपास्येत्यर्थः। तदुक्तं 'कृते शुक्ल' इत्यादौ।(टि).] Second **वासुदेवपरामृत** is split into **व+असुदेव+पर+अम्+ऋत** - **वासुदेव** ज्ञानरूप **असुदेव** = मुख्यप्राणेन

क्रीडादिसक्तयुत **पर** जगतः अत्यन्तभिन्न उत्कृष्ट वा। **अम्** सुदुष्टानामन्तक अम् रोग इति धातुः। 'रुजो भङ्ग' अम (आमय ?) तीति **अम्** **ऋत** सदैवैकप्रकार निर्विकारेत्यर्थः।(टि). व = ज्ञानरूप = Of the form of knowledge; असुदेव = असुना देव = Sporting with god Vāyu; पर = Distinct from the world or the Greatest; अम् = Destroyer of the wicked; and ऋत = Unchangeable. **परामृतज्ञानमूर्ते** is also understood as one unit : परं पूर्णममृतमानन्दलक्षणं यस्यासौ **परामृतः**। ज्ञानमूर्तिर्ज्ञानरूपः। **परामृत**-श्चासौ ज्ञानमूर्तिश्चेति तथोक्तः। तस्य संबुद्धिरियम्।(म). The Lord is both परामृत (completely blissful) and ज्ञानरूप (Formed of perfect knowledge). This is an example of **गर्भयमक** – the second and third quarters of the verse have same words. The म.ता.नि. narrates (अ.३२) : ततः कलेरन्तमवाप्य धर्मज्ञानादिकल्याणगुणप्रहीणे। लोके विरिञ्चत्रिपुरघ्नशक्रपूर्वाः पयोब्धिं त्रिदशाः प्रजग्मुः ॥ नारायणस्तैः स्तुतिपूर्वमर्थितो भवाय लोकस्य स शंभलाख्ये। ग्रामे मुनेर्विष्णुयशोभिधस्य गृहे बभूवाविरचिन्त्यशक्तिः ॥ कलेस्तु कात्कारत एव कल्की ज्ञानं कलं कं सुखमेव तद्वान्। कल्कीति वा तेन समस्तदस्युविनाशनं तेन दिनाद्व्यधायि ॥ (१६२-४) [गर्भयमक]

75) **(पदच्छेदः) देवादे। देवलोकप। पूर्णानन्दमहोदधे। सर्वज्ञ। ईश। रमानाथ। देव। आदे। अदेवलो। कप। (देवलोकप) (अदे। अव। लोकप) ॥**

This verse contains Śrī Madhvācārya's prayer to the Lord to protect all. He prays - **रमानाथ अव** = Protect, O Lord of Goddess Lakṣmī. And **रमानाथ** is addressed : (1) **देवादे** - O First God. (i) हे देवादे आदिदेव देवानामदिरादिदेवः तत्संबुद्धिरिति विपरीतसमासः। (टि). (ii) आदिश्चासौ देवश्च तस्य संबोधनं आदिदेवेत्यर्थः । (या). 2) **देवलोकप** - Protector of gods and their regions. देवाश्च लोकाश्च देवलोकास्तान् पातीति स तथोक्तस्तत्संबुद्धिः। महापद्मयः सलोकसुरपालक।(टि). 3) **पूर्णानन्दमहोदधे** - O Ocean-like Blissful. पूर्णानन्देन महोदधिरिव तस्य सम्बुद्धिः।(या). 4) **सर्वज्ञ** - O Omniscient. स्वपरगताखिल- विशेषविषयज्ञान।(या).

5) **ईश** - O Master, स्वामिन् प्रेरकेतिवा।(या). 6) **रमानाथ** - O Lord of Goddess Lakṣmī. 7) **देव** - O God indulged in sport. क्रीडादिगुणविशिष्ट।(टि). 8) **अदे** - O Lord, the All-giver - अत्र अशब्देनाखिलं ग्राह्यं नामैकदेशे नामग्रहणस्य विहङ्गो वाहनं येषां इत्यादौ दर्शनात्। तथा च अं अखिलं जगदुत्पत्त्यादिकं ददातीत्यदिः। तस्य संबुद्धिः अदे इति अदिरित्यत्र अकारस्थाने इकारस्तृतीयोऽतिशयार्थः। (या). 9) **अदे** - O Lord, the Indestructible. न विद्यते दिः क्षयः यस्य सः अदिः अक्षयः तस्य संबोधनं अदे अविनाशिन्निति यावत् दीङ् क्षय इति धातोः।(या). 10) **लोकप** - O Protector of the bliss of liberated souls. अत्र लोशब्देन संसारलोपवन्तो मुक्ता उच्यन्ते तेषां कं सुखं तत्पातीति लोकपः तस्य संबोधनं लोकपेति।(या). भ. & त. agree [लो = मुक्त = liberated; क = सुखं = bliss; प = पालक = Protector] There are also other explanations : **अदे** - O Rider of Vāyu or Garuḍa. [अत्+इ] अतति सर्वत्राप्रतिहतो गच्छतीत्यत् वायुर्गरुडो वा तेन एतीति **अदिः** तस्य संबुद्धिः। **अदे** गरुडवाहन वायुवाहन इति वा। 'वरदो वायुवाहन' इति तन्नामसु पाठात्। (ना). The last quarter viz. देवादेदेवलोकप has been above split as **देव+अदे+अदे+अव+लोकप**. But it has also been split and explained as follows : **देव+आदे+अदेवलो+कप**. and **देव+आदे+देवलोकप**. (i) देवाखिलजगज्जन्मस्थित्यप्ययविमोक्षद ॥ अदेवनाश धातुप विमुक्तसुरपालक ॥ (टी). (ii) **आदे** = अम् = अखिलं। आ = समन्तात् यथायोगं ददातीति आदिः तत्संबुद्धिः। 'उपसर्गे घोः किरि'ति आङुपसृष्टाद्दाञः किः। अखिलजगज्जन्मस्थित्यप्ययविमोक्षद। **अदेवलो** अदेवान् दैत्यान् लुनातीति अदेवलुः तत्संबुद्धिः। अदेवनाश। **कप** कं पातीति कपस्तत्संबुद्धिः।(टि). [**आदे** - All-giver; Bestower of all-world's creation, maintenance, destruction &c and of liberation to deserving souls; **अदेवलो** = अदेव+लो = O Destroyer of demons; **कप** = क+प = O Protector of Brahmā]. अथवा **देवलोकप** लोकन्ते प्रकाशन्ते आवरणापगत्या ते लोकाः लोक प्रकाशन इति धातोः विमुक्ता इत्यर्थः। लोकाश्च ते देवाश्च देवलोकाः। कडाराः कर्मधारये (पा.२।२।३८) इत्यतो जैमिनिकडार इव विशेषणस्य परनिपातः। तान्पाति स तथोक्तत्संबुद्धिः। विमुक्तसुरपालक। (टि).

[देवलोक = विमुक्तसुर = Liberated gods; प = Protector. O Protector of Liberated gods]. अथवा लुप्यन्ते प्राकृतदेहादिमत्वेन(न ?) दृश्यन्ते ते लावः 'लुप् अदर्शने' इति धातोः 'गमेर्डोः' (उ.२३५) इतिवत् डोप्रत्यये टिलोपे च गोशब्दवदोकारान्तो लोशब्दः। लावश्च ते देवाश्च देवलावः तेषां कं सुखं देवलोकं तत् पाति स तथोक्तस्तत्संबुद्धिः **देवलोकप**। विमुक्तसुखपालक।(टि). [देवलो + क + प = O Protector of the bliss of liberated gods]. *Read* : (i) अव नः सुरसन्दोहान्।(टी) (ii) एवंमूत रमानाथ त्वं सुरसन्दोहान् नः अव रक्ष। अवेति क्रियापदश्रवणात् तदन्वययोग्यकर्तृकर्मपदे अध्याहृत्यान्यपूर्तिः कर्तव्या। अत एवोक्तं 'अव नः सुरसन्दोहान्' इति॥(टि). Note : अत्र **विपथयमकम्**। विपथेन = विमार्गेण पादद्वयातिक्रमेण यमितत्वात् (ल.टि.) **आवृत्तियमक** (ब)

76) (पदच्छेदः) **यः। निर्ममे। अशेषपुराणविद्यां। योनिः। मम। ई(इ)शेषपुः। आ। अन(ण)वित्। यां। ई। अः (यः)। अनिः। ममे। अशेषपुराणवित्। द्यां। या। उ। निर्ममेशे। षपुराणविद्। या (दि। आ)। अम्॥**

The main sentence is **(अहं) अं याम्।** (अहं) **अं** वेदव्यासं, **याम्** = अयाम् शरणम्। 'I resort to Lord Vedavyāsa.' All other words describe Lord Vedavyāsa. Even though the four quarters of the verse read similarly they are split up separately and explained accordingly. I. **यः यः अशेषपुराणविद्यां द्यां निर्ममे।** यः = इ(लक्ष्मी) + अः (विष्णुः) = लक्ष्मीसहितः विष्णुः। **यः** = यच्छब्दस्यरूपम्। (Who) अशेषपुराणविद्याम् द्यां = अशेषपुराणविद्याभिमानित्वेन तद्रूपां द्यां श्रियं भारतीं च (वा). निर्ममे = उत्पादितवान्।(या). Lord Viṣṇu existing with Goddess Lakṣmī created Goddess Lakṣmī and Bhāratī as the presiding deities of all Purāṇas. *Read* : **यः** अयं यकारः इकार अकारप्रकृतिकः। न तु यच्छब्दः। इ+अ इति स्थिते यणादेशे सति निष्पन्नत्वात्। इकारो लक्ष्मीवाचकः अकारो विष्णुवाचकः तथा च लक्ष्मीसहितः विष्णुरित्यर्थः। द्वितीयस्य य इत्यस्य यच्छब्दरूपत्वम्। एवं च लक्ष्मीसहितः **यः** विष्णुः (वेदव्यासः) इति पदद्वयेन लभ्यते। (या).

II. **(यः) मम योनिः** = शुकाविष्टस्य मम (वायोः) जनकः। Lord Viṣṇu is my (Vāyu's) cause residing in Śuka's body. III. **(यः) आ इशेषपुः** = आ = सम्यक्। ई लक्ष्मीश्च शेषश्च तौ पुनातीति ईशेषपुः। इकारदीर्घलोपश्छान्दसः। यद्वा इः कामः शेषश्च क्रमात् रोमहर्षणपैलगतौ कामशेषौ पुनातीति इशेषपुरित्यर्थः। (या) Lord Viṣṇu perfectly sanctifies Lakṣmī, Cupid and Śeṣa. IV. **(यः) अणवित्** = वेत्तीति वित्। न वित् = अवित्। न अवित् = अनवित् = अणवित् (नणयोरभेदः) = सर्वज्ञः। Lord Viṣṇu is Omniscient. Or **आणवित्** = (आ+ण+वित्) समन्तात् मुख्यप्राणं वेत्ति वेदयति इति वा। Lord Viṣṇu completely knows or grants knowledge to Vāyu. V. **(यः) अनिः** = इः कामः। अकामः। Lord Viṣṇu is devoid of passion. VI. (यः) **ममे** = एवं वेदैः वैदिकैराज्ञायि। Lord Viṣṇu is known thus by Vedas and Vedic scholars. VII. **अशेषपुराणवित्** - पुराणि शरीराणि अणन्ति प्राप्नुवन्तीति पुराणाः जीवाः। अशेषाः अस्य अकारवाच्यस्य विष्णोः शेषाः उपसर्जनीभूताः किंकरा इति यावत् समस्ता इति वा। ते च ते पुराणाश्च अशेषपुराणाः तान् वेदयतीति उत्पादयतीति अशेषपुराणवित्।(या) Lord Viṣṇu creates all embodied souls. यद्वा अशेषपुराणेषु तिष्ठतीति। (या) Lord Viṣṇu resides in all embodied souls. यद्वा तान् वेत्तीति।(या) Lord Viṣṇu knows all embodied souls. VIII. **या उ निर्ममेशे षपुराणविदि आ - निर्ममेशे** = ममता-रहितानां **ईशे**। **आ** = सम्यक्। **षपुराणविदि** षः प्राणः... तस्य पुरं शरीरं अणयति **प्रापयतीति** षपुराणो **हरिः** तं वेत्तीति षपुराणवित् तस्मिन् शुके। **या उ उच्चा** उत्कृष्टा वर्तत इति शेषः। ताम् (या). अशेषपुराणविद्याम्। Entire purāṇa-lore exists in Śuka who is devoid of selfishness and who knows Lord Viṣṇu, the Bestower of life-breath to all bodies to make them function. This in brief is the explanation of the verse according to या. Other explanations : I. कथं श्रीभारत्योः विद्यात्वं द्युत्वं च। अभिमानतः = अभिमानेन निमित्तेन। विद्याभिमानित्वात्तथा द्य्वभिमानित्वा-त्पुराणविद्यात्वं द्युत्वं च श्रीभारत्योः। अभिमान्यभिमन्यमानयोश्चैक्यव्यपदेशो 'महतश्चतुर्मुखादि'त्यादौ द्रष्टव्यः। श्रीभारतीप्रतिमास्थानीयाऽशेषविद्यादिवोः

निर्माणेन ते अपि रूपान्तरेण निर्मिते इति भावः। अथवा **यः श्रीविष्णुः** तां **द्यां** द्योतनात् द्युशब्दवाच्यां श्रियं भारतीं **अशेषपुराणविद्यां** तदभिमानित्वात्तच्छब्दवाच्यां निर्ममे इत्यन्वयः।(टि). Goddess Lakṣmī and Bhāratī are the presiding deities of respectively all lores and the sky, due to the grace of Lord Viṣṇu. II. **मम योनिः** - (i) योनिश्च मम देवेशः शुकाविष्टस्य धीमतः। अवान्तरं कारणं च यद्वा सूत्रात्मनो मतः॥(टी). (ii) भगवतो व्यासात् मुख्यप्राणस्य जातत्वात्। कथमिदमित्यतो व्याख्याति शुकाविष्टस्य धीमतो मम योनिश्चेति। मदाविष्टस्य मच्छरीरस्थानीयस्य शुकस्य भगवतो व्यासादुत्पन्नत्वेनाहमपि तदुत्पन्नः यथा शरीरी(रजन्मना ?)जीवः जात इति व्यपदेशः। अनेन भगवतो व्यासस्यावान्तरकारणत्वात् भूतेषु तद्देहकारणेषु प्रविश्य पञ्चभूतभागान् शुकदेहाकारेण परिणतिं प्रापितवानित्यर्थः। तदुक्तं 'कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः।' इत्यत्र ब्रह्मसूत्रे (१.४.१५)। न केवलमवान्तरकारणं किं तु मुख्यकारणं चेत्यभिप्रायेण व्याख्याति यद्वेति। यद्वा सूत्रात्मनः सर्वजगदाधारस्य **मम योनिः** संकर्षणरूपेण जनकः व्याससंकर्षणयोश्चाभेदात् तज्जातोऽहं व्यासजात एव। (टि). Vyāsa as father of Śuka, is also of Vāyu residing in Śuka. III. **ईशेषपुः** - ई श्रीः शेषश्च तौ पुनातीति ईशेषपूः। लक्ष्मीशेषप्रवर्तक इत्यर्थः। क्षीराब्धिमन्दिर इत्यनेन श्वेतद्वीपरूपेण लक्ष्मीप्रवर्तक इत्युक्तम्। श्वेतद्वीपस्य लक्ष्म्यात्मकत्वात्। ...तथा मुक्तशेषस्यापि भगवदास्तरणत्वेन भगवता प्रवर्तितत्वात् ईशेषपुरित्युक्तम्। एतदपि श्वेतद्वीपपतिशेषशायिनारायणाभेदेन भगवति व्यासे उक्तम्। न हि भगवान्बादरायणो बादरायणरूपेण श्वेतद्वीपे शेषशायित्वं स्वस्य विद्यमानं व्यक्तीकरोति सर्वान् ज्ञानिनः प्रति। भगवानाचार्यस्तु भगवन्तं व्यासं श्वेतद्वीपेऽपि शेषशायित्वेन पश्यति। सदा विश्वरूपदर्शित्वात्। Vāyu perceives Vyāsa as Śeṣaśāyī Viṣṇu in Śvetadvīpa. अथवा **इशेषपुरिति** **पदच्छेदः**। इः कामः तं शेषं च पुनातीति **इशेषपुः** शेषाविष्टं पैलं कामाविष्टं सूतं रोमहर्षणं च पुनाति। यथाक्रमं ऋग्वेदपुराणविद्याप्रवर्तकौ करोतीत्यर्थः। उपलक्षणमेतत्। अन्यान्वैशम्पायनादीन् मुनीन् तथा तदाविष्टान् वसिष्ठादीन् विध्यादीन् सुरानपि एष कृपानिधिः वेदपतिः अयं व्यासः 'अ आ अं अः पुराणर्षिर्व्यासः शाखासहस्रकृदि'ति वचनात्। पुः पुनातीति पुः, पवित्रयति। कोऽर्थः। यजुरादिवेदप्रवर्तकत्वेन ज्ञानप्रवर्तकस्वसेवाकर्तृत्वेन

पुण्यफलानन्दाभिवृद्धिमतः करोतीत्यर्थः।(टि). Vyāsa made sages like Paila, Romaharṣaṇa, Vaiśampāyana and others spread the Vedic lore and secure His grace. IV. **अनवित्** - (i) वेत्तीति वित् न वित् अवित् तथा न भवतीत्यनवित्। द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति नियमात्। ...अशेषविशेषाकारेण सर्वं स्वात्मादिकं जानातीत्यर्थः । तदुक्तं भगवत्पादैः 'पूर्वं स्वपरगताखिलविशेषविषयमि'ति। ...हेतुगर्भं विशेषणमिदम्। आ सम्न्तात् अशेषविशेषाकारेण सर्वज्ञत्वात्। तथा च ज्ञानाज्ञानयोः समाने विषये विरोधात् सर्वं विशेषाकारेण साक्षात्कुर्वन् कथं तत्राज्ञानवान्स्यादिति भावः। यद्वा **आ** समन्तात् **अनं** श्रीमुख्यप्राणं वेदयति विज्ञापयति अखिलमिति **अनवित्** मुख्यप्राणस्य आलोचने स्वान्यविषयकसार्वज्ञ्यप्रद इत्यर्थः।(टि). Lord Viṣṇu is Omniscient. He has also made god Vāyu omniscient. (ii) यद्वा **आणविदित्येकमेव** पदम्। 'णकारोबलमि'ति श्रुतेः **णो** बलरूपो वायुस्तेन **आ** समन्तात् आपरोक्ष्येण **वेद्यत** इति तथोक्तः। **आ** समन्तात् अखिलं जगत् **णं** प्राणं **वेदयतीति** वा।(भ). God Vāyu in omniscient. V. **अनिः** - (i) न विद्यते इः कामो यस्येति अनिः अकामः कामादिदोषरहित इत्यर्थः। तत्र प्रमाणमाह कामं दहन्तीति। 'कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसह्यम्। सोऽयं यदन्तरमलं विविशन्बिभेति कामः कथं न पुनरस्य मनः श्रयेते'ति (भाग) प्रमाणात् निष्काम इत्यर्थः।(टि). The Lord is Passionless. (ii) न विद्यते इः इच्छा यस्य सः पूर्णकाम इत्यर्थः।(ना). All desires of the Lord having been fulfilled, He is fully contented. VI. **ममे** - (i) इत्थं देवो ममेऽज्ञायि वेदेशो वेदवैदिकैः।(टी) (ii) **ममे** इति क्रियापदश्रवणात् कर्मकर्तृपदेऽध्याहृत्यान्वयमाह इत्थमिति। अनेन पूर्वोक्त-प्रकारेण देवो नारायणो वेदव्यासो वेदवैदिकैः = वेदानृगादीन् वैदिकान् पञ्चरात्रादीन् वेदमूलकान् विदन्ति अधीयंते च ते वेदवैदिकास्तैः 'तदधीते तद्वेद' इति अणि तल्लुकि च कृते तथा सिद्ध्यति। अन्यथा वृद्ध्यादि भवितव्यम्। वेदवैदिकैः = ब्रह्माद्युत्तमजीवैः, वेदवैदिकैः - ऋगादिवेद-तन्मूलकपञ्चरात्रादिशास्त्रैः करणैः **ममे** अज्ञायि ज्ञात इत्यर्थः।(टि) The Lord is known by those well versed in Vedas, *Pañcarātras* and the like. He is also known by good souls like Brahmā through Vedas, *Pañcarātras* and

the like. VII. **अशेषपुराणवित्** ...सकलजीवोत्पादक इत्यर्थः। न च सदसन्मुक्तिगतानां जीवानां कथमुत्पत्तिरिति वाच्यम्। तेषामपि पराधीन-विशेषलाभरूपाया उत्पत्तेः सत्त्वात्। तथैव वियत्पादे समर्थितत्वात्। अन्यथा 'स इदं सर्वमसृजत' इति श्रुतिविरोधः स्यात्। न च सर्वशब्दार्थस्य संकोचः बाधकाभावात्। अत एव स्रष्टा ब्रह्मादयो देवा इत्यत्र मुक्तिसृष्टिरेव सृष्टित्वेन मुक्त्यनुवर्तिनी व्याख्याता। कल्यादिविषये तु स्वरूपदुःखाविर्भाव उत्पत्ति-र्ज्ञातव्या।(टि) The Lord is the Creator of all, even of the liberated souls who get their special forms of joy or sorrow due to Him. यद्वा अस्य परब्रह्मणः शेषाः किंकराः अशेषाः ते च ते पुराणाश्च ते तथोक्ताः तान्वेदयति परब्रह्मादितत्त्वं इति **अशेषपुराणवित्** विद् ज्ञान इति धातोः ब्रह्मादिस्वकिंकरसम्यग्ज्ञानप्रद इत्यर्थः। कीदृशः सन्। स्वयम् **अशेषपुराणवित्** अशेषपुराणेषु स्वकिङ्करेषु ब्रह्मादिषु विद्यतेऽसौ **अशेषपुराणवित्।** विद सत्तायामिति धातोः। तद्गः सन् तेषां मनोवृत्तिं स्वविषयामुत्पादयतीत्यर्थः। तदुक्तं अन्तर्यामिब्राह्मणे 'य आत्मनि तिष्ठन्नि'त्यादिना। स्मृतौ च 'स हि सर्वमनोवृत्तिप्रेरकः समुदाहृतः' इति।(टि) The Lord bestows right knowledge to His servants. Residing in them He draws their minds towards knowing Him. VIII. **या उ निर्ममेशे षपुराणविद् या** - तां काम् (अशेषपुराणविद्याम्) **या उ निर्ममेशे** भातीति शेषः। कोऽर्थः। या अशेषपुराणविद्या साभिमानिका। **निर्ममेशे** सर्वस्य विष्ण्वधीनत्वज्ञानेन निर्ममः कुत्रापि ममतारहितः स चासौ ईशः शम्भुश्च निर्ममेशस्तस्मिन् निर्ममेशे। निर्ममेशात्मके शुके। तदुक्तं 'अहंकारात्मको रुद्रः शुको द्वैपायनात्मज' इति। निर्ममः शम्भुस्तद्रूपेण निर्ममताया प्रदर्शने भगवदाज्ञापालनं न स्यादिति शुकरूपेण तपोधनः सन् निर्ममतां प्रदर्शयितुं भगवतो व्यासादुत्पद्य ततोऽशेषपुराणविद्याश्चाधिगम्य पारमहंस्यधर्मभूतां निर्ममतां दर्शयामासेत्यर्थः। तदुक्तं 'यं प्रव्रजन्तमनुपेतमपेतकृत्यमि'त्यनेन। तथैव भगवताऽऽचार्येणानुपेत-मितिपदस्य देहाभिमानरहितमिति व्याख्यातत्वाच्च। उ अत्युत्कृष्टा भाति प्रकाशते। अथवा तां काम्। **या उ** तत्प्रसादतः = भगवत्प्रसादतः उ अत्युच्चा लक्ष्म्या नित्यमुक्तत्वेनात्युच्चत्वम्। भारत्यास्तु देवस्त्रीसंघोत्तमत्वेना-त्युच्चत्वम्। पुनस्तां काम्। **या षपुराणवित्।** षः प्राणः 'षकारः प्राण आत्मे'ति श्रुतेः। षस्य पुराणः = आदिः जनकः इत्यर्थः। षपुराणं वेत्तीति षपुराणवित्। 'आत्मन एष प्राणो जायते।' (षट्प्रश्न ३-२)

इत्यादिश्रुत्यभिमानिनी एतच्छ्रुत्युक्तं नारायणस्य **प्राणजनकत्वं** सदा जानती = साक्षात्कुर्वन्तीति लक्ष्मीविषये, भारतीविषये तु **पूर्वमनादित** एव **प्राणजनकत्वेन** परोक्षतया जानती = तथोपासनया अपरोक्षज्ञानवच्छतजन्मसुप्राणजनकत्वेन भगवन्तं साक्षात्कुर्वाणेत्यर्थः।(टि). [कथंभूते **शुके आ** सम्यक् **षपुराणविदि** षः प्राणः 'षः प्राणः' इति श्रुतेः। तस्मात्पुराणो नियतपूर्ववर्ती **प्राणजनक** इति यावत्। **प्राणस्य** पुरं देहमणयती(प्रापयती)ति वा तथोक्तः। **तद्विदि** = प्राणादिकं सर्वं जगद्विष्णवधीनजन्मादिकमिति सर्वदा जानान इति यावत्। एतेन शुकस्य निर्ममेशत्वमुपपादितं भवति।(भ)] All this means : निर्ममेश = Rudra = Śuka (completely pasionless). Goddesses Lakṣmī and Bhāratī know perfectly that Vāyu is created by Lord Viṣṇu. वि. has given some relevant verses : 1) **मम योनिः** - शुकं तमाशु प्रविवेश वायुः व्यासस्य सेवार्थं अथास्य सर्वम्। ज्ञानं ददौ भगवान् सर्ववेदान् सभारतं भागवतं पुराणम् ॥ (म.भा.ता.नि.१०-७३) 2) **इशेषपुः** - तमाविशत्कामदेवः कृष्णसेवासमुत्सुकः। स तस्मै ज्ञानमखिलं ददौ द्वैपायनः प्रभुः ॥(८०) शेषोऽथ पैलमुनिमाविशत् ॥(७४) (म.भा.ता.नि.अ-१०) 3) **अनिः** - कामं दहन्ति कृतिनो ननु रोषदृष्ट्या रोषं दहन्तमुत ते न दहन्त्यसह्यम्। सोऽयं यदन्तरमलं प्रविशन् बिभेति कामः कथं नु पुनरस्य मनः श्रयेत ॥ (भागवत). Here there is the **सर्वयमक** as all the four parts of the verse contain the same words. [अत्र सर्वयमकम्। चतुर्णामपि पादानां सदृशत्वात्। ल.टि.)] On the authority of साहित्यदर्पण ब. names it **पङ्क्तियमक**. According to वि, it is **पादयमक**. Daṇḍin names it **महायमक**. The म.ता.नि. describes Lord Vyāsa (अ.१०) : अगण्यदिव्योरुगुणार्णवः प्रभुः समस्तविद्याधिपतिर्जगद्गुरुः। अनन्तशक्तिर्जगदीश्वरेश्वरः समस्तदोषातिविदूरविग्रहः ॥ शुभमरकतवर्णो रक्तपादाब्जनेत्राधरकरनखरसनाग्रश्चक्रशङ्खाब्जरेखः। रविकरवरगौरं चर्म चैणं वसानस्तटिदमलजटासन्दीप्तचूडं दधानः ॥ विस्तीर्णवक्षाः कमलायताक्षो बृहद्भुजः कम्बुसमानकण्ठः। समस्तवेदान्मुखतः समुद्गिरन् अनन्तचन्द्राधिककान्तिसन्मुखः ॥ प्रबोधमुद्राभयदोर्द्वयान्वितो यज्ञोपवीताजिनमेखलोल्लसन्। दृशा महाज्ञानभुजङ्गदष्टमुज्जीवयानो जगदत्यरोचत ॥... द्वैपायनः सोऽथ जगाम मेरुं चतुर्मुखाद्यैरनुगम्यमानः। उद्धृत्य वेदानखिलान्सुरेभ्यो ददौ मुनिभ्यश्च यथादिसृष्टौ ॥ सर्वाणि शास्त्राणि तथैव कृत्वा

विनिर्णयं ब्रह्मसूत्रं चकार। तच्छुश्रुवुर्ब्रह्मगिरीशमुख्याः सुरा मुनीनां प्रवराश्च तस्मात्॥ समस्तशास्त्रार्थनिदर्शनात्मकं चक्रे महाभारतनामधेयम्। वेदोत्तमं तद्ब्रा विधातृशंकरप्रधानकैस्तन्मुखतः सुरैः श्रुतम्॥ (५२-५५, ५७-५९).
**[सर्वयमक / पङ्क्तियमक / पादयमक / महायमक]**

77) (पदच्छेदः) **अनन्तपार। अमितविक्रम। ईश। प्रभो। रमाप। अरमनन्तपार। (अरं। अनन्तप। अर।) महागुणाढ्य। अपरिमेयसत्त्व। रमालय। अशेषमह। आगुणाढ्य॥**

This and the next verse contain an eulogy of Lord Viṣṇu who is beyond the reach of words to praise fully These form the spontaneous overflow of powerful and deep devotion inherent in Śrī Madhvācārya : (i) इति सर्वेषु शास्त्रेषु देवा ब्रह्मादयोऽखिलाः। उक्त्वाप्यन्तं न चापुस्ते गुणान्विष्णोर्निरन्तरम्॥ इति दर्शयितुं भूयस्सामान्यात्स्तौति तं प्रभुम्॥(टी). (ii) विशिष्य भगवन्तं स्तुत्वापि पुनः संक्षेपेण स्तौति नम इति चानुवदति। तदुभयं सतां संशिक्षणार्थम्। कथम्। विशेष्यस्तवनेऽनन्तरमुपरमे एतावत्त्वं गुणानामिति शङ्का मा भूत्। किं तु स्वशक्त्यभावादेव (उपरमः ?)। अत एव भगवान् मया संक्षेपेण स्तूयत इति सन्तो जानन्तु। न केवलमहमेवाशक्तः साकल्येन स्तोतुं किन्तु ब्रह्मादयोऽपि विशिष्य स्तुत्वा च नान्तमापुरिति दर्शयितुं संक्षेपात्स्तवनम्।(टि). (iii) वैदैर्ब्रह्मादिभिरपि साकल्येन भगवान् स्तोतुमशक्य इत्याशयेन सदा तं पश्यन् (श्लोकद्वयेन) सामान्यतः संबोधनेन स्तौति।(या). Both the verses are full of vocatives : 1) **अनन्तपार** - O Lord, Infinite in space and time अन्तः उत्पत्तिः नाशश्च पारो देशतो मर्यादा च **अन्तपारौ** तौ न विद्येते यस्य सः अनन्तपारः तत्संबुद्धिः उत्पत्तिनाशरहित **व्यापकेत्यर्थः**। (टि) 2) **अमितविक्रम** - O Lord of immesurable and wonderful powers. असंख्येयाद्भुतानादिपराक्रम।(या). 3) **ईश** - O Overlord competent to do, to undo or to do otherwise. कर्तुमकर्तुमन्यथाकर्तुं शक्त।(टि). 4) **प्रभो** - O Master सर्वजगत्स्वामिन्। (भ). 5) **रमाप** - O Protector of Lakṣmī. रमां पाति स तथा तत्संबुद्धिः रमाया अपि प्रभो इत्यर्थः।(टि). 6) **अरमनन्तपार** - (i) **अरम् + अनन्तपार** - अरम् **अत्यर्थं** नित्यं सर्वदेति यावत्। **अनन्तं शेषं** तथा

अनन्तं नाशरहितं वैकुण्ठादिलोकं लक्ष्म्यात्मकं कालकृतविकारशून्यं तथात्वेन पालक। तदुक्तं 'नित्यं नित्यात्मना प्रभुः (यतः)' इत्यादौ।(टि) The Lord protects perfectly and always Śeṣa, and Vaikuṇṭha and other regions. यद्वा अनन्तो नित्यः प्रकृतिकालाकाशादिपदार्थः तत्पाल।(भ) The Lord is the Protector of eternal entities like Prakṛti (primeordial matter), Time, Space and the like. Or, (ii) **अरम्+अनन्तप+अर** wherein **अरम्** and **अनन्तप** have the same meaning. And **अर** = Indestructible God (i) अल अलय अक्षीणेति यावत्।(या). (ii) अल लयशून्य। 'नित्यो नित्यानां' (कठ.५-१३, श्वे.६-१३) 'नित्यं नित्यात्मना यत' इत्यादेः।(भ). (iii) न रीयत इत्यरः। न लीयत इति वा वृद्धिह्रासादिविकारशून्य।(ना) 7) **महागुणाढ्य** - O Full of excellent qualities (i) महान्तः प्रत्येकं पूर्णाश्च अनौपाधिकाश्च ते च गुणाश्च महागुणास्तैराढ्य पूज्य।(टि). (ii) महद्भिः पूज्यैरत्यधिकैश्च गुणैरानन्दादिभिः आढ्य।(भ). (iii) महद्भिः गुणैः परिपूर्ण। गुणानां महत्त्वं नाम बलज्ञानपूर्वत्वं आधिक्यं च।(या). Each quality of God is full in itself. 8) **अपरिमेयसत्त्व** - O Infinite in knowledge and strength. अत्र सत्त्वं नाम बलज्ञानसमुच्चयः। अपरिमेयं अनन्तं सत्त्वं यस्य स तथोक्तः। तस्य संबोधनम्।(या). 9) **रमालय** - O Indweller of Lakṣmī. रमा आलयो निवासस्थानं यस्य स तथोक्तस्तत्संबुद्धिः। (टि). [Or, रमाया आलयस्तत्संबुद्धिः। श्रीनिवास।(टि)] रमानिवास।(भ) श्रीनिवास।(या). 10) **अशेषमह** - O Possessor of inherent greatness, greater than that of all deities. (i) अशेषेभ्यः सर्वेभ्यः महः नैजसर्वगुणोत्कर्षो यस्य सोऽशेषमहस्तत्संबुद्धिः।(टि). (ii) अशेषमखिलं महः सर्वेभ्यो नैजसर्वगुणोत्कर्षो यस्यासौ तथोक्तः। 'नैजसर्वगुणोत्कर्षः सर्वेभ्यो मह उच्यत' इति वचनात्। तस्य संबोधनमशेषमहेति छान्दसो विसर्गलोपः। अथवा अकारान्तोप्यस्ति महशब्दः। तेन महेत्युपपन्नम्।(भ). (iii) अत्र महशब्दो नैजसर्वगुणोत्कर्षपरः अशेषेभ्यः रमादिभ्यः नैजसर्वगुणोत्कर्षवन्नित्यर्थः। अयं महशब्दोऽकारान्तो ज्ञेयः। (या). (iv) **अशेषमह** सर्वोत्सवयुक्त।(ना). 11) **आगुणाढ्य** - O Owner of great gods like Brahmā as servants. (i) यस्य ब्रह्मादयो ह्याढ्याः गुणभूताः स एव हि। **गुणाढ्यो** विपरीतोऽयं समासः कथितो

भवेत् ॥ (टी). (ii) आढ्याः श्रेष्ठाः ब्रह्मादयः गुणाः = **गुणभूताः अप्रधानाः** सेवका यस्य स गुणाढ्य इति आहिताग्न्यादिष्वितिवत् विपरीतसमासः तत्संबुद्धिः। सेवकीभूतब्रह्मादे इत्यर्थः।(टि). (iii) आढ्याः श्रेष्ठाः ब्रह्मादयः आगुणाः सम्यगुपसर्जनीभूता यस्य स तथोक्तः तस्य संबोधनं आगुणाढ्येति विपरीतसमासोऽयम्।(या) (iv) अथवा अ विष्णो इति भिन्नं पदं हे गुणाढ्य अशेषमहाः त्वमिति वा।(भ) (v) अगुणाढ्य न विद्यते गुणाढ्या यस्मात्सः तथाविध।(ना). One can note that this verse and the next do not contain any verb, while they consist of only vocatives. It is explained that this is because of Lord's direct vision always experienced by Śrī Madhvācārya and because, the Lord is praised and bowed down not to gain anything in return. It is Vāyu's inherent nature to praise and bow down to Lord Viṣṇu. *Read* : (i) स्वस्य नित्यापरोक्षविषयतया हरेः पुरः स्थितत्वात्संबोधनेनैव स्तवनमिति ज्ञातव्यम्। विश्वमात्मानं च सदा विष्ण्वधीनं जानतः स्वस्य सर्वत्र निर्ममत्वान्ममकारप्रसक्तेरेवाभावेन तन्निषेधज्ञापनं व्यर्थमिति सूचयितुं केवलं संबोधनेनैव स्तवनं न तु ते नम इत्यादिनमननिबन्धनम्। नम इत्युक्तौ हि मकारप्राप्तस्य ममकारस्य नकारेण निषेधो ज्ञाप्यते। अप्राप्तममकारस्य तु कुतस्तन्निषेधज्ञापनमिति। 'तस्मै देव नमस्येऽहं ज्ञानमूर्ते नमोऽस्तु ते' इत्यादौ तन्निबन्धनं तु प्राप्तममकाराणां सतां शिक्षणार्थम्। एवं रक्षेत्यादिप्रार्थनाऽनिबन्धनमपि भगवतः स्वात्मानं प्रति नित्यमप्रार्थितसर्वेष्टदातृत्वादेव। 'देवादेवऽव लोकपे'त्यादौ तु तत्प्रार्थनं लोकशिक्षणार्थमिति ज्ञातव्यम्। एतत्सर्वमुक्तं पूर्वटीकायाम्।(भ). (ii) स्तुतिमात्रपरत्वात् क्रियासंबन्धाभावो न दोषापादकः। अनेन फलमनपेक्ष्य स्तोतृत्वमस्मत्स्वभाव इत्याचार्यैस्सूचितं भवति।(या). The म.ता.नि. describes the Lord (अ.१) : निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा ॥ कालाच्च देशगुणतोऽस्य न चादिरन्तो वृद्धिक्षयौ न तु परस्य सदातनस्य। नैतादृशः क्व च बभूव न चैव भाव्यो नास्त्युत्तरः किमु परात्परमस्य विष्णोः ॥ सर्वज्ञ ईश्वरतमः स च सर्वशक्तिः पूर्णाव्ययात्मबलचित्सुखवीर्यसारः। यस्याज्ञया रहितमिन्दिरया समेतं ब्रह्मेश-पूर्वकमिदं न तु कस्य चेशम् ॥ (११-१३). [पादाद्यन्त्ययमक]

78) (पदच्छेदः) भा। भा। भा। भा। भा। भा। भा। भा। भा। भा।
भा। भा। भा। भा। भा। भा। भा। भा। भा। भा। भा। भा। भा।
भा। भा। भा। भा। भा। भा। भा। भा। भा।

This verse is unique in the whole range of Sanskrit literature. The highest peak in the high ranges of *Yamakalāṅkāra* has been sucessfully scaled by Śrī Madhvācārya. This feat has not been achieved by any poet of Sanskrit. It is observed by ब. and वि. that the Tuḷu manuscript has only 28 भाs divided into four quarters; and Hṛṣīkeśatīrtha has given 28 meanings of भा. Naraharitītha's टीका gives 28 meanings of भा, with two variations. (H-नानाभावे, उग्रभावे; N - नयने, नमने). But Naraharitīrtha's टी gives 32 meanings also. His prose explanation टि. gives 32 meanings. भ. explains the 28 meanings given by Naraharitirtha. त reads 28 भाs. ना. gives 32 meanings of भा. ना. gives an alternative meaning of the whole verse. या. reads 32 भाs. Agrahāra Narayan Tantri reads 32 भाs. Thus the verse requires a detailed study to understand its full depth, which has been dealt with, separately in Appendix III. The question whether the verse contained 28 भाs or 32, has been discussed in Appendix - IV. Here it is sufficient to note that through this भकार, Śrī Madhvācārya shows that all words similarly express only Lord Viṣṇu by their योगवृत्ति or primary etymological power. *Read* : (i) एवं सामान्यतो वेदाः भगवतोऽनन्तगुणक्रियारूपाभिधायका इति प्रतिपाद्य इदानीं अशेषाणि वैदिक(वर्णानि)पदानि प्रत्येकं योगवृत्त्या प्रवर्तमानानि भगवतोऽनन्तगुणतां विशेषादेव ज्ञापयन्तीत्याशयेनोपलक्षणतया भकारस्य विष्णुवाचित्वं दर्शयति भेति।(या.) (ii) यथा भेति वर्णः पदतां प्राप्य अनन्यसाधारणान् गुणानाचष्टे तथैव सर्वे वर्णाः तथैव सर्वाणि पदानि वाक्यादीनि च भगवतो गुणप्रतिपादकानि। उदाहरणतया भेति श्लोकोपन्यासः

(भाधातोरर्थबाहुल्यात्)। (टि) (iii) एवं सामान्यतो वेदा भगवदनन्तगुण-क्रियाभिधायिन इति प्रतिपाद्य इदानीम् अशेषाण्यपि वैदिकपदानि प्रत्येकं योगवृत्त्या प्रवर्तमानानि भगवतोऽनन्तगुणतां विशेषादेव ज्ञापयन्तीत्याशयेनोप-लक्षणतया भशब्देनैव पुनः पुनः संबोध्य स्तौति।(भ). (iv) अथैकाक्षर-विद्युन्मालाख्यवृत्तविशेषेण स्तुवन् तस्यानन्तवेदगतानन्तसकलवर्णप्रतिपाद्यत्वेप्यैकैक-वर्णस्यानन्तगुणप्रतिपादकत्वं सूचयति भाभेत्यादिभिः द्वात्रिंशद्भिर्भाशब्दैः।(ना). This is the famous **एकाक्षरयमकश्लोक only one of its kind in the whole range of Sanskrit Literature.**

79) (पदच्छेदः) न। एव। परः। केशवतः। परमात्। अस्मात्। समः। च। सुकेशवतः। सः। अयं। शपथवरः। नः। शश्वत्। संधारितः। सुशपथवरः। अनः॥

In this verse Śrī Madhvācārya declares on solemn oath the well established verdict : "There is none superior or equal to Lord Viṣṇu. He is the Supremest" अतो न केशवादन्यः परोऽस्ति गरुडध्वजात्। ...समश्च तेन नान्योऽतः स हि सर्वेश्वरेश्वरः॥(टी). This is substantiated by the commentators : 1) **अस्मात्** - पूर्वोक्ताच्छ्रुत्यादिप्रमाणात् **अस्मात्** वर्णितात्। (टि). According to the scriptural authorities mentioned already. 2) **परमात्** - परम refers to the Supreme God Viṣṇu. 3) **केशवतः** - कः = Brahmā ईश = Rudra. (i) कश्च ईशश्च विधीशौ तौ सेवयन् = सृष्टिसंहाररूपां स्वसेवां ताभ्यां कारयन् यः स केशवः तस्मात्। (टि). (ii) कः ब्रह्मा ईशो रुद्रः तौ वर्तयतीति केशवः तस्माद्धरेस्सकाशात्। (या). Lord Viṣṇu propels or causes Brahmā and Rudra to serve Him by respectively creating and destroying this world. 4) **सुकेशवतः** - सुकेशः = सुखेशः = Garuḍa (i) खस्य कस्थानवत्वात् केति खग्रहणम्। तथा तृतीयोऽतिशये इत्यतः गस्थाने ककारः। प्रातिलोम्येन पठितः। तथा च नामैकदेशे नामग्रहणमिति न्यायात् खशब्देन खगशब्दो ग्राह्यः। तथा च सुखगेशवत इति पठितव्ये छन्दोभङ्गभयात् सुकेशवत इति पठितम्। एवं सति छन्दोऽनुकूलितम्। अर्थस्तु सुखगेन्द्रः (शः ?) सुपर्णः स विद्यते यस्य स सुखगेन्द्र(श)वान्

तस्मात्। गरुडवाहनात् गरुडध्वजादिति चोक्तं भवति। उभयथाऽपि मतुपो घटनात्।(टि). This means that Lord Viṣṇu is Rider of Garuḍa or is Garuḍa – bannered. [त.ब. and वि. read **सुखकेशवतः** and explain in two ways : (i) शोभनाः खगाः पक्षिणः सुखगाः। को गस्थाने समुद्दिष्टः तृतीयोऽतिशये यतः। तेषां ईशः। सः अस्य अस्तीति तस्मात्। (वि) and (ii) सुखरूपाः केशाः अस्य सन्ति इति वा विग्रहः। (वि). (i) Rider of Garuḍa or Garuḍa-bannered; (ii) His hair are of the form of bliss. 6) **नः** = अस्माभिः (टि) By us = me = Śrī Madhvācārya = god Vāyu. 7) **शश्वत्** = सदा। (टि); सर्वदा (अवतारेपीति यावत्)। (या). Always, even in the form of three incarnations. 8) **संधारितः** - सम्यगवधारितः। **सोऽयं** सर्वोत्तमत्वादिरूपोऽर्थः।(टि) निश्चितः। (या). Well established. 9) **शपथवरः** - (i) शपथस्य वरं बलं यस्य स तथोक्तः। 'नास्ति नारायणसमं न भूतं न भविष्यति एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम्'॥ 'सत्यं सत्यं पुनः सत्यं शपथैश्चापि कोटिभिः। विष्णोर्माहात्म्यलेशस्य विभक्तस्य च कोटिधा॥ पुनश्चानन्तधा तस्य पुनश्चापि ह्यनन्तधा। नैकांशसममाहात्म्याः श्रीशेषब्रह्मशंकराः' इति। "सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते। वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्"॥ इत्यादिशपथबलेन सोऽयमर्थोऽवधार्यत इत्यर्थः। कीदृशः सोऽयमर्थः = नारायणसर्वोत्तमत्वादिरूपः।(टि). (ii) **सोऽयमर्थः नोऽस्माकं शपथवरः** शपथस्तप्तपरशुधारणादिरूपस्तस्य वरं बलं यस्य स तथोक्तः शपथबलेन सिद्ध इति यावत्।(भ). (iii) तप्तपरशुधारणादिरूपः शपथः वरः बलं यस्य स तथोक्तः। शपथेनापि सिद्ध इति यावत्।(या). (वर = बल; The Supreme truth of the overall supremacy of Lord Viṣṇu is declared on the strength of solemn vow). (iv) **सोऽयमुक्तिरूपोऽर्थः** । नोऽस्माकं **शपथवरः** सर्वशपथाधिकः अत एव **अनः** प्राण इव संधारितः । ...नोऽस्माकं **अनः** प्राणरूपः सर्वथाऽपरित्याज्य इत्यर्थः।(ना). [This truth is well established like establishing our own breath] 10) **सुशपथवरः** - This refers to **अनः** = मुख्यप्राणः = god Vāyu, who is the foremost (**वरः**) among those who tread the path (**पथ**) leading to Lord Viṣṇu (**सुश**). (i) **अनः मुख्यप्राणः सुशपथवरः**

सुष्ठु शं सुशं सुसुखं 'ज्ञानज्ञानः सुखसुखः सविष्णुः परमा(मो ?)क्षरः' इति प्रमाणात् सुशं विष्णुः स पथ्यते प्राप्यते यैः ते सुशपथाः। पथ गतविति धातोः। सुशपथेषु वरो **मुख्यो यस्मिन्विषये सुशपथवरः**।(टि) (ii) कुत एषोऽर्थो युष्माभिः शपथेनावधार्यते इत्यत उक्तम् - **अनः सुशपथवर** इति। यतः **अनो** मुख्यप्राणः **सुशपथवरः** सुशः शोभनसुखो विष्णुस्तत्प्राप्त्यै यः पन्थास्तद्ज्ञानलक्षणः स **एभ्यो** भवति ते सुशपथाः भगवद्-ज्ञानोपदेशकाः रुद्रादयस्तेषु वरः श्रेष्ठस्तस्मात्। तथा च मुख्यप्राणस्य मोक्षप्रदश्रीहरिज्ञानदातृषु श्रेष्ठत्वादस्माकं च तदवतारत्वाच्छपथेनाप्येव-मस्माभिरवधार्यत इति भावः ॥ (भ). (iii) सु शोभनं शं सुखं यस्य स सुशः हरिः तस्य पंथाः मार्गः तस्मिन् वरः श्रेष्ठः मोक्षदातेति यावत्। अतस्तदवतारभूतैरस्माभिर्मोक्षप्रदश्रीहरिमार्गोपदेष्टृभिरेवं निश्चितमिति ज्ञातव्यम्।(या). (iv) शोभनं दुःखासंभिन्नं शं सुखं सुशं तस्य पन्थानस्तेषु वरः श्रेष्ठः। अयमेव मुख्यो मोक्षमार्गः।(ना). **Following टी, टि has highlighted** the greatness of Śrī Madhvācārya as the Superme Ācārya : मोक्षद(दः) श्रीहरिज्ञानदात्रा(ता)चार्यवरो ह्यसौ ॥ (टी) कोऽर्थः। यस्य भगवत्सर्वोत्तमत्वादिरूपार्थस्योपदेष्टृषु जीवेषु मध्ये मुख्यप्राणः श्रेष्ठः। तेन मुख्यतः सर्वोत्तमत्वादिरूपोऽर्थः प्रतिपाद्यतेऽतः स एव मुख्याचार्यः। अन्ये तदनुग्रहेणैव तदर्थे(र्थ)प्रतिपादकाः अतोऽमुख्या अतस्तस्यैव भगवत्प्राप्तिः पूर्णा अन्येषां त्वेकदेशत इत्यर्थः। तदुक्तं 'प्राणो वा आशाया भूयान्न प्राणाद्भूयान् प्राण एव भूयांस्तस्माद्भूयान्नामे'ति प्राणस्याधिकारिषु (स) सर्वोत्तमत्वोक्तेः ॥ (टि) The म.ता.नि. states : **यथा** स भगवान्व्यासः साक्षान्नारायणः प्रभुः ॥ जगाद भारताद्येषु तथा वक्ष्ये तदीक्षया। संक्षेपात्सर्वशास्त्रार्थं भारतार्थानुसारतः ॥ निर्णयः सर्वशास्त्राणां भारतं परिचक्षते ॥ (२.७-९) नमो भगवते तस्मै व्यासायामिततेजसे। यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥ ... सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते। वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम् ॥ आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः। इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ (२.६७, ७१-२) इत्याद्यनन्तानि हरेरुदारकर्माणि रूपाणि च सद्गुणाश्च। नित्यव्यपेताखिलदोषकस्य ब्रह्मेत्यनन्तेति च नाम येन ॥ आनन्दतीर्थाख्यमुनिः सुपूर्णप्रज्ञाभिधो ग्रन्थमिमं चकार। नारायणेनाभिहितो बदर्यां तस्यैव शिष्यो जगदेकभर्तुः ॥ ... व्यासाज्ञया भाष्यवरं विधाय पृथक्पृथक्चोपनिषत्सुभाष्यम्। कृत्वाऽखिलान्यं पुरुषोत्तमं च हरिं वदन्तीति

समर्थयित्वा ॥ तनुस्तृतीया पवनस्य सेयं सद्भारतार्थप्रतिपादनाय। ग्रन्थं चकारेममुदीर्णविद्या यस्मिन्नमन्ते हरिपादभक्ताः ॥ (३२, १६६-१६७, १७२-१७३) [पादान्त्ययमक]

80) (पदच्छेदः) कृष्णकथा। इयं। यमिता। सुखतीर्थेन। उदिता। अनने। (अनेने)। यं। यं। इता। भक्तिमता। परमेशे। सर्वोद्रेकात्। सदानु(व)ता। आप। रमेशे ॥

This is an important verse as it gives direct information regarding the nature, contents, authorship and the like of the entire poem. It informs that the poem is कृष्णकथा = story of Lord Kṛṣṇa, of course in brief. It is यमिता = consists यमकालंकारs. The poet is सुखतीर्थ = श्रीमदानन्दतीर्थ = Śrī Madhvācārya. He is परमेशे भक्तिमान् = fully devoted to Lord Viṣṇu. It means that the poem has been composed due to ectasy of devotion. The poem is सर्वोद्रेका = the most excellent one. It is सदानुता extolled by the good. And finally यं यं आनने इता रमेशे आप = When it reaches anybody's mouth (= He who recites it), he reaches the abode of Lord Viṣṇu obtaining befitting liberation. The टी. clarifies : इति स्वानन्दतीर्थाख्यमुनिना यमकात्मना। मानैर्नियम्यते चापि कृष्णस्येयं कथेत्यलम् ॥ परमेशे रमेशेऽथ ह्यनस्य स्वस्य नेतरि भक्त्येवोक्ता न चातुर्यख्यापनाय कथंचन ॥ It means that the word यमिता serves a double purpose : 1. The form of the poem abounds in *Yamakālaṅkāras*; and 2. Its contents are proved by authorities. Further, Lord Viṣṇu is the object of devotion and worship of god Vāyu = Śrī Madhvācārya, the poet. Finally, it has been sung simply through utmost devotion and not to parade the poetic skill. It means that it is a spontaneous overflow of inherent and indepth devotion and not a forced poetic composition. The several words are now

explained : I) **यमिता** - This has been interpreted in five ways : 1) **यमिता** - (i) यमं यमकं इता **प्राप्ता यमिता** शकन्ध्वादिवत् पररूपम्। यमकात्मना निर्मिता।(टि). (ii) यमकमालिका (यमकात्मिका)। (या). The poem is full of *Yamakālaṅkāras*. 2) **यमिता** - (i) नियमिता मानैरिति शेषः। तथा च प्रमिता चेयं कृष्णकथा न तु कवि-काव्यवदुत्प्रेक्षामूला एवंभूता **सुखतीर्थेन** स्वानन्दतीर्थाख्यमुनिना कृष्णस्येयं कथा अलं मानैर्नियमिता।(टि). The poem is no fiction or product of poet's fertile imagination. It is a bare fact. Its contents are proved to be true by authoritative scriptures. Thus the poem is acceptable to one and all. 3) **यमिता** - **यम्** आनन्दतीर्थं **इता** नित्यं प्राप्ता एषा कथा सः आनन्दतीर्थः।(टि). The story of Lord Kṛṣṇa is always in the mind of Śrī Madhvācārya. 4) **यमिता** - **यम्** इयासहितः अः यः तं **यं** श्रीसहितं विष्णुं (प्राप्ता एषा कथा।) (टि). This story has reached Lord Viṣṇu who is always with Lakṣmī. 5) **यमिता** - **य**कारवाच्यं आप प्राप।(टि). [Ref : 'अकयप्रविसंभूमसकहा विष्णुवाचकाः' quoted by भ. and या.] This story has reached Lord Viṣṇu denoted by word 'य'. According to ना. only the fifth meaning is right and not the popularly known first one : **यमिता यमाः** यमकानि संजाता **यस्याः** सा यमकोपेतश्लोकैरुपनिबद्धा इति यमितेति नोच्यते किन्तु यशब्दवाच्यं यं श्रीविष्णुं प्राप्तेति कृत्वा।(ना). II) **सुखतीर्थेन** - By Śrī Madhvācārya. (i) स्वानन्दतीर्थाख्यमुनिना।(टि). (ii) सुखकरं तीर्थं शास्त्रं यस्य तेन सुखकरशास्त्रकृता तन्नामकेन।(या). (iii) मोक्षोपयोगिशास्त्रकृता मोक्ष-सुगमोपायदर्शकेन वा श्रीमहाचार्यवर्येण।(त). [ब. and वि. read as सुशतीर्थेन expressing Śrī Madhvācārya only. शं=सुखं, सुशतीर्थः = आनन्दतीर्थः । निरुपपदस्यानन्दपदस्यार्थमुपसर्गो व्यञ्जयति स्विति। ब] III) **अनने** - Leader or Master of god Vāyu. अनं मुख्यप्राणं नयतीत्यननस्तस्मिन् अनस्य नेतरि । (टि). [या. reads अनेने without any difference in meaning : अनस्य मुख्यप्राणात्मकस्य स्वस्य इने नेतरि।(या)] IV) **यं यं इतां** - This is explained variously : (i) अथवा यं यमप्येषा कथातीव सुदुर्लभा। कंचित्कंचित्तरं

प्राप्ता नैव सर्वं नरं भुवि ॥ कश्चिदर्थे च यच्छब्दः इति वाक्यात्तथासती। कथा प्राप रमेशं यद्विषये सप्तमी मता ॥ (टी). (ii) यं कंचनासामान्यं कंचिन्नरं प्राप्ता न सर्वनरं भुवि 'कश्चिदर्थे च यच्छब्द' इति वाक्याद्यच्छब्दः किंशब्दार्थे। कुतः। यतः एषा कथा अतीव दुर्लभा।(टि). (iii) अथवा यं यमिति यच्छब्दद्वयं किंशब्दार्थकम्। तथा च इयं कृष्णकथा यं यं कंचित्कंचिदेव नरं इता प्राप्ता न सर्वनरमित्यर्थः। अतीवदुर्लभेति यावत्। अत्र या कृष्णकथा रमेशे विषये आप सा यं यमिति योज्यम्।(या). All this means that this story of Kṛṣṇa can reach or can be understood only by extra-ordinary beings or good souls. It cannot be understood by all. [*Read* also : **इयं कृष्णकथा यं यं**। अत्र एकस्य यच्छब्दस्य दितीयान्तत्वम्। अपरस्तु ईकाराकारप्रकृतिकः। तथा च ईकारवाच्यया श्रियायुक्तो यः अः अकार-वाच्यो विष्णुः तमिति तदर्थः। 'अकयप्रविसंभूतसक(ख)हा विष्णुवाचकाः' इत्यभिधानात्। विष्णौ रूढो वा यशब्दः। स इत्यध्याहार्यः। तथा च यं विष्णुं इता प्राप्ता यत्प्रतिपादका सः विष्णुः मया **आप** प्राप्तः। (अथवा स विष्णुः न कंचित्प्राप किंतु अस्मान् आप प्राप। अस्मास्वेव विशेष-सन्निधानकर्ता।)(या). That is, the poem deals with the story of Lord Viṣṇu and He is residing in Śrī Madhvācārya in a special manner.] V) **भक्तिमता** - Śrī Madhvācārya is full of devotion to Lord Kṛṣṇa and he has sung this poem out of that inherent and indepth devotion. तथा च भक्त्यैवोक्ता न तु चातुर्यख्यापनायेत्युक्तं भवति।(टि). VI) **परमेशे** - (i) उत्तम-स्वामिनि।(या.ना) The highest Lord, the object of devotion. (ii) पातीति पा। पा चासौ रमा च = परमा तस्याः ईशः - तस्मिन्। (वि). The Master of protective Goddess Lakṣmī, the object of devotion. VII) **सर्वोद्रेकात्** - This is explained in three ways by टी. and टि. - (i) Lord Kṛṣṇa is the highest among gods; (ii) Śrī Madhvācārya is the greatest among Lord's devotees; 3) Kṛṣṇa's story is the best among all stories. And it is connected with **सदानुता**. (i) सर्वोत्कर्षात्कथायाश्च कृष्णस्यात्मन एव च। शब्दराशिषु देवेषु भक्तेषु च यथाक्रमात् ॥ (टी). (ii) कीदृशी कृष्णकथा **सदानुता**

सदास्तोत्रा सुखतीर्थेन कथासु **आनन्दसद्विदा** = कथारसविवेकं जानता **सर्वोद्रेकात्** कृष्णस्य सर्वेषु देवेषु उद्रेकात् सर्वोत्तमत्वात्, तथा भक्तेषु **सर्वेषु** स्वस्य सर्वोत्तमत्वात्, तथा **कथासु** कृष्णकथायाः सर्वोत्तमत्वात्, **सदानुता** सदा सततं नित्यं स्तुता सती **सदा** नित्यं **रमेशे** रमेशविषये रमेशमुद्दिश्येति यावत्। **उत्** इता प्राप्ता।(टि). If this story of Kṛṣṇa is always recited, it will make one reach Lord Viṣṇu. VIII) **सदानुता** - (i) सदा नौतीति सदानुत् तेन सदा स्तोत्रा। अथवा कीदृशी कृष्णकथा सदानुता सदा स्तोत्रा सुखतीर्थेन (टि). By Śrī Madhvācārya who always sings the glory of Lord Viṣṇu. Lord Kṛṣṇa's story is always sung by good souls. [या. reads **सदा+नुवता** having no different meaning : **सदा** सर्वदा। **नुवता** नुः स्तोत्रं तन्नित्यमस्तीति नुवन् तेन **नुवता** स्तोत्रा।(या). And ब. and वि. explain by splitting as सद्+आनुता। (i) सद्भिरानुता = **प्रशस्ता** च।(ब). (ii) सद्भिः आनुता (णु स्तुतौ इति धातुः) (वि). Both mean Lord Kṛṣṇa's story is extolled by the good. IX) **आप** - This has been explained differently : A) (i) .... स मयाऽऽप न संशयः। अध्याहारस्स इत्यस्य यत्तदोर्नित्ययोगतः ॥(टी). (ii) स विष्णुर्मया **आप** प्राप्त इत्यर्थः।(भ). (iii) स विष्णुः मया **आप प्राप्तः**। (या). Lord Viṣṇu was realised by me, Śrī Madhvācārya. B) (i) एवं च आपेत्यस्य **परमेशे** तद्विषये सा कथा आपेत्यन्वयो बोध्य इति।(त). (ii) एषा च **रमेशे** विषयसप्तमीयम्। रमेशमिति यावत्। **आप** प्राप। तस्मिन् समर्पितेत्यर्थः।(भ). (iii) तथा चान्वर्थनामत्वादेव यं श्रीविष्णुम् **आप** प्राप्तेत्यर्थः मया समर्पिता तेनाङ्गीकृता चेति भावः।(ना). It means that कृष्णकथा has been submitted at कृष्णचरण. His story has been offered to Him and He has accepted it. C) ब. and वि. read **यं यं आनने इता (सः) रमेशे आप**। यं यमानने इता यस्य यस्यानने वर्तत इत्यर्थः। यं यमानने इता सः रमेशे आपेत्यन्वयः। भगवद्विषयं ज्ञानमाप्स्यत्येवेत्यर्थः। अवधारणगर्भस्य भविष्यतो योऽर्थः स एव भूतलकारस्यापि। 'एष्यत्तु निश्चितं यत्तदतीतत्वेन भण्यत' इति ह्यभिदधति।(ब). **रमेशे**- सामीपिकी सप्तमी वैषयिकी सप्तमी। भगवद्-विषयकज्ञानं प्राप्नोति। **आप** = भूतकालिक लिट् प्रयोगेन आप्तिनिश्चयः लभ्यते।(वि). It means that those who recite this कृष्णकथा

will definitely attain right knowledge of the Lord and also Liberation. [पादान्त्ययमक]

81) (पदच्छेदः) इति। नारायणनामा। सुखतीर्थ(र्थ)सुपूजितः। सु(ना)रायणाना मा। पूर्णगुण। (पूर्ण। गुणैः) अधिक। पूर्णज्ञानेच्छाभ(श)क्तिभिः। स्वधिक पूर्ण(र्णः)॥

This last verse contains a prayer : 'सुखतीर्थं मा अव' 'Protect me, named Ānandatīrtha, who has worshipped Lord Nārāyaṇa with knowledge, desire and devotion' The verse is explained as follows : 1) इति - Thus; in this manner. 2) नारायणनामा - Lord named Nārāyaṇa. 3) सुखतीर्थसुपूजितः - Worshipped well by Śrī Ānandatīrtha. (i) सुखतीर्थनामकेन मया सुष्ठु पूजितस्सन्।(या). (ii) उक्तप्रकारेण सुखतीर्थपूजितः आनन्दतीर्थेन वाग्यज्ञेनार्चितोऽसि। अस्तेरप्रयुज्यमानत्वेन गम्यमानत्वादप्रयोगः।(ना). 4) सुरायणना - O Supreme Person, the support of all gods. (i) रमाजशंकरोमादिसुराधारः परः पुमान्।(टी) (ii) सुराणामयनश्चासौ ना च स तथा।(टि). (iii) सु(न)रायणना सु(न)राणां रमाजशंकरादीनां अयनं आधारः स चासौ ना परमपुरुषश्च स तथोक्तः।(या). 5) पूर्णगुण - O Full of auspicious qualities. गुणैः पूर्ण तत्संबुद्धिः।(टि). 6) अधिक - O Superior to all. 7) पूर्णज्ञानेच्छाभक्तिभिः - O (Worshipped) through full and perfect knowledge, desire and devotion. सुसंपूर्णज्ञानेच्छा-भक्तिभिः।(टी). 8) स्वधिकपूर्ण - O Always praised by Brahmā, Vāyu and other higher gods. (i) स्वधिक ब्रह्मवाय्वादि-देववृन्दसुबोधन।(टी). (ii) स्वधिक नित्यं सर्वस्मादञ्जसाऽधिक। पूर्ण पि(पृ) पुरति ते पुरः तैर्नम्यते प्रह्वीभावेन स्तूयते स पूर्णस्तत्संबुद्धिः तात्पर्यमाह। ब्रह्मादिवाय्वादिदेववृन्दसुबोधनेति।(टि). (iii) स्वधिकपूर्ण अत्यन्तमधिकेषु ब्रह्मवाय्वादिषु पूर्ण तदन्तर्व्याप्त।(त). O Pervaded in Brahmā, Vāyu and other gods. (iv) स्वधिक सु अञ्जसा सर्वस्मादधिक। पूर्ण पूरः प्रवाहो ब्रह्मादिदेवसमूहस्तं नयति ज्ञापयतीति पूर्णः तेषां ज्ञानप्रदः। नयतेर्डः। उपपदान्तलोपश्च। अथवा पुरः पूर्णाः महान्तो ब्रह्मादयस्तेषां णं बलं ज्ञानरतिर्यस्मात्स पूर्णः। तस्य संबोधनमिदम्। अथवा स्वधिकपूर्णेति समस्तमेकमेव पदम्। स्वधिका ये

ब्रह्मादयस्तेषां पूरं समूहं नयतीति तथोक्तेत्यर्थः। यथोक्तं पूर्वटीकायां 'सर्वस्मादधिकाञ्जसा। स्वधिकब्रह्मवाय्वादिदेववृन्दसुबोधने'ति।(भ). [स्वधिक = The Supremest. पूर्ण = (i) Bestower of knowledge to gods; (ii) Bestower of strength of knowledge and bliss to gods; (iii) Extolled by superior gods like Brahmā, Vāyu and others. (v)] या. followed by ब. and वि. reads स्वधिकपूर्णः and explains : सुष्ठु अधिकाः ब्रह्मादयः तेषु पूर्णः सन्निहितः।(या). Pervaded in higher gods like Brahmā. That is, instead of vocative form we have nominative form. The verse has variant readings : I. (i) **सुखतीर्थ-सुपूजितः**।(या.) (ii) **सुखतीर्थं सुपूजितः**। (टी.टि.) सुखतीर्थं qualifies मां (अव). (iii) **अव कतीर्थं** (ब.वि.) (मां) आनन्दतीर्थं रक्ष।. II. **सुरायणना** (टि.टी.ब.वि.) अ) रमाजशंकरोमादिसुराधारः परः पुमान्।(टी). **आ)** सुराणाम-यनश्चासौ ना च स तथा।(टि). इ) सुराणामयनो ना - परमपुरुषः (ब). ई) **सु(न)रायणना** सु(न)राणां रमाजशंकरादीनां अयनं आधारः स चासौ ना परमपुरुषश्च स तथोक्तः।(या). The Lord is the Support of all gods and is the Highest Person. [नरायण = Support of all human beings.] III. **पूर्णगुणाधिक** (i) पूर्णगुण+अधिक।(टी). अ) पूर्ण सर्वगुणैर्नित्यं सर्वस्मादाधिकाञ्जसा।(टी). आ) पूर्णगुण गुणैः पूर्ण तत्संबुद्धिः।(टि). (ii) **पूर्ण+गुणैः+अधिक**।(या) हे **गुणैः पूर्ण** आनन्दादि-गुणभरित। हे **अधिक** सर्वोत्तम।(या). (iii) पूर्ण गुणैर्धिक। (ब.वि.) पूर्ण = परिपूर्ण; धिक = सर्वोत्तम, पूर्णज्ञानेच्छाभक्तिभिः गुणैः।(वि) धिक = अधिक (ब.) There is no much difference in meaning. The Lord is full of auspicious qualities. Or, The All-full God is worshipped by all qualities like knowledge, desire and devotion. IV. Only ना. reads **पूर्णज्ञानेच्छाशक्तिभिः** instead of **पूर्णज्ञानेच्छाभक्तिभिः** without much difference in meaning. It is a pertinent point to note that the term **अव** might not have been explicit in the original verse if we closely read the commentaries. According to these, the verb 'अव' is to be understood as implied : (i) **सुखतीर्थं** आनन्दरीर्थं **मा** मां एवमेव = अनादि(त)कालमारभ्यैतत्कालपर्यन्तं यथा तथैव सदा अनवधिकोत्तरकालेऽपि **अव** रक्षेति योग्यक्रियाऽध्याहारः।(टि).

(ii) **सुखतीर्थसुपूजितः** सुखतीर्थनामकेन मया सुष्ठु पूजितस्सन्। **मां। अव** रक्षेति (श्लो.७४) पूर्वेणान्वयः। (या) [या. adds also : (सुखतीर्थ-पूजितइत्यत्र अवकतीर्थपूजित इति पाठे अव। कतीर्थपूजित इति च्छेदः। कं सुखं केन काय तीर्थं यस्य स कतीर्थः वा तेन मया पूजितस्सन् ज्ञानेच्छाभक्तिभिर्विशिष्टं मामवेत्यर्थः।(या)] It is interesting to note that ना. mentions and rejects the opinion of ancients (त) according to which सुरायणनामा should be split up as सुरायण+ना+मा and ना should be converted into अव – प्राञ्चस्तु - सुरायण, ना, मा इति पदानि। हे **सुरायण** सकलदेवताश्रय। इति **सुखतीर्थपूजितः** सन् मा इति मां। **अव** रक्ष। यद्यप्यत्र अवेति पदं नास्ति तथापि न अ इति पदयोर्व्यत्यासः कार्यः। तेन अनेति भवति। ततस्तृतीयोऽतिशये इति तं परित्यज्य पवर्गतृतीयो बकारः नस्य स्थाने भवति। बवयोरभेदात् अवेति निष्पद्यते इति व्याचक्रुरिति केचित् (तिम्मण्णभट्टाः। ल.टि) टीकाकृतां भावं वर्णयन्ति। [i.e., ना=न+अ=अन=अब=अव] तन्न। क्लिष्टत्वात्। तत्र 'आनन्दतीर्थं मामव मे प्रभो' इति मामवेति पदद्वयं दृश्यते। तेन सुरायण। ना। मा इति पदच्छेदः प्रतीयते। तथा च सर्वदेवाधार **ना** परमपुरुषस्त्वं मा इति मां अवेत्यध्याहार इत्यभिप्रेत्यैव तथा व्याख्यानात्। अत एव 'रमाजशंकरोमादिसुराधारः परः पुमानि'ति टीकाक्षराणि। ना इत्यस्य न अ इति विच्छिद्य व्यत्यासाश्रयणे परः पुमानिति व्याख्यानं न स्यात्। तस्मादवेत्यध्याहारेणैव तथा व्याख्यातमिति अखिलमतिमङ्गलम्।(ना). Accordingly त. understands that अव is explicit according to टी; but ना. argues that अव is implicit according to the same टी. Further टी. states सदा हरिपूजायै सेवेच्छा मारुतस्य यत् and this is explained by टि. as a reply to a possible doubt : ननु सुखतीर्थेन जीवन्मुक्ताधिपेन एकान्तभक्तोत्तमेन मामवेति कथं प्रार्थ्यते इति अतस्तदभिप्रायमाह यत्सदेति। मारुतस्य मरुत्पुत्रस्य पूर्णप्रज्ञाचार्यस्य सदा हरिपूजायै सेवेच्छा यद्यस्मात्तत्स्मादवनप्रार्थनं युक्तमित्यर्थः।(टि). The doubt raised is - "How can Śrī Madhvācārya, the foremost devotee, pray to be protected by the Lord ?" The reply is - "This prayer indicates the eternal desire of Śrī Madhvācārya to serve one and only God by name Nārāyaṇa." भ. also comments : अत्र इच्छा नाम

हरिपूजेच्छैव विवक्षिता। ना. discusses the topic of the फल of this कृष्णकथा. It also explains the verse in a different way, without understanding the verb as 'अव' but as 'असि'. Hence it is given in full : नन्वेषा कथा भगवन्तं प्राप्नोतु तावता कर्तुरध्येतुर्वा किं फलम्। न च भगवत्प्रसाद एव फलम्। 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इति तद्वचनात् तस्य सकलपुरुषार्थरूपत्वात्पुरुषार्थसाधनत्वाच्चेति वाच्यम्। तस्य भगवत्पूजादिसाध्यत्वादित्यतः एतस्यापि वाचिकयज्ञरूपभगवत्पूजारूपत्वात् "इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः। वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥" इत्यादिना भगवत्प्रसादसाधनतावगमादेतस्य ग्रन्थस्य कर्तुरध्येतुरपि सकलपुरुषार्थावाप्तिरित्याशयेन ग्रन्थकरणस्य भगवत्पूजारूपत्वमपरोक्षीकृतभगवन्तं प्रति निवेदयति। इतीति। **हेऽधिकपूर्ण। ज्ञानेच्छाशक्तिभिः गुणैः पूर्ण।** अत्यन्तपूर्णा ये ज्ञानेच्छाशक्त्यादिगुणास्तैः परिपूर्ण। अत एव **स्वधिकपूर्ण** सुतरामधिकाः स्वधिकाः ब्रह्मादयस्तेभ्यः पूर्ण अत्युत्तम। अत एव गुणपूर्णत्वादेव **नारायणनामा** त्वं **सुरायणनामा सु** शोभनः **रा** धनं **सुराः सुरायः** अणनं प्राप्तिर्यया सा सुरायणना उत्तमवित्तदेवता महालक्ष्मीः तया **अमा** = सह लक्ष्मीसाहित्येन लक्ष्म्या धनदेवतात्वेन निर्देशात् तत्प्रसादादेवाध्येतारो धनादिसंपन्ना भवन्तीति सूचयति स इति। उक्तप्रकारेण **सुखतीर्थपूजितः** आनन्दतीर्थेन वाग्यज्ञेनार्चितोऽसि। अस्तेरप्रयुज्यमानत्वेन गम्यमानत्वादप्रयोगः। **ज्ञानेच्छामक्तिभिरि**ति पाठे ज्ञानेच्छामक्तिभिः पूजितोऽसीति योज्यम्। अतः प्रसन्नो भवस्येवेति भावः।(ना). [Note the change in the meaning of सुरायणनामा = सु (good) राः (nom. sing. of रै = wealth) सुरायः (gen. sing. of सुरै = of good wealth) अणनं (obtaining). (सुरै+अणना=सुरायणना). So, सुरायणना = Lakṣmī, Goddess of wealth. अमा = with. सुरायणनामा = Lord Viṣṇu always existing with Lakṣmī. Hence, when pleased He bestows wealth. Thus, the students of this कृष्णकथा obtain wealth through His grace. In fine, there is no need to understand अव as explicit or implicit as argued above] [*Read* also : (द्वितीयपादे नारायण ना मा इतिच्छेदः। हे नारायण दोषविरुद्धगुणाश्रय हरे। सुनारायणनामा सु समीचिनं अर्थाव्यभिचारि नारायणेति नाम यस्य सः। ना परमपुरुषः त्वं मा मामवेत्यर्थः।) (या)]. **[पादान्त्ययमक]**

---

## *Appendix – I*

## ना. on देवक्यन्ते (verse 5)

कदा **देवक्यन्ते**। दीव्यत्यक्षैरिति देवकः शकुनिर्मूलरूपदैत्यः। स स्वामी यस्येति देवकि द्वापरयुगं तस्यान्ते 'द्वापरान्ते कुरूद्वह' इत्युक्तत्वात्। 'कं शिरो जलमाख्यातम्' इति वचनात् कं जलं 'तृतीयोऽतिशये' (महा.व्या.) इति वचनात् किं अतिशयितजलं अन्ते यस्येति क्यन्तः क्षीरसमुद्रः ततः परस्य शुद्धोदकसमुद्रत्वात्। तस्मिन् **क्यन्ते**। कानि शिरांसि यस्येति **की**। ...सहस्रशीर्षा शेष इत्यर्थः। तस्यान्ते समीपे तदुपरिविद्यमान इत्यर्थः। ...पुनः किं निमित्तं **देवक्यन्ते**। देवकः पितृव्यः अस्यास्तीति **देवकी** कंसः देवक्याः पिता। इनिप्रत्ययार्थः सम्बन्धश्च पितृत्वरूपः **तस्यान्तो** नाशः सप्तम्यर्थश्च निमित्तम्। कंसवधनिमित्तमित्यर्थः। **देवक्याः** स्वभगिन्याः **अन्तो** यस्मादिति देवक्यन्तः अन्तश्चात्र प्रसक्तः 'भगिनीं हन्तुमारेभे' इत्युक्तत्वात् ईदृशः कंसः मशकार्थो धूम इतिवत्तदर्थमित्यर्थः। कीदृशे। **अनुकम्पनावदे** अनुकम्पनं कृपां अवद्यतीत्येतादृशे निष्करुण इत्यर्थः। तथा **वक्यन्ते** वबयोरभेदात् बकी पूतना वा तस्याः अन्तनिमित्तमित्यर्थः। ...अथवा अक्षैर्दीव्यतीति देवकः शकुनिः स एव येषामस्तीति **देवकिनः** कौरवास्तेषामन्तार्थं 'कौरवाणां विनाशाय' इत्युक्तत्वात्। तथा **देवकी** युधिष्ठिरभार्या सा **अन्ते** समीपे यस्येति देवक्यन्तो युधिष्ठिरः। तन्निमित्तम्। 'पाण्डवानां हितार्थाय' इत्युक्तेः। देवश्चासौ कश्चेति **देवकः** मुख्यप्राणः। 'कः प्रजापतिरुद्दिष्टः को वायुरिति शब्दितः'। सोऽस्ति जनकत्वेन यस्येति **देवकी** भीमसेनः। देवैः स्तूयमानत्वाद् **देवकः** इन्द्रः। तज्जन्योऽर्जुनश्च **देवकी**। अल्पाख्यायां कप्रत्ययः अल्पौ देवौ **देवकौ अश्विनौ**। प्राक् नीचत्वाद्देवैः सोमपेभ्यो बहिष्कृतौ ततः शर्यातियज्ञे च्यवनभार्गवेण सोमपौ कृतौ। तत्सम्बन्धिनौ **देवकिनौ** नकुलसहदेवौ। कित निवासे रोगापनयने चेति धातोः कर्तरि डः। रोगापनायकौ **कौ** देवानां कौ **देवकौ** देवभिषजौ जनकौ ययोस्तौ **देवकिनौ** माद्रेयौ वा। तेषां सर्वेषामेकशेषः। तत्समीपे तदन्तनिवृत्त्यर्थं वा मशकार्थो धूम इतिवत्। तन्नाशे उपस्थिते वा जातः। पाण्डवानां हितार्थायेत्युक्तेः। कुत्सायां वा कप्रत्ययः। **कुत्सिता** देवा **देवकाः** तृतीयोऽतिशये। अत्यन्तमपभ्रष्टदेवताः दैत्या इत्यर्थः। तामसयज्ञादिभोक्तृत्वात्तेषाम्। देवान् किरन्तीति च। क्लृ **विक्षेपे**। अन्ते

तन्नाशार्थमित्यर्थः। 'दैत्यानां निधनाय च' इत्युक्तेः। देवान् देवं परमत्मानं वा कायन्ति प्रतिपादयन्तीति **देवकाः** वेदाः कै गै रै शब्दे। ...सोऽस्ति जनको यस्येति **देवकी** धर्मः। **तस्यान्ते** उपस्थिते सतीति वा 'धर्मसंस्थापनार्थाय' इत्युक्तत्वात्। **कीदृशे हरौ क्यन्ते** किनः पूर्णसुखाः लक्ष्म्यादिदेवाः तेषाम**न्ते** उत्तरावधिः सीमेत्यर्थः। ततोऽधिक**ः** पूर्णसुखः कोऽपि नास्तीत्यर्थः। **क्यं**। **ते**। इति **भिन्नं** वा पदम्। **ते** तव **क्यं** कं इन्द्रियं मनस्तन्नियम्यं तदीयेन केन चतुर्मुखेन वा नियम्यमिति भुवनविशेषणं वा। अथवा **स** हरिः **देवक्यन्ते** देवकीगर्भे यदाऽजनि तदा सुराः इति अवदन् इत्यन्वयः। किमिति हे **सदैवे देवकि**। ते **अन्ते** अभ्यन्तरे **भुवनं** हि। दैवेन परमात्मना सहिते देवकि त्वद्गर्भे सर्वं जगदस्तीत्यर्थः। विश्वंभरो हरिर्यदा गर्भे तदा सर्वमपि विश्वं तद्गर्भसंभृतमस्तीति तदा देवैर्गर्भस्तुतिः कृतेत्युक्तं भवति। तदुक्तं 'सा देवकी सर्वजगन्निवास-निवासभूता नितरां विरेजे' इत्यादि ॥

* *

## *Appendix – II*

# Detailed Explanation of verses 71 & 72

राम राम महाबाहो माया ते सुदुरासदा।
वाद सादद को लोके पादावेव तवासजेत् ॥७१॥

पदच्छेदः - राम। राम। महाब। अहो। माया। ते। सुदुरासदा। वाद। सादद। कः। लोके। पादौ। एव। तव। आसजेत्॥

जेत्सवातव वेदापाकेल्लोकोदद सादवा।
दासरादुसुतेयामाहोबाहा मम राम रा(राः) ॥७२॥

पदच्छेदः - जेत्। सवातव। वेदाप। आकेलोकोदद। सादव। अ। दासर। आत्। उसुतेयाम। आ(अ)ह। उवाह। आ। मम। राम। रा(राः)।

71) This verse is quite unique. When reversed it results into the next verse. According to B. the next verse (72) is not found in the Tuḷu manuscript as verse no. 72; it is found written at the end. But all commentators including Naraharitīrtha have commented on the said verse (72). According to ना. this 71st verse refers to all the ten well known (मत्स्य-कूर्म &c) अवतारs and also to हयग्रीवावतार and वेदव्यासावतार. At first, only other commentaries are followed in explaining the verse which interpret this verse as describing Lord Viṣṇu's incarnation as Rāma. (i) भगवन्तं रामं नित्यापरोक्षितं हनुमद्रूपस्वेष्टदैवतं स्तौति रामेति। न च वक्तव्यं रामायणव्याख्यानावसरोचितं रामस्तवनं इदं तु भारतव्याख्यानम् इति। अत एव पूर्वश्लोके मत्स्यादीनां प्रस्तुतिं चकार। न च विशिष्य रामस्तवने का पूर्वसंगतिरिति वक्तव्यम्। श्रीमन्महाभारते मार्कण्डेयसमाख्यायां रामकथाया अप्युक्तत्वात्।(टि) (ii) सर्वावताराणां स्वरूपं सामान्यत उक्त्वा (पूर्वश्लोके)

रामं विशेषतः स्तौति।(या)] (1) **राम राम** - These two रामs have different meanings : अग्निबीजं रमित्येतदामोऽपक्वोऽभिधीयते। क्रीडायां रम्वमोमानवर्जितश्चोच्यते यतः॥ दाहकाशेषदुःखा(दुष्टा)नां नित्यं तापत्रयोज्झित। क्रीडारूपाप्रमेयेति धन्यैः संबोध्यते हरिः॥(टी). This means : a) रं is अग्निबीजं and hence र means दाहक. आम means अपक्व or not ripe through devotion to Lord Viṣṇu, i.e. contaminated by sin, i.e. wicked. So र+आम means, one who burns or destroys the wicked. (रं अग्निबीजं तथा च रेत्यस्यार्थो दाहकेति। आमोऽपक्वः पापार्द्रः। दुष्टजनमनोदेहादीनां पाको हरिभक्त्यादिसंपादनम्। तदुक्तं 'क्षेत्राणि सस्यसंपद्भिः कर्षकाणां मुदं ददुः। ज्ञानिनामनुतापं वा विपत्तिं तदजानतामि'ति (भाग.१ स्कं.) तथा च आमानां अपक्वानां दुष्टानां र इति रामस्तस्य संबुद्धिः हे रामेति। अशेषदुष्टानां दाहक। (टि); र अग्ने दुष्टदाहकेति भावः। रः पुमान्पावके कामे मोक्षे वज्रे शरे घृते (घटे) इत्यभिधानात्।(त). b) आम = रोग = ताप = agony. So र+आम means destroyer of agonies of the devotees. [अथवा आमो रोगः तापरूपः तद्दाहक स्वभक्तानां तापत्रयनिवारक (टि)] c) र = दाहक; अम = अमेय = not subject to. The Lord is not subject to any burning agonies [अथवा रैः दाहकैः तापत्रयैः अम अमेय अविषयीक्रियमाण नित्यं तापत्रयोज्झितेत्यर्थः।(टि)] d) र = तापत्रय; आ = समन्तात् = from all sides; मा = निषेधः = absent. All types of agonies from all sides are absent or negated in the Lord. [अथवा राणां तापत्रयाणां आ समन्तात् मा निषेध उज्झितिर्यस्य स तथोक्तस्तत्संबुद्धिः हे राम। (टि)] e) रः = क्रीडाश्रयः = क्रीडारूपः = Sport-personified; अमः = मानरहितः = अपरिमितः = Unlimited. The Lord is of the form of sport and is Limitless in all aspects like bliss, knowledge, strength and so on [रमुक्रीडायामिति धातोः रमते सः रः क्रीडाश्रयः तत्संबुद्धिः रेति। गुणगुणिनोरभेदात् क्रीडारूपेति। माङ्माने न विद्यते मा मानं परिमितिर्यस्य सोऽमः। तत्संबुद्धिः अमेति। अप्रमेयेत्यर्थः। इति धन्यैः निरपेक्षैर्मुक्तामुक्तैर्ब्रह्मादिभिः संबोध्यते।(टि)] *Read also* : र अग्ने। रकारस्याग्निबीजत्वात्। दुष्टदाहकेति यावत्। आम अपाक। अत्र

पाकशब्देन तापो लक्ष्यते। तथा च अतापेत्यर्थः। तापत्रयपरिहर्तरिति (रहितेति) यावत्। रश्चासावामश्च रामः। रः क्रीडारूपः। अमः अप्रमेयः रश्चासावमश्च रामः। तस्य संबुद्धिः। र अमेति वा। (या). Accordingly (i) रः = दुष्टदाहकः = Destroyer of the wicked; (ii) आमः = तापत्रयपरिहर्ता (Remover of three-fold agonies) or तापत्रयरहितः (Devoid of three-fold agonies) (iii) रः = ~~क्रीडारूपः = Of the form~~ of sport; and (iv) अमः = अप्रमेयः = Impossible to be known fully. So, first रामः is रश्चासौ आमश्च and second one is रश्चासौ अमश्च; and राम is the vocative singular of रामः. Or, all can be taken as vocatives - र, आम, र and अम. (2) महाबाहो - राम रामेति तत्पश्चान्महाबेतिपदं भवेत्। महाबल महाज्ञान ततश्चाहो इतीरितम्॥ महाबाहो इतीत्थं वा॥(टी) It means : a) महाबाहो can be separated as महाब+अहो or can be understood as one compound word. In the former case अहो is an exclamatory word suggesting the sense of wonder and hence the Lord is addressed as अहो = आश्चर्यरूप = Wonderful. The word महाब has many meanings : (i) महाबः = महत् बं यस्य सः = महाबः = Possessor of formidable strength. Its vocative is महाब. (ii) महाबः = महावः = महत् वं ज्ञानं यस्य सः = Possessor of infinite knowledge. Its vocative महाब. If taken as one compound word, it can be dissolved as महान्तो बाहवो यस्य सः महाबाहुः (Long-armed); vocative singular is महाबाहो. Further it can be dissolved as महाबा(वा)नां अहो = An object of wonder for those who possess great strength or great knowledge. [हे महाब महावेति यावत्। बवयोः सावर्ण्यात् नामैकदेशग्रहणेन नामग्रहणमिति न्यायाच्च महाबलेति व्याख्यानम्। महत् बं बलं तथा वं ज्ञानं (वा गतिगन्धनयोरिति धातोः) वान्ति गच्छन्ति परं ब्रह्म येन तत् ज्ञानं, यस्मात्स तथोक्तस्तत्संबुद्धिः। अथवा विशेषबलेन षष्ठीसमाश्रयणम्। अहो आश्चर्यरूप। तथोक्तं गीतायां 'सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखमि'ति। अथवा महाबाहो महान्तो बाहवो यस्य स

तथा तत्संबुद्धिः। एवंभूत रामपदवाच्य।(टि)] (b) (i) **महाब** = **महाबल;** (ii) **महाब** = महाम = Of infinite knowledge; **(iii) महाब** = **महाव** = Of infinite knowledge; (iv) **महाबाहो** from **महाबाहुः। [महाब** महाबल। मबयोरभेदात् **महाम। महती मा ज्ञानं यस्य स महामः।** महाज्ञानेति वा। वबयोरभेदात् **महाव महाज्ञानेति वा। अहो हे इत्यर्थः। महाबाहो** इत्येकं पदं वा।(या)] (3) **माया ते सुदुरासदा** - मायेति महिमोच्यते। महिमा तव दुष्प्राप्या मुक्तैर्ब्रह्मेशपूर्वकैः।(टी). Your power is impossible to be attained by released souls including Brahmā and Rudra. (**ते माया मयं सामर्थ्यमुद्दिष्टमिति** वचनात् माया महिमा स्वातन्त्र्यादिरूपः सुदुरासदा **सुतरामासादितुमशक्या।** मुक्तैर्ब्रह्मेशपूर्वकैः **दुष्प्राप्या** इत्यर्थः।(टि) **ते** तव। **माया** महिमा। **सुदुरासदा** सु शोभनैः **मुक्तब्रह्मादिभिः दुरासदा दुष्प्राप्या** (या)] (4) **वादसादद** - ज्ञानदाखिलभक्तानां तेनैव स्वगतिप्रद। गतिगन्धनयोर्वेति तत्र घ्राणादिभोगद॥ साददामरशत्रूणां **सादो नाशस्तमोभिघः। वादस्य** साददाद्यापि विष्णोर्नुकमिति श्रुतिः॥ एवं **वक्तुं च** नालं यः **तमसौ** स कथं भवेत्॥(टी) It means : (i) **वादः** = **व+आ+दः**=ज्ञानं समन्तात् ददाति इति = He bestows knowledge on His devotees from all sides and in all ways. **सादः** = **साद + दः** = अवसादनं ददाति इति = He bestows destruction to enemies of gods. (ii) वादेन सादद = ज्ञानेन स्वगतिप्रद = **He bestows** befitting status in liberation, to His devotees, earned through His grace due to their knowledge (iii) **वादः** = **वा+आ+दः**=गन्धनं समन्तात् ददातीति = He grants enjoyment of pleasing fragrance in the state of release. [**तथा हे वाद** वं ज्ञानं आ समन्तात् ददाति तत्संबुद्धिः। **वादसादद** अखिलभक्तानां ब्रह्मादीनां ज्ञानं वादः तेनैव स्वयोग्यज्ञानेन सादद षद्लृविशरणगत्य-वसादनेष्विति धातोः सादो गतिः तां ददाति तत्संबुद्धिः स्वगतिप्रदेति यावत्। वा गतिगन्धनयोरिति व्याख्यानात् वं गन्धनं भोगः सुखादेः तं आ समन्ताद्ददातीति वा वाद तत्र = मोक्षसुगतौ घ्राणादिभोगदेति यावत्। सादोऽवसादनं तद्ददातीति तत्संबुद्धिः। अमरशत्रूणां तमोभिधनाशाद्। तदुक्तं 'निहता येन दानवा' इति। 'अथ च दैत्यहतिस्तमसि स्थिरे'ति (ता.नि.२-६५) व्याख्यानात्।(टि). **वाद** ज्ञानप्रद। स्वगतिप्रद। गन्धनप्रद।

उपलक्षणया घ्राणादिभोगदेति यावत्। वा गतिगन्धनयोरिति धातोः। **सादद** सादः विनाशः तमोभिधः। तथा च अमरशत्रूणां तमःप्रदेत्यर्थः। (या)] (iv) **वाद** = वचन and **सादद** = खेदद. It is impossible to describe Lord Viṣṇu fully and hence any **talk** (वाद) of His full description is quite painful (सादद). Rightly does the Vedic seer ask : 'विष्णोर्नु कं वीर्याणि प्रवोचम्।' (Who can dare to describe the glories of Viṣṇu ?). It means that even Goddess Lakṣmī cannot describe Him fully. He is beyond words. (अथवा वादस्य व्यक्तवचनस्य साकल्येन वचनस्य सादद खेदद। कस्मात्। विष्णोर्नु कमिति श्रुतेः। साकल्येन लक्ष्म्यादिभिरपि वक्तुमशक्येत्यर्थः।(टि) (v) Any dialogue or discussion (**वाद**) cannot deal *exhaustively* with Viṣṇu's description even partially. The dialogue will end; but not His description. Or, to be exact, He causes (द) the dialogue (**वाद**) to end (**साद**), but not the description. [वादसाददेत्येकं पदं वा। वादस्य वादकथायाः सादः अवसानः (संपूर्तिः) तत्प्रद। विष्णुविषये (गुरुशिष्ययोः) वादकथा केनापि साकल्येन कर्तुमशक्येति भावः।(या)] Following टी, टि adds : यन्महिमानं वक्तुमशक्यो जीवराशिः असौ **परमात्मा** कथं भवेत्। तस्मादैक्यवादो भ्रान्तिमूलः। It means that **when** no soul **can** describe the Lord *fully*, how can it identify with Him ? Hence the theory advocating identity between the soul and the Lord is illusory. This truth is strengthened by the following statement – **को लोके पादावेव तवासजेत्.** 5) **को लोके पादावेव तवासजेत्** - a) वशीकृतशिवाहीशवीशपूर्वश्चतुर्मुखः। पादावेवाश्रयेद्विष्णोः कस्ततोऽन्यस्तथाश्रयेत्॥(टी) b) Here कः is Brahmā who has under his control even Rudra, Śeṣa and Garuḍa. Such great god Brahmā resorts to the feet of Lord Viṣṇu with full and uninterrupted devotion. Others cannot resort with such uninterrupted devotion. Hence no soul can claim to be identical with the Lord. Or, कः can be understood as 'who'. Then it means : "Who,

except Brahmā, can resort to the Lord's feet with uninterrupted devotion ?" Because all others are विच्छिन्नभक्ताः or His devotees with interrupted devotion. [तत्र कैमुत्यमाह। **कः** करोति स्ववशे शिवादीनिति कः वशीकृतशिवाहीशवीशपूर्वश्चतुर्मुखः। **लोके** ज्ञानिवर्गे **तव पादावेव आसजेत्।** षज संगे आश्रयेत्। **लोके** तं **विना कः तव पादावेव आसजेत्** आश्रयेत् न कोऽपीत्याक्षेपार्थो वा कः। अन्ये विच्छिन्नभक्ताः इति भावः। अत एव भगवता ब्रह्माणं प्रति उक्तम् "न त्वामतिशयिष्यन्ति मुक्ता अपि कथंचन। मद्भक्तियोगाद् ज्ञानाच्च सर्वानतिशयिष्यसी"ति।(टि)] c) या. interprets understanding **कः** as Brahmā who is अच्छिन्नभक्त. [**आसजेत्** आश्रयेत्। अविच्छिन्नभक्तत्वात्। अन्यस्य त्वत्पादाश्रयणं छिन्नभक्तत्वान्नेति भावः।(या)] Here there is यमक in **राम राम**. And the reversal of the letters of this verse results into the next verse **जेत्सवातव**....

(72) This verse is also unique as it is formed by reversing the letters of the previous one. As said earlier this is not found in the Tuḷu manuscript, as verse no. 72. But all commentators have commented upon this verse; and hence it can be considered as a part of the *Yamakabhārata*. This verse also contains an address to Lord Rāma, "O Rāma, thou art my wealth." (राम मम राः।). All epithets describe the various glories of Rāma. The purport of this verse has been stated differently. According to some commentators this verse serves the purpose of refuting शाक्तसौरगाणपतस्कान्दशैवमतs or beliefs, each of which holds respectively Śakti, Sūrya, Gaṇapati, Skanda and Śiva as the supreme deity. [(i) शाक्तेयशैवकौमारसौरवैनायकान्यपि निरस्तानि।(टी). (ii) एवं स्तवनस्य फलमाह शाक्तेयेत्यादिना। श्रीनियामकोक्त्या शाक्तं, उवाहेति रुद्रनियामकोक्त्या पाशुपतं, रुद्रसुतस्कन्दगणपतिनियामकत्वोक्त्या स्कान्दं गाणपत्यं च, 'य आदित्यमन्तरो यमयती'ति श्रुतिबलात् नियम्यपङ्क्तिनिविष्टसूर्यनियामकत्वोक्तेरुपलक्षणया सौरं चेत्यनेन प्रकारेण दुर्मतानि

निरस्तानि भवन्तीत्यर्थः।(टि). (iii) अनेन श्लोकेन मूलरूपं भगवन्तं स्तुवन् तस्यावताररूपैरभेदं च साधयन् शाक्तसौरगाणपतस्कान्दशैवमतानि निराकुर्वन् तमेव प्रार्थयते।(ना). (iv) अनेन सौरमतं निराकृतमिति ज्ञातव्यम्। ... अनेन शैवस्कान्दगाणपतशाक्तेयमतानि निराकृतानीति ज्ञातव्यम्।(या)] According to भ. this verse refers to रामकथा which has been included in the *Mahābhārata* and hence in the म.ता.नि., and also refutes सौरमत. [अत्र ~~रमेति संबोधनेन भारत~~-तात्पर्यनिर्णयोक्ता रामकथापि संगृहीतेति ज्ञातव्यम्। तत्संक्षेपत्वादेतद्ग्रन्थस्य । ...सौरमतनिरासोप्यत्र साक्षादेव कृतो बोध्यः। (भ)] According to ना. this verse through different epithets qualifying the Lord gives the meaning of some of the ब्रह्मसूत्रs like जन्माद्यस्य यतः। (All this has been shown while explaining herebelow the different epithets). Now coming to the explanation of different epithets applied to Lord Rāma, the principal clause is **आ मम राम राः** - "O Rāma Thou art my wealth in all aspects". a) समन्तान्मम राम त्वं सुवित्तं नैव चेतरत्।(टी). b) हे **राम**, त्वं आ समंतात् **मम** राः सुवित्तं सावधारणत्वाभिप्रायमा(श्रित्य ?) तत्फलमाह। नैव चेतरत् इतरत् हिरण्यादिरूपं वित्तम् मम नैवेत्यर्थः।(टि). c) या. adds that by conveying that Lord Rāma alone is the wealth, Śrī Madhvācārya has suggested that he is also like Brahmā an अच्छिन्नभक्त. [(हे राम त्वमेव मम राः धनमित्यर्थः। श्रीरामस्यैवाचार्यद्रव्यरूपत्वकथनेन आचार्याणामपि ब्रह्मवद-च्छिन्नभक्तत्वं सूचितम्।)(या)] या. interprets a little differently by taking the alternative reading viz. आ मम राम रा [आ मम राम रेति पाठे आ मम राः अमर इति पदानि। तथा च हे अमर त्वं आ समन्तात् मम राः धनं। विष्णो त्वमेव मम धनं नान्यदिति भावः। (या)] All other words glorify Lord Rāma 1) **जेत्** = O All-conquerer [जेत् जि जये जयतीति जित् तत्संबुद्धिः जेत्। छान्दसोगुणः।(टि) जयतीति **जेत्** हे जेतः।(ना). सर्वजेतः।(या)] 2) **सवातव** - Motivater of the world possessing Vāyu. (सवातजगतो वर्तक।(टी). वातेन वायुना सहितं सवातं जगत् तद्वर्तयति

प्रवर्तयतीति सवातवः तस्य संबुद्धिः हे सवातव सवातजगतो वर्तक।(टि). वातेन मुख्यप्राणेन सहितं सवातं विश्वं **वर्तयतीति सवातवः** तस्य संबुद्धिः।(ना) वातेन मुख्यप्राणेन सहितं सवातं जगत् तत् वातयति प्रवर्तयतीति सवातवः तस्य संबुद्धिः हे सवातवेति।(या)]. ना. holds **जेत्सवातव** as one word also and explains as giving the meaning of the second ब्रह्मसूत्र viz. जन्माद्यस्य यतः. It is split into ज+इत्+सवात+व. It means ज stands for origin, इत् for motion or action or knowledge, सवात for all including Vāyu, and व for motivater. So the Lord is the controller of the origin, knowledge, action and the like of *prāṇa* and others [अथवा जायते उत्पद्यते तत् **जं** एति गच्छति चेष्टते अवगच्छतीति वा **इत्**। जं च तत् इत् च **जेत्**। जेत् च तत् **सवातं जेत्सवातं** तत् वर्तयति वातीति वा **जेत्सवातवः** प्राणादीनामुत्पत्तिप्रतीति-प्रवृत्त्यादेर्नियामक इत्यर्थः। एतेन 'जन्माद्यस्य' इति सूत्रार्थः उक्तः।(ना)] 3) **वेदाप** = Can be known only by the Vedas. (वेदैराप्यतेऽसौ वेदापः तस्य संबुद्धिः **वेदाप** आगमगम्यभाः।(टि) वेदगम्य।(या)]. या. gives two more meanings : (i) The Lord as Vyāsa protected the Vedas. So He is वेदाप=वेद+आ+प = Protector of the Vedas (ii) The Lord cannot be fully known through the Vedas. So He is वेदाप=वेद+अप. [(वेदान् आसमंतात् व्यासरूपेण पातीति वेदापः तस्य संबोधनमिति वा। प्यते गम्यत इति पः स न भवतीत्यपः वेदैः **अपः** वेदापः साकल्येन वेदागोचर इति यावत् तस्य संबोधनं वेदागम्येति **वा**।)(या)] According to ना. वेदाप suggests the meaning of the third ब्रह्मसूत्र viz, शास्त्रयोनित्वात्. (अनुमानतोऽन्ये न कल्पनीया इत्यर्थप्रतिपादकस्य 'शास्त्रयोनित्वादि'ति सूत्रस्यार्थमाह। **वेदाप** वेदेनाप्यते तस्य संबुद्धिः श्रुत्यैकसमधिगम्य।(ना)] 4) **आकेलोकोदद** = Here **आके** means both near (समीपे) and far (दूरे). Hence the Lord is both near and far away. That is, He is Omnipresent. And उदं means both knowledge (ज्ञान) and action (कर्म). Hence the Lord is the giver (दः) of both knowledge and action to people at large (लोक). [(i) आके दूरे समीपे च

लोकानां ज्ञानकर्मद।(टी). (ii) **आके** दूरे समीपे च। लोकानां उदं ज्ञानं तथा उदं कर्म उभे ददातीति लोकोददः तत्संबुद्धिर्लोकोदद। लोकानां ज्ञानद कर्मद।(टि)]. Both टी. and टि. have given the derivation of the word उदम् to mean both knowledge and action. [उदं कर्म तथा ज्ञानमुदेत्यवनमत्येतेन य(स)ज्ञनः।(टी). कथमुदं कर्म तथा ज्ञानमित्यत आह उदेत्यवनमज्ञन इति। अवनमज्ञनः अधः पतन्जनः उदेति ज्ञानेन **कर्मणा** च। तथा च उदेति उत्कृष्टो भवत्यनेनेति उदंमिति व्युत्पत्तिः।(टि)] Accordingly, the person sinking down due to sin rises up (उदेति) through knowledge and action and hence both are meant by the word उदम्. Or, उदेति=उत्कृष्टो भवति = becomes excellent through knowledge and action. According to या., उदम् means knowledge because liberation arises (उदेति) through knowledge. It does also mean action because knowledge arises (उदेति) through action [उदेत्यनेन मोक्ष इत्युदं ज्ञानम्। उदेत्यनेन ज्ञानमित्युदं कर्म वा।(या)] या. interprets आके as near to virtues and away from defects as well as from the world. [आके समीपे दूरे च। "आकं दूरसमीपयो-रित्यमिधानं।" दोषाणां जगतश्च **दूरे** गुणानां समीपे च स्थितेति शेषः। (आके सर्वजगदन्यसर्वदोषविरुद्धेति वा। सर्वगुणपूर्ण सर्वदोषाभाववन्निति वा।)(या)] And according to या. लोकोदद means 'O Lord, Giver of both knowledge and action to people'. [लोकस्य उदं ददातीति लोकोददः तस्य संबुद्धिः। (या)] ना. gives an altogether different interpretation. It states that आके suggests the sense of the fourth ब्रह्मसूत्र viz. तत्तु समन्वयात्, and that **लोकोदद** suggests the sense of the fifth ब्रह्मसूत्र viz. ईक्षतेर्नाशब्दम्. Accordingly, आके is the vocative singular of आकिः = आकः = **आ** कीयत इति = समन्तात् शब्द्यत इति = The Lord is expressed by all words including even words like 'Rudra' [ननु श्रुतावपि 'रुद्रो वाव लोकाधार' इत्यादिनाऽन्येषां कर्तृत्वं प्रतीषते इत्यतः तत्तु समन्वयादित्युक्तम्। तस्यार्थमाह हे **आके आ** समन्तात् **कीयते** शब्द्यतेऽसावाकः। कै शब्दे

इति धातोः आतोऽनुपसर्गे कः आकार एवायं निपातः न त्वाङुपसर्गः। तृतीयोऽतिशये स एव **आकिः**। तस्य संबुद्धिः। रुद्रादिशब्दैरप्यसावेवोच्यते। 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति।' 'यो देवानां नामधा एक एवे'त्यादेः। अतिशयार्थेनेकारेण सौत्रसंशब्दार्थः सम्यक्त्वरूपः उक्तः तेन मुख्यवृत्त्या शक्त्यैव सर्वशब्दवाच्यः इत्युक्तं भवति। (ना)] ना. clarifies the purpose of converting आकः as आकिः in अतिशयार्थ or sense of excellence. Here this sense of excellence suggests the sense of the word सम् of the *sūtra* and declares that Lord Viṣṇu alone is primarily denoted by all words. The word **लोकोदद**, according to ना. means : The word **लोक** = the knowledge of the Lord. Because of this knowledge, the Lord reveals His form to His devotees which results into their obtaining release. [ननु 'यतो वाचो निवर्तन्त' इति श्रुतेः कथमेतदित्यतः सूत्रं प्रवृत्तं 'ईक्षतेर्नाशब्दमि'ति। तस्यार्थमाह **लोकोदद** इति। लोचनं **लोकः** स्वविषयकं ज्ञानं। तेन लोकेन उददः लोकोददः तस्य संबुद्धिः। उत् निर्दोषश्चासौ अश्चेत्युदः 'तस्योदितिनाम' इत्यादिछन्दोगश्रुतेः अपहतपाप्मत्वादुच्छब्दवाच्यपरमात्मज्ञानिनोऽपहतपाप्मत्वरूपमोक्षप्राप्तिरुच्यते। एकान्तिनां तु तथाविधभगवत्प्राप्तिरेव पुरुषार्थ इति परमैकान्त-शिरोमणिराचार्यः स्वप्रार्थनायां तथैव संबोधयति। उच्छब्दवाच्यं मोक्षदातृत्व-वासुदेवाख्यं अकारवाच्यं स्वस्वरूपं भक्तेभ्यः प्रददातीति **उददः**। स्वात्मप्रदानमेव पवनस्य करोति। इदमुक्तं भवति। भगवदवलोकन-रूपापरोक्षेण तावन्मोक्षः श्रूयते। तच्चापरोक्षं 'श्रोतव्यो मन्तव्य' इत्यादेः श्रवणादिसाध्यम्। न घटापरोक्षादिवत् इन्द्रियसन्निकर्षमात्रेण। "नेन्द्रियाणि नानुमानं वेदाह्येवैनं वेदयन्ति" इति श्रुतेः। किन्तु श्रवणादिप्रणाड्यैवेति वक्तव्यम्। सर्वशब्दावाच्यस्य लक्षणयापि शब्दागोचरत्वात् तदर्थं शब्दवाच्यता अवश्यमङ्गीकर्तव्या, 'यतो वाच' इति श्रुतेः साकल्येनाप्रतिपाद्यत्वपरत्वेनोक्तेः तस्माद् ज्ञेयत्वान्यथानुपपत्त्यैव वाच्यत्वस्योपपन्नत्वादुक्तं युक्तमेवेति। 'ईक्षणीयत्वतो विष्णुर्वाच्य एव न चान्यथा' इति आह हि।(ना)]. 5) **सादव** = The Lord drives away (व) fear or destruction (साद) of His devotees possessing right knowledge and performing good deeds. [ज्ञानेन तेन भक्तानां सादस्य च निवारक

(टी). हे **सादव** तेन ज्ञानेन सत्कर्मणा च भक्तानां सादं = भयं नाशं वा वारयतीति सादवस्तत्संबुद्धिः।(टि) **सादव** सादस्य भक्तानां भयस्य व वारक निवारक।(या)] According to ना. it is **सादवा** and the meaning is : the Lord is not only the fulfiller of desires but is also the remover of the fear and misery. [न केवलमिष्टप्रदाता किं त्वनिष्टनिवारकोऽपि इत्याशयेनाह हे **सादवा** सादं अवसादं भयं च वारयतीति 'अथ सोऽभयं गतो भवती'ति श्रुतेः।(ना)]

6) **अ** - अ is a name of Lord Viṣṇu. ["Name of Viṣṇu (especially as the first of the three sounds in the sacred syllable om." - Monier Williams, *A Sanskrit - English Dictionary*; "A name of Viṣṇu, it is the first word in the mystic syllable ओम्, the other two being उ and म्-अकारो विष्णुरुद्दिष्ट उकारस्तु महेश्वरः। मकारस्तु स्मृतो ब्रह्मा प्रणवस्तु त्रयात्मकः॥" - L.R.Vaidya, *The Standard Sanskrit - English Dictionary*] But here the commentators have given more meanings of अ as describing Lord Viṣṇu : 1. सर्वदोषविरुद्धान्यसर्वस्माज्जगतः सदा। अभावाशेषदोषाणा(अभावदोषाशेषाणा)मित्यनन्तगुणाख्य भाः॥(टी). (ii) हे **अ** सर्वदोषविरुद्ध तथा सर्वस्माज्जगतः सदा अन्य। तथाऽशेषदोषाणामभाव इत्यनेन प्रकारेण 'अकारो वै सर्वावागि'ति श्रुतेः। तथा 'अकारः सर्ववागात्मा परब्रह्माभिधायक' इति स्मृतेश्च सर्ववागर्थभूतानन्तगुण आख्य = अकारवाच्य। भा इति संबुद्धिः। भगवन्निति पूज्येत्यर्थः॥(टि). अकारस्य च त्रयोऽर्थाः। विरुद्धत्वमन्यत्वमभावश्चेति। ततश्च सर्वदोषविरुद्धगुणपूर्ण, सर्वस्माज्जगतोऽन्य, ..... सर्वदोषाभाववन्नित्यर्थः। अथवा, अकारो भावाची। तथाचानन्तगुणाख्य भा इत्यर्थः। एवं वेदापेत्यत्रापि वेदापा इति दीर्घान्तं पदं विच्छिद्य वेदापो वेदगम्यः अः भाः यस्यासौ तथोक्तस्तस्य संबोधनं वेदापेत्यपि व्याख्येयम्। अत एव पूर्वटीकायां आगमगम्यभाः अनन्तगुणाख्यभा इति व्याख्यातम्।(भ). Accordingly, 'अ' has three meanings (I) विरुद्धत्व = opposed to; (ii) अन्यत्व = other than; and (iii) अभाव or absence. So Lord Viṣṇu, denoted by अ (अकारवाच्य), is (i) विरुद्ध or opposed to all defects; (ii) अन्य or other than the entire world; and (iii) has अभाव

or absence of all defects. It means that He is अनन्तगुणपरिपूर्ण or full of infinite number of virtues or auspicious qualities. Further अ also expresses भा or lustre or reverence. So Lord Viṣṇu is fully lustrous and पूज्य, worthy of supreme worship. [Here one must note that the reading of या. has only 'सादव' instead of 'सादवा' and hence अ is not commented upon by या. This is followed by TSR. वि. reads सादवा (सादव । अ) but does not give the meaning of अ. The ना. reads सादवा and has explained it as one word. But the टि, टी and भ. have read अ separately and have explained as above. भ. is more specific : "**व** वारक वृत्रो डः । **सादवेत्यनन्तरं अ** इति पदम्।" This reading as **सादवा** is correct because the reversal of the letters of the former verse should read as सादवा only and not as सादव] 7) **दासर** - Here it is **दास+र** and दास has two meanings दास = (i) भृत्य and (ii) दस्यु. Accordingly, there are two meanings of र as (i) रमयति and (ii) दहति. So दासर means (i) Delighter of servants and devotees; and (ii) Burner of demons and enemies [(i) दासो दस्युस्तथा भृत्यो रोऽग्निः क्रीडां चरन् यतः। दस्युदाहक भृत्यानां नित्यमेव रतिप्रद ॥ (टी). (ii) **दासस्य** दस्योर्वेत्य (शत्रु?)जनस्य **र** दाहक तथा **दासस्य** स्वभृत्यस्य ब्रह्मादेः **र** रमयतीति रः तत्संबुद्धिः। भृत्यानां नित्यमेव रतिप्रद।(टि). (iii) मध्यमभक्तानामिष्टं मोक्षभोगादिकमपि प्रयच्छतीत्याह हे **दासर** दासान् स्वभक्तान् रमयतीति। दासान् स्वभक्तानित्युक्तस्य व्यावर्त्यमाह **दासर** दास्यन्ति उपक्षिप(ण्व)न्ति ते दासाः दस्यवः ब्रह्मस्तेनास्तेषां र इव अग्निरिव दाहक इत्यर्थः।(ना). (iv) **दासर** दासाः दस्यवः तेषां र अग्ने दाहकेति यावत्। यद्वा दासाः भृत्याः तेषां र रतिप्रदेत्यर्थः।(या)] 8) **आत्** - आत् is taken as one single word and interpreted in three ways by टी. followed by टि. : (i) अत्तः = Devourer; (ii) अन्तःस्थ = Indweller; and (ii) आदेय = Obtained by noble souls. [आद् इत्यत्तर् (आदित्यात्तर्) अथान्तःस्थ तथाऽऽदेय महात्मभिः ॥ (टी). हे **आत्**

अत्तीति आत् तत्संबुद्धिः। हे अत्तरित्यर्थः। अथवा **आ** समन्तात् अन्तरित्यर्थः। तनोतीति (?) तत् अन्तःस्थेत्यर्थः। तथा च आदीयते उपादीयत इति **आत्** महात्मभिरादेयेत्यर्थः।(टि)] But भ. and या. split आत् into **आ+अत्** and state that the word suggests the refutation of सौरमत or the system which believes that the Sun, and not Viṣṇu is the supreme deity. Because, आ+अत् means 'Devourer of the sun-god.' [**आत्** इत्यत्र **आ अत्** इति पदं विभज्य नामैकदेशेन नामग्रहणमिति न्यायानुसारेण **आ** आदित्यस्य **अत्** अत्तरिति व्याख्याय सौरमतनिरासोऽप्यत्र साक्षादेव कृतो बोध्यः।(भ). आ अत् इति पदच्छेदः। तथा च आ आदित्यः तं अत्तीति **आत्** आदित्यभक्षक। अनेन सौरमतं निराकृतमिति ज्ञातव्यम्।(या)]
9) **उसुतेयाम** - This is split into **उ+सुत+ई+याम** where **उ** = Rudra; **उसुत** = Rudra's sons viz. Skanda and Gaṇapati; ई=श्रीः=शक्तिदेवता = Goddess Śakti; and **याम** = नियामक = Controller. Lord Viṣṇu is the Controller of Rudra, Skanda, Gaṇapati and Śakti and hence this word **उसुतेयाम** refutes the शैव, स्कान्द, गाणपत and शाक्तमतs. [(i) **उसुतेयाम** रुद्रोऽसावुकारार्थस्तु तत्सुतौ। कुमारविघ्नपावी(पौ ई)च श्रीरासां विनियामक॥ य आकाशमनस्तेजो यमयत्यन्तरः प्रभुः। इति श्रुतेर्मनःस्कन्दः श्रीस्तेजः खं विनायकः॥(टी). (ii) हे **उसुतेयाम** ओः रुद्रस्य सुतौ कुमारविघ्नपौ उसुतौ च ई च श्रीश्च ताः उसुतयः उसुतयं याम यच्छतीति यामस्तत्संबुद्धिः कुमारविघ्नपश्रीणां नियामकेत्यर्थः। 'यो मनसि तिष्ठन्नि'ति श्रुतेः। मनोभिमानिस्कन्दनियामक। 'यस्तेजसि तिष्ठन्नि'ति (बृ) श्रुतेः। 'तेजः परस्यां देवतायामि'ति तेजःशब्दवाच्यश्रीनियामकस्त-स्मात्प्रमितोऽयमिति भावः। (टि) (iii) **उसुतेयाम** उः रुद्रः तस्य सुतौ स्कन्दविघ्नेशौ ईः लक्ष्मीः शक्तिनाम्नी तासां याम नियामक। अनेन शैवस्कान्दगाणपतशाक्तेयमतानि निराकृतानीति ज्ञातव्यम्।(या)] ना. reads **आदुसुतेयाम** as one word and explains आ=पितामह as well as आदित्य; अत् = संहर्ता = Destroyer; उसुतेयाम = Controller of both Brahmā and Sūrya. Further ना. connects **आह** with **आदुसुतेयाम** and explains that **आह** means (i) हि or प्रसिद्धम् or well known. Or, (ii) stated by the scriptures.

[आदुसुतेयाम आः पितामहः। आदित्यश्च द्वयोरप्याकारवाच्यत्वात्। तौ अत्ति संहरतीति आत् तान् यमयति असौ आदुसुतेयामः। इति आह हि प्रसिद्धम्। श्रुतिराहेति वा। (ना)] But ना. seems to be wrong in holding आह to mean हि or इत्याह because when the verse abounds in vocatives addressed to Lord Rāma, आह should also be understood as a vocative as explained below. 10) आ(अ)ह. It means अहेय = unfit to be abandoned or अहीन = not inferior = superior to all. And so, as Lord Viṣṇu is not inferior to anybody and is superior to all others, He is unfit to be abandoned. That is, Lord Viṣṇu should be resorted to by one and all desiring one's welfare. [(i) (अ)आहाहीन तथा (या)हेय सर्वथैव शुभेच्छुभिः।(टी). (ii) हे आह ओ हाक् त्यागे इति धातोः आ समन्तात् न हीयते न सज्यते इति आहः तत्संबुद्धिः। सर्वथैव शुभेच्छुभिरहीनतया हीनत्वाभावेन अहेय स्वीकार्य। उपजीव्येत्यर्थः।(टि). (iii) अह हीयत इति हः स न भवतीत्यहः अहेय। अहीनेति वा।(या)] 11) उबाह - This refers to Lord Viṣṇu who had उ or Rudra as His vehicle (बाह=वाह). When Lord Viṣṇu had taken the form of Narasiṁha, Rudra having taken the form of a ram served the Lord by becoming His vehicle. Incidentally this refutes the शैवमत. [(I) उबाह नृहरे मेषरूपशंकरवाहन।(टी). (ii) हे उबाह उः रुद्रो वाहो वाहनं यस्य स उवाहः तत्संबुद्धिः। मेषरूपशंकरवाहन् 'नारायणः मेषरूपरुद्रवाहनं' इति प्रमाणम्।(टि). (iii) उबाह वबयोरभेदात् उः रुद्रः वाहः वाहको वाहनं यस्य स तथोक्तः तस्य संबोधनम्। हरिः कदाचित् मेषरूपशंकरारूढो जात इति पुराणप्रसिद्धिः।(या). (iv) उबाह = उवाह, वबयोरभेदात् उवाह नरसिंहरूपी हरिः कदाचिन्मेषरूपशंकरारूढो जात इति हि पुराणे प्रसिद्धिः। नरसिंहनामसूक्तः।(त).] वि. reads as उवाह instead of उबाह; but when the letters of the previous verse are reversed we get only उबाह and not उवाह. This verse is considered as an illustration of प्रत्यक्षरप्रतिलोमयमक wherein the reversal of the letters of a verse gives rise

